# काव्यप्रकाशः

(सोलह टीकाओं सहित)

डॉ० ज्योत्स्ना मोहन




नाग प्रकाशक

# काव्यप्रकाशः

डॉ० ज्योत्स्ना मोहन

PART III



नाग प्रकाशक

# काव्यप्रकाशः

[सङ्केतः; सङ्केतः (रुय्यकः) ; बालचित्तानुरञ्जनी; काव्यादर्शः; विवेकः; दीपिका; दर्पणः; साहित्यचूडामणिः; सम्प्रदायप्रकाशिनी; मधुमती; विस्तारिका; सारबोधिनी; काव्यप्रदीप; काव्यप्रकाशखण्डनम्; आदर्शः; सुधासागरः; संस्कृत व्याख्या समलंकृता ]

## तृतीयः खण्डः

**डा० ज्योत्स्ना मोहन**
श्रीलालबहादुरशास्त्री राष्ट्रियसंस्कृत विद्यापीठ,
नई दिल्ली-११००१६




**नाग प्रकाशक**
११ए०/यू०ए० जवाहर नगर, दिल्ली-११०००७

राष्ट्रिय संस्कृत संस्थान, नई दिल्ली के वित्तीय सहयोग से प्रकाशित ।



(१) ११ए/यू. ए. जवाहर नगर, दिल्ली-११०००७

(२) संस्कृत भवन, १२,१५ फ्लेट, संस्कृत नगर, प्लाट नं० ३, सेक्टर-१४,
रोहिणी, नई दिल्ली-११००८५

(३) जलालपुर माफी (चुनार-मिर्जापुर) उ० प्र०

ISBN : 81-7081-372-1

प्रथम संस्करण : 1998

मूल्यम् 122-00

श्री सुरेन्द्र प्रताप द्वारा नाग प्रकाशक, ११ए, यू. ए., जवाहर नगर, दिल्ली ११०००७, द्वारा प्रकाशित तथा जी. प्रिंट प्रासेस, ३०८/२, शहजादा बाग, दयाबस्ती, दिल्ली ११००३५ द्वारा मुद्रित ।

अक्षरयोजक :

**अमर प्रिंटिंग प्रेस,**

८/२५, विजय नगर, दिल्ली-११०००९

# विषयानुक्रमणिका

**पञ्चम उल्लासः**



**षष्ठ उल्लासः**

# अथ पञ्चम उल्लासः

**एवं ध्वनौ निर्णीते गुणीभूतव्यङ्ग्यप्रभेदानाह—**

**( सू०६६) अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम्।**

**सन्दिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम्॥ ४५॥**

**व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदाः स्मृताः।**

---

**सङ्केतः**

अथ मध्यमकाव्यभेदानाह—अगूढमिति। अगूढं अतिस्फुटम्। अनतिस्फुटं तु ध्वनेर्मार्गः। अस्फुटस्य च गुणीभूतता वक्ष्यते। सन्दिग्धतुल्यप्राधान्ये इति। वाच्यव्यङ्ग्ययोः प्रत्येकं चमत्कारकारित्वात्, सन्दिग्धे तुल्ये च प्राधान्ये—सन्धिग्धप्राधान्य-तुल्यप्राधान्यरूपं भेदद्वयं स्यात् इत्यर्थः।

**बालचित्तानुरञ्जनी**

एवं सप्रपञ्चस्योत्तमकाव्यस्य निरूपणानन्तरं मध्यमकाव्यस्य प्रपञ्चो युक्त इति चतुर्थपञ्चमयोरुल्लासयोः सङ्गतिं कथयितुमुत्तरसूत्रमवतारयति एवमिति। व्यङ्ग्योऽर्थो ललनालावण्यप्रख्यो यः प्रतिपादितस्तस्य प्राधान्येन उत्तमं काव्यं ध्वनिः। तस्मिन् निर्णीते गुणभावे च वाच्यवाचकत्वप्रकर्षे गुणीभूतव्यङ्ग्यो नाम मध्यमकाव्यभेदः अतादृशि गुणीभूतेत्यादिना सामान्येन लक्षितः। तस्य भेदान् विशेषानाहेत्यर्थः। अगूढं, अपरस्याङ्गं, वाच्यसिद्ध्यङ्गं, अस्फुटं, संदिग्धप्राधान्यं, तुल्यप्राधान्यं, काक्वाक्षिप्तं, असुन्दरं चेति मध्यमकाव्यस्याष्टौ भेदाः। अगूढस्य वाच्यत्वाभावान्मुख्यत्वमेव न गुणत्वमित्याशङ्कानिवारणार्थं गूढरसस्य मुखयत्वं सदृष्टान्तमाह कामिनीति। व्यङ्ग्यप्रतीतौ त्रयः प्रकाराः द्रुतत्वं मध्यमत्वं विलम्बितत्वञ्चेति। तत् गूढत्वं नाम मध्यमत्वम्। तदेव

**नान्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः।**
**अर्थो गिरामपिहितः पिहितश्च किञ्चित् (कश्चित्) सौभाग्यमेति मरहट्टवधूकुचाभः॥**

इति न्यायेन चमत्करोति। अतस्तदेव मुख्यमित्यर्थः। यदर्थमेतदुक्तं तदाह अगूढन्त्विति। यद्यपि वाच्यत्वं नास्ति तथापि अगूढं स्फुटतया वाच्यसदृशमिति गुणीभूतमेवेत्यर्थः। व्यङ्ग्यं वस्त्वलङ्काररसरूपतया

त्रिविधम् । तत्र वस्तुमात्रव्यङ्ग्यस्य अर्थान्तरसङ्क्रमितवाच्यस्य शब्देभ्यो वाच्यरूपवाक्यार्थापेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यत्वम् ।

**काव्यादर्शः**

व्यङ्ग्योऽर्थो ललनालावण्यप्रख्यो यः प्रतिपादितस्तस्य प्राधान्ये उत्तमं काव्यं ध्वनिरित्युक्तं, गुणभावे च वाच्यचारुत्वप्रकर्षे गुणीभूवव्यङ्ग्यो नाम मध्यमः काव्यभेदो, 'अतादृशि गुणीभूते' इत्यादिना सामान्येन लक्षितस्तस्य विशेषानाह-अगूढमिति ।

**विवेकः**

वृत्तिकारः सङ्गतिमुल्लासस्य करोति एवमिति । प्रागुक्तनयेन ध्वननं ध्वनिः, ध्वन्यते इति ध्वनिः । तस्मिन् ध्वनौ भेदप्रभेदसहिते निर्णीते निराकृतसमस्तविप्रतिपत्त्या युक्त्या निश्चयं प्रापिते क्रमप्राप्ता मध्यमकाव्यप्रभेदः । तानाह 'अगूढ'मित्यादि । भिदा इति भिदादित्वादङ् (पा. ३ ।३ ।१०४) । एवमगूढादिभेदेन गुणीभूतव्यङ्ग्यस्य ध्वनेरष्टौ भेदाः प्रकाराः स्मृता इति सम्बन्धः । तेनैतेष्वष्टसु व्यङ्ग्यस्य सद्भावेऽपि न ध्वनिव्यवहारः । यतश्चाप्रधानीभूतोऽयं ध्वनिः कविकाव्यं पवित्रयति ततः प्रधानीभूतस्य ध्वनेरात्मत्वं सुव्यक्तामित्युक्तं भवति । सन्दिग्धतुल्य [योः] परवर्तिना प्राधान्यशब्देन प्रत्येकमन्वयः, तेन सन्दिग्धप्राधान्यं तुल्याप्राधान्यश्चेति द्वौ भेदौ । उत्ताने साऽपि हि (रसाऽदि) रूपेण व्यङ्ग्यंप्रकाशते किन्तु गूढतां निधानवदपेक्षते तथा सति चारुत्वातिशयात् ।

**दीपिका**

उल्लाससङ्गतिमाह—एवमिति । ध्वनौ बहुधा भिन्ने निर्णीते विशेषलक्षणैर्निर्द्धारिते क्रमागतान् गुणीभूतव्यङ्ग्यस्य भेदान् । विशेषलक्षणान्याह—सहृदयहृदयैकसाक्षिकं गूढमङ्गमानुक्रम्येण चारुताप्रकर्षकम् । वाच्यसिद्ध्यङ्गं वाच्यसिद्धिनिदानम् । अस्फुटं सहृदयैरपि झटित्यप्रतीयमानम् । सन्दिग्धतुल्यपदाभ्यां प्राधान्यपदस्य प्रत्येकमन्वयः । काक्वाक्षिप्तं काकुबलात् झटिति वाच्यवत् प्रतीयमानम् । असुन्दरं चमत्काराप्रत्यासन्नम् । एतेषां च परस्परभेदो लक्ष्यदृष्ट्या सज्ञानः । एवमेभिरुपाधिभिर्लक्षणीभूतैर्गुणीभूतव्यङ्ग्यस्याष्टौ भिदा विशेषा लक्ष्यप्रसिद्धा अस्माभिः स्मृताः । स्फुटतया साधर्म्येण वाच्यायमानं सहृदयहृदये झटिति प्रतीयमानं व्यङ्ग्यं गुणीभूतमेव, वाच्यातिरिक्तचारुत्वराहित्यादिति शेषः । एवं तुल्यप्राधान्यादिष्वपि ज्ञेयम् ।

**दर्पणः**

वृत्तिकृदुल्लाससङ्गतिमाह एवमिति । निर्णीते भेदप्रभेददर्शनेन निश्चयं प्रापिते । अङ्गमप्रधानम् । वाच्यसिद्धेरङ्गं कारणम् । अस्फुटं सहृदयानामपि क्लेशप्रत्येयमिति हि गूढव्यङ्ग्याद्भेदः संदिग्धप्राधान्यं तुल्यप्राधान्यं च । काक्वाक्षिप्तं वाच्यवत् स्फुटीकृतम् । अत्यन्तवाच्याद्यर्थेष्वचमत्कारं व्यङ्ग्यमिति प्रतिपदान्वयः । भिदा विशेषाः । अस्माभिः पूर्वं उक्ता इदानीं स्मृताः ।

### साहित्यचूडामणिः

**नौमि सौम्यसमस्ताङ्गीं नित्यशुद्धां सरस्वतीम्।**
**त्रैलोक्यसौधकूटस्य स्फाटिकीं सालभञ्जिकाम्॥**

उल्लाससङ्गतिमाह—एवमिति।

उद्दिशति—अगूढमिति। एवमिति। व्यङ्ग्यार्थस्वभावाधीनोऽयं काव्यभेदः।

### सम्प्रदायप्रकाशिनी

उल्लासयोः सङ्गतिमाह—एवं ध्वनाविति।

अगूढमपरेत्यादि। स्मृताः ध्वन्याचार्येण। यद्धि वाच्यातिशायित्वेन निर्णीतं वस्त्वलङ्कारादिरूपं सावन्तरप्रभेदं व्यङ्ग्यं तद् यदा अगूढत्वादिना निमित्तेन गुणीभावं नीयते तदा अगूढव्यङ्ग्यमपराङ्गव्यङ्ग्यं वाच्यसिद्ध्यङ्गव्यङ्ग्यमस्फुटव्यङ्ग्यं सन्दिग्धप्राधान्यव्यङ्ग्यं तुल्यप्राधान्यव्यङ्ग्यं काक्वाक्षिप्तव्यङ्ग्यमसुन्दरव्यङ्ग्यमिति गुणीभूतव्यङ्ग्याख्यस्य मध्यमकाव्यस्य भेदाष्टकमुन्मीलयतीति कारिकार्थः।

### मधुमती

अवसरसङ्गतिं प्रदर्शयन्नाह—एवमिति। सामान्यलक्षणस्य प्रागेव कृतत्वात् विभागं विशेषलक्षणं चाह—अगूढमिति। सहृदयासहृदयवेद्यत्वं अगूढत्वम्। एतदेव व्यतिरेकमुखेनाह—कामिनीति। यदाहुः— **"नान्ध्रीपयोधर इवातितरां प्रकाशः नो गुर्जरीस्तन इवातितरां निगूढः। अर्थो गिरां अपिहितः पिहितश्च कश्चित् सौभाग्यमेति मरहट्टवधूकुचाभः"। इति।** अत एव—सहृदयैरपि यत्र दुःखेन प्रतीयते तत्र अत्यन्तगूढे अनुभावविभावयोः कष्टकल्पनत्वं रसदूषणतया वक्ष्यति। अत्र हि—अगूढापराङ्गयोः वाच्यसाधारणगूढत्वापराङ्गत्ववत्तया, वाच्यसिद्ध्यङ्गस्य वाच्योपसर्जनतया, अस्फुटसन्दिग्धतुल्यप्राधान्यकाक्वाक्षिप्तेषु वाच्यसमत्वेन, असुन्दरे च वाच्यनिरूपितनिकर्षवत्तया वाच्यनिरूपितव्यङ्ग्यप्रकर्षानाश्रयत्वमस्तीति बोद्धव्यम् एतच्च तत्र तत्र उदाहरणेष्वेव व्यक्ती भविष्यति।

### विस्तारिका

एवं भेदप्रभेददर्शनाय निर्णीते निश्चायिते प्रभेदान् प्रति नियतभेदानन्यूनानतिरिक्तानाह, ध्वनिभेदाभिधानानन्तरं तेषामेवाकाङ्क्षितत्वात्। अगूढमसहृदयैरपि झटिति संवेद्यम्, अपरस्य व्यङ्ग्यस्य वाच्यस्य वाङ्गमुत्कर्षकम्। वाच्यस्य वाक्यार्थस्य कुतोऽपि वैगुण्याद् विश्रान्तस्य सिद्धिर्विश्रान्तिरङ्गंनिदानम्। अस्फुटं सहृदयैरपि झटित्यसंवेद्यम्, सन्दिग्धं तुल्यं वा प्राधान्यं यस्य। प्राधान्यं चमत्कारिता। सन्दिग्धं वाच्यकृतं व्यङ्ग्यकृतं वेति न निश्चितम्। चमत्कारे वाच्यव्यङ्ग्ययोर्द्वयोरप्यङ्गत्वेन तुल्यता। काकुर्ध्वनेर्विकारः। तेनाक्षिप्तं झटिति प्रकाशितम्। असुन्दरं चमत्कारे वाच्यमुखनिरीक्षकम्। एवमगूढत्वादिभिरन्योन्यविलक्षणैर्धर्मैः गुणीभूतव्यङ्ग्यस्य काव्यभेदस्य अष्टौ भिदाः प्रकाराः, न तु वैजात्यानि, एकस्यैव काव्यस्यावच्छेदकभेदेनध्वनित्वाद् गुणीभूतव्यङ्ग्यत्वाच्च। अष्टा-

विति न्यूनाधिकसङ्ख्याव्यवच्छेदाय । तेनाप्राधान्यं सन्दिग्धतुल्यप्राधान्यञ्चेति मध्यमं त्रिविधं मतमिति निरस्तम्, उपाधिवैलक्षण्यस्य दुरुपलपत्वात् ।

## सारबोधिनी

अवसरप्राप्तं मध्यमं काव्यं लक्षयतीत्याह एवमिति । एवं भेदप्रदर्शनद्वारा अगूढम् असहृदयैरपि झटिति संवेद्यम् ।अपरस्य सव्यङ्ग्यस्य वाच्यस्य वा अङ्गमुत्कर्षकम् वाच्यस्य वाच्यार्थस्य कुतोऽपि वैगुण्यादविश्रान्तास्य सिद्धिर्विश्रान्तिरङ्गं निदानम् । अस्फुटं सहृदयैरपि झटित्यसंवेद्यम् । संदिग्ध तुल्यं वा प्राधान्यं चमत्कारिता यत्र । संदिग्धं वाच्यकृतं व्यङ्ग्यकृतमिति न निश्चितम् । चमत्कारे वाच्यव्यङ्ग्ययोर्द्वयोरपि अङ्गत्वेन तुल्यता । काकुर्ध्वनेर्विकारस्तयाऽऽक्षिप्तं प्रकाशितम् । असुन्दरं चमत्कारे वाच्यमुखनिरीक्षकम् । अष्टाविति न्यूनाधिकसंख्याव्यवच्छेदाय । तेनाप्रधानं संदिग्धंतुल्यप्राधान्यं चेति मध्यमं त्रिविधं स्मृतमिति निरस्तम् । उपाधिवैलक्षण्यस्य दुरुपायत्वेन परिभाषाकर्तुः स्वतन्त्रेच्छत्वात् । कामिनीति । कामिनीकुचकलशस्य गूढतानिबन्धनमेव चारुत्वं तथा व्यङ्ग्यस्यापि । एवमतिगूढतानिबन्धनमचारुत्वञ्च । अत एवास्फुटमपि गुणीभूतव्यङ्ग्यं, न ध्वनिः ।

तदुक्तम्—

**नान्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः ।**
**अर्थो गिरामपिहितः पिहितश्च किञ्चित्सौभाग्यमेति मरहट्टवधूकुचाभः ॥ इति ।**

## काव्यप्रदीपः

एवं ध्वनौ भेदप्रभेदाभ्यां निर्णीते गुणीभूतव्यङ्ग्यस्य भेदानाह—

**अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम् ।**
**संदिग्धतुल्यप्राधान्ये काक्वाक्षिप्तमसुन्दरम् ॥ १ ॥**
**व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भिदा मताः ।**

वाच्यापेक्षया अचमत्कारकारित्वेन व्यङ्ग्यस्य गुणीभावः । तच्च स्वत एवासुन्दरत्वेन, अगूढत्वादिविशेषणसप्तकेन वेत्यर्थः । अगूढं चासहृदयैरपि वेद्यम् । तादृशं वाच्यायमानतया न तथा चमत्करोति यथा कामिनीकुचकलशवद्गूढम् । एवमन्येष्वपि भेदेष्वनुभव एव साक्षी । अपरस्याङ्गमपरस्य रसादेः स्वनैरपेक्ष्येण लब्धसिद्धेरुपकारकम् । वाच्यसिद्ध्यङ्गं वाच्यस्य सिद्धिरेव यदधीना तत् । अस्फुटं सहृदयानामपि दुःखसंवेद्यम् । संदिग्धतुल्यप्राधान्य इति । संदिग्धप्राधान्यं तुल्यप्राधान्यं चेति द्वयमित्यर्थः । काक्वाक्षिप्तं यथा काक्वा विना वाक्यार्थ एव नात्मानं लभते तथा प्रकाश्यम् । काक्वा हठेनोपस्थापितमिति वा । असुन्दरं स्वभावादेव वाच्यापेक्षया अचारु ।

## काव्यप्रकाशखण्डनम्

अथ प्राचोक्तगुणीभूतव्यङ्ग्यभेदानाह—

**अगूढमपरस्याङ्गं वाच्यसिद्ध्यङ्गमस्फुटम्।**
**सन्दिग्धतुल्यप्राधान्ये काक्वाऽऽक्षिप्तसुन्दरम्॥ (सू. का. ४५)**

**व्यङ्ग्यमेवं गुणीभूतव्यङ्ग्यस्याष्टौ भेदाः स्मृताः। (सू० का० ४६, पृ०)**

**आदर्शः**

अगूढमित्यादि। सन्दिग्धप्राधान्यं तुल्यप्रधान्यञ्चेति द्वयम् व्यङ्ग्यमेवमिति, इत्यष्टविधं व्यङ्ग्यम, एवं सति तत्सम्बन्धाद् गुणीभूतव्यङ्ग्यकाव्यस्यापि भिदा भेदा अष्टौ इत्यर्थः। तत्र अगूढस्य गुणीभूतत्वमुपपादयति-कामिनीति 'गूढं' विदग्धैकवेद्यम्।

**सुधासागरः**

एवं ध्वनावित्यादि। एवं भेदप्रभेदाभ्यां ध्वनौ निर्णीते उत्तमकाव्ये प्रदर्शित इति यावत्, गुणीभूतव्यङ्ग्यस्य भेदानाह अवसरप्राप्तमध्यमकाव्यभेदान् दर्शयतीत्यर्थः।

वाच्यपेक्षयाऽचमत्कारित्वेनात्र व्यङ्ग्यस्य गुणीभावः। तच्च स्वत एवासुन्दरत्वेऽपि अगूढत्वादिविशेषणसप्तकेन चेत्यर्थः। अगूढञ्चासहृदयैरपि वेद्यम्। तादृशं वाच्यायमानतया न तथा चमत्करोति यथा कामिनीकुचकलशवत् गूढम्। किञ्चिद् गूढमिति यावत्। तदुक्तम्—

**नान्ध्रीपयोधर इवातितरां प्रकाशो नो गुर्जरीस्तन इवातितरां निगूढः।**
**अर्थो गिरामपिहितः पिहितश्च कश्चित् सौभाग्यमेति मरहट्टबधूकुचाभः॥ इति।**

एवञ्च कामिनीकुचकलशन्यायेन सहृदयैकवेद्यमेव व्यङ्ग्यं ध्वनित्वमुपयाति। सहृदयैरपि दुःखसंवेद्यम-सहृदयैरपि वेद्यं वेत्युभयमपि गुणीभूतव्यङ्ग्यमेवेति बोध्यम्। एवमन्येष्वपि भेदेष्वनुभव एव साक्षी।

अपरस्याङ्गम्। अपरस्य रसादेः स्वनैरपेक्ष्येण लब्धसिद्धेरुपकारकम्।

वाच्यसिद्ध्यङ्गम्। वाच्यस्य सिद्धिरेव यदधीना तत्।

अस्फुटम्। सहृदयानामपि दुःखसंवेद्यम्।

सन्दिग्धतुल्यप्राधान्ये इति। सन्दिग्धप्राधान्यं तुल्याप्रधान्यं चेति द्वयमित्यर्थः। काक्वाक्षिप्तम्। यया काक्वा विना वाक्यार्थ एव नात्मानं लभते तया प्रकाश्यम्। काक्वा हठेनोपस्थापितमिति वा।

असुन्दरम्। स्वभावादेव वाच्यापेक्षयाऽचारु।

---

कामिनीकुचकलशवत् गूढं चमत्करोति, अगूढं तु स्फुटतया वाच्यायमानमिति गुणीभूतमेव ।अगूढं यथा

यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचीव्यधव्यतिकरेण युनक्ति कर्णौ ।
काञ्चीगुणग्रथनभाजनमेष सोऽस्मि
जीवन्न सम्प्रति भवामि किमावहामि ।। ११३ ।।

अत्र 'जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्य ।

उन्निद्रिकोकनदरेणुपिशङ्गिताङ्गा
गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।
एतच्चकास्ति च रवेर्नवबन्धुजीव-
पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ।। ११४ ।।

अत्र चुम्बनस्यात्यन्ततिरस्कृतवाच्यस्य ।

---

सङ्केतः

यस्य । ममेत्यर्थः । काञ्चीत्यादेः स्त्रीरूपः इत्यर्थः । अत्र जीवतैव वक्त्रा जीवन् इति भणनात्, तत् पदं अनुपयुज्यमानतया बाधितार्थं सत्, प्राणधारणयोगात्किञ्चित्करत्व—सदविद्यमानत्व—जीवत्कार्याकारित्वाद्यर्थान्तरसङ्क्रमितवाच्यम् । अन्ये तु—जीवन् न भवामि इति वाक्यस्य, जीवतो वक्तुः उक्तौ सत्यां अनुपपद्यमानतया, अत्यन्ततिरस्कृतवाच्यतां आहुः । अत्र विक्रमरहितत्वस्य व्यङ्ग्यस्य झटिति प्रतीयमानतया अतिस्फुटत्वात् अगूढता । तेन व्यङ्ग्यस्य अप्राधान्यम् । गूढस्यैव चमत्कारकारित्वात् ।

चुम्बनस्येति । चुम्बिइतिपदं वक्तृसंयोगस्य अनुपपद्यमानतया अत्यन्ततिरस्कृतवाच्यं सत्, संयोगसाम्यात् उदयाचलसूर्यबिम्बसंयोगं लक्षयत् चारुत्वशोभावहत्वादिकं स्फुटमेव व्यनक्ति इति ध्वनेः अगूढता । अन्ये तु—चुम्बिशब्दः पादस्पर्शसम्भावनां लक्षयतीत्याहुः ।

## बालचित्तानुरञ्जनी

शत्रुकृततिरस्कारश्रवणानन्तरं कस्यचिद्राज्ञो वचनम्। असुहृदा शत्रुणा कृततिरस्कृतिः यस्य मे कर्णौ तप्तसूचीव्यधव्यतिकरेण युनक्तिः एष सोऽहं काञ्चीगुणग्रथनभाजनं स्त्रीरूपोऽस्मि। अतः सम्प्रति जीवन्न भवामि। किमावहामि किं करोमि? अस्मीत्यव्ययमहमर्थे अहंशब्दपर्यायो वा। अस्मिन् पक्षे एकाश्रयः। एतस्मिन् श्लोके प्रकृतोपयुक्तमतमाह अत्रेति। जीवन्न भवामीत्यनेन स्वार्थस्यानुपयुक्तत्वात् जीवत् कार्यकारणं लक्ष्यते। लक्षितेऽर्थान्तरे सङ्क्रमितवाच्यः शब्दः तस्य व्यङ्ग्यं विक्रमराहित्यं वस्तु अतिस्फुटत्वेनाप्रधानं वाच्यस्यैव चमत्कारित्वात्। झटिति पराक्रमरहितत्वं प्रतीयत इति अगूढव्यङ्ग्यमित्यर्थः। अथवा जीवन्न भवामीत्यनेन कष्टजीवनत्वं लक्ष्यते। मरणमेव श्रेय इति व्यङ्ग्यम्। शिष्टं समानम्।

## काव्यादर्शः

व्यङ्ग्यं च वस्त्वादित्रयम्। तत्र वस्तुमात्रस्य व्यङ्ग्यार्थान्तरंक्रमितवाच्येभ्यः शब्देभ्यो वाच्यरूपवाक्यार्थापेक्षया गुणीभावे सति गुणीभूतव्यङ्ग्यता, यथा 'यस्यासुहृद्' इति। यस्य 'इति' 'मे' 'काञ्चातिगुण' इति 'स्त्री' इत्यर्थः। अत्र 'जीवन्' इति स्वार्थस्यानुपयोगाद् जीवत्कार्याकरणलक्षणेऽर्थान्तरे संक्रिमतवाच्यस्तस्य च व्यङ्ग्यमतिस्फुटत्वेनाप्रधानं, वाच्यस्यैव चमत्कारकारित्वाद् झगिति पराक्रपरहितत्वं प्रतीयत इत्यगूढव्यङ्ग्यता।

'चुम्बनस्य' इति। चुम्बनं हि वक्त्रसंयोगः। स चानुपपन्न इत्यत्यन्ततिरस्कृतवाच्यत्वं चुम्बनेन पदस्पर्शसंभावनां लक्षयता हृद्यत्वं शोभावहत्वादि च स्फुटमेव प्रतीयत इत्यगूढता।

## विवेकः

अत्र दृष्टान्तमाह—कामिनीकुचकलसवदिति। यथाऽस्य रतिसर्वस्वायमानस्यापि गूढतानिबन्धनं चारुत्वं तथा शब्दवाच्यत्वेन गोप्यमानं सद्वयङ्ग्यमपि महार्घतामुपगच्छतीत्यतस्तद्वदस्यासाधारणप्रीतिलाभः प्रयोजनमित्युक्तम्।

यस्यासुहृदित्यादि—जीवन्न संप्रति भवामि, अपि तु मृतोऽहं सम्प्रति, अत एवाह किमावहामीति आङ्पूर्वो वहतिः करोत्यर्थः। अत्र जीवन्निति पदं भस्त्रिकावदुल्कासोच्छ्वास—(वदुच्छ्वास) मात्रधातृत्वपरमनुपयोगात्मिकया बाधया बाधितशुद्धयर्थं (मुख्यार्थ) —मभिमतनिभृतशक्तिमत्त्वादिधर्मान्तरेषु परिणमति। तच्च स्वोक्त्या विषयीकृतत्वाद्वाच्यवत् स्फुटं प्रतीयत इत्यगूढम्। वैतालिकः पठति उन्निद्रेति। अत्र चुम्बतीति पदेऽधरग्रहणलक्षणस्यार्थस्य (त्यन्त)-मसद्भावात्तज्झटित्येव संश्लेषोपक्रमलक्षणव्यङ्ग्यार्थप्रतीतिरिति ध्वनेरगूढता।

## दीपिका

यद्यपि कारिकायां प्रथमनिर्देशात् कामिनीत्यादिना च समनन्तरमेव व्याख्यानादगूढस्यैवेदमुदाहरणमिति लभ्यते, तथापि निःसन्देहाय पुनरुक्तिरगूढं यथेति।

शरणागतस्य तप्तशलाकया कर्णवेधनं देशचार इति सम्प्रदायव्याख्या। ग्रथनभाजनं ग्रथने नियुक्तः। आवहामि करोमि। अत्र 'जीवन्न भवामि' इत्यस्य जीवत एव वचनाद् बाधिते स्वार्थे सहायादिसम्पद्विरहेण जीवनगतमश्लाघ्यत्वं लक्ष्यते। तदतिशयश्च व्यङ्ग्यः सर्वजनसंवेद्यप्राय इति गोपनकृतसौन्दर्यहीनः।

एषां चाष्टानामपि प्रत्येकं ध्वनिनयेन यथादर्शनं भेदो बोद्धव्य इति वक्ष्यमाणरीतिमनुसृत्योदाहरणान्तरे आह—उन्निद्रेति। अत्रासीदति वदनसंसर्गरूपं चुम्बनमत्रासम्भाव्यमिति रभससंसर्गमात्रं लक्ष्यते। एवं गायन्तीत्यपि ध्वननमात्रम्।

### दर्पणः

आवहामि करोमि। अत्र जीवन् न भवामीति जीवन इति वचनात् बाधितश्चार्थः अश्लाघ्यजीवनत्वं लक्षयति। तदतिशयश्च वाच्यवत् सर्वजनगोचर इत्यगूढः। अस्य च व्यङ्ग्यस्य वाच्याधिकारत्वाभावात् गुणीभूतम्। एवं तुल्यप्राधान्यादिष्वपि ज्ञेयम्। वदनसंसर्गरूपस्य चुम्बनस्य प्रकृतेऽसंभवात् संसर्गमात्रं लक्ष्यते।

### साहित्यचूडामणिः

कोऽयं व्यङ्ग्यस्य गूढतायां निर्बन्ध इत्याह—कामिनीति।

अगूढतायामनौचित्यमाह—अगूढं त्विति। वाच्यायमानं वाच्यवदाचरत्। तद्वा तादृग्वेति न कश्चिद् विशेषः। यदाह—

**संवृत्याभिहितं वस्तु यत्रालंकार एव वा।**
**काव्याध्वनि ध्वनिर्व्यङ्ग्यप्राधान्यैकनिबन्धनः॥ ध्व० ३.४२ सं०॥ इति।**

**मुख्या महाकविगिरामलङ्कृतिभृतामपि।**
**प्रतीयमानच्छायैव भूषा लज्जेव योषिताम्॥ ध्व० ३.३०॥**

इत्युपमयाप्येतत् प्रकाश्यते। गोपनासारसौन्दर्यानुप्राणनत्वं हि तत्र साधर्म्यम्।

यस्येति। अत्र जीवन्नित्यर्थान्तरसंक्रमितवाच्यस्यागूढत्वम्। स्ववचने बाधितमुख्यार्थं जीवत्वं पौरुषवत्तायां परिणमितम्। एकार्थसमवायः संबन्धः। बहिर्यात्रा विधेयेति व्यङ्ग्यम्। अस्य चागूढत्वं स्पष्टं वाच्यवन्निश्चमत्कारत्वात्। तद्वशाच्च तद्वतः काव्यसय् गुणीभूतव्यङ्ग्यत्वम्। वस्तुमात्रादित्रयेऽपि गुणीभूतव्यङ्ग्यत्वमस्ति। तद् यथायोगमवगन्तव्यम्।

उन्निद्रेति। चुम्बनं हि कामिमिथुनादिविषयो वक्त्रसंयोगः, तदचेतनानां न सम्पद्यते; दूरे शैलशृङ्गसूर्यबिम्बयोरित्यत्यन्ततिरस्कारः। तेन च संयोगमात्रं लक्ष्यते, सामान्यविशेषभावः सम्बन्धः। कालावस्थानिवेदनं व्यङ्ग्यम्। तच्च वाच्यायमानत्वाद्गूढम्। यदाह—

**अव्युत्पतेरशक्तिर्वा निबन्धो यः स्खलद्गतेः।**
**शब्दस्य स च न ज्ञेयः। सूरिभिर्विषयो ध्वनेः॥ ध्व. २.३२॥**

इतरथा नेयार्थत्वं गुणीभूतव्यङ्ग्यता वेति कारिकार्थः।

### सम्प्रदायप्रकाशिनी

तदेतद् व्याचष्टे—कामिनीकुचकलशवदित्यादिना। वाच्यायमानमितीति। इतिर्हेतौ। स्फुटायमानत्वाद् वाच्यकल्पस्य गुणीभाव एव। अगूढं यथेति। साहचर्येणोद्दिष्टस्य प्रतियोगिनो गूढस्य व्यावृत्त्यर्थमगूढमिति प्रकृतस्य सतोऽपि पुनरुपादानम्।

यस्यासुहृदिति। कृततिरस्कृतिः, कृता तिरस्कृतिरनेनेति विग्रहः। जीवन्न भवामि न जीवामीत्यर्थः। अत्र जीवन एव न जीवामीत्युक्तिर्मरणसध्रीचीनदारुणदुःखरूपे स्फुटतरे अर्थान्तरे संक्रामति। अतोऽर्थान्तरसंक्रमितवाच्यस्येहागूढता।

उन्निद्रेति। अत्र चुम्बीत्यतो बिम्बस्योदयाचलस्पर्शरूपमर्थान्तरं पर्याकल्पतया प्रतीयत इत्यत्यन्ततिरस्कृतवाच्यस्येहागूढता।

### मधुमती

यस्येति। सः एषः अहं सम्प्रति जीवन् भवामि, न किमावहामि न किं करोमीत्यर्थः। आक्षेपे किंशब्दः। एवं च जीवन्पदं कष्टजीवने पर्यवसितम्। मरणमेव श्रेयः इति व्यङ्ग्यम्। तच्च अगूढम्। न त्वत्र जीवनार्थेन नञन्वयः। प्रकृतोदाहरणत्वविरोधात्। इयं च विराटनगरप्रच्छन्नस्य अर्जुनस्योक्तिः।

अत्रेति। चुम्बनस्य बाधात् संयोगसामान्यं लक्ष्यते। सामान्यविशेषभावः सम्बन्धः। व्यङ्ग्यं अगूढमतिशेषः। तत्रापि अगूढत्वं स्फुटम्।

### विस्तारिका

कामिनीत्यादि। कामवत्याः कुचकलसो नाविदग्धेषु विदग्धेष्वेव यथा प्रकाश्यते तद्वत्। तदुक्तम्—

**नान्ध्रीपयोधर इवातितरां प्रकाशो**
**नो गुर्जरीस्तन इवातितरां निगूढः।**
**अर्थो गिरामपिहितः पिहितश्च कश्चित्**
**सौभाग्यमेति मरहट्टवधूकुचाहभः॥ इति।**

अपिहितो विदग्धेषु पिहितस्तदन्यत्र। अगूढं यथेति।

अगूढस्य सूत्रे प्रथममुपादानात् तस्यैव विवरणाच्च लक्ष्यत्वे प्राप्तेऽगूढं यथेति पुनरुपादानं सुगमत्वायेति यदाहुः, तन्न; सूत्रविवरणयोरगूढस्योपाधेरेवोपादानदुपधेयस्यैव लक्ष्यत्वात्, अतो भेदेन पौनरुक्त्याप्रसङ्गात्।

यस्येत्यादि। किङ्करोषीति सुहृदा पृष्टस्य निर्विण्णस्य कस्यचिदियमुक्तिः। असुहृदित्यन्योन्याभावस्य व्याप्यवृत्तित्वेनाजन्मविपक्षतिरस्कृतिः। कर्णौ युनक्तीत्यन्वयः। शरणागतस्य तप्तशलाकया कर्णवेधनमिति पाश्चात्त्याचारः। शरणापादानद्वारा कर्णवेधे तिरस्कृतेरेव हेतुत्वात् झटिति सम्पादनादेवेत्यस्येत्युक्तम्। गुणेनो-

त्कर्षेण यद् ग्रथनं तत एव 'नियोजकचित्तरञ्जनं स्यात् । स एष ऐश्वर्याद् भ्रष्टो निकृष्टतामापन्नः, सम्प्रति न तु पुरा । आवहामि करोमि ।

जीवन्नितीति । जीवतो जीवनाभाववेदने बाधः । श्लघ्यजीवित्वं लक्ष्यतावच्छेदकम्, तदभावेन कष्टजीवित्वावगमः । अनुतापादेव जीवनं निन्दतीत्यनुतापातिशयः सर्वजनसंवेद्यत्वादगूढः । ये तु कष्टजीवित्वं लक्ष्यतावच्छेदकं वदन्ति, ते न विदन्ति, नञः सम्बन्धे श्लाघ्यजीवित्वावगमप्रसङ्गात् । न च नञस्तात्पर्यग्राहकत्वं सार्थकत्वे सम्भवति, निरर्थकत्वस्याकल्प [नात्] नीयत्वात् । शक्यस्यैव [श्लाघ्यजीवित्वस्यैव] लक्ष्यत्वे नार्थान्तरसंक्रमः ।

अत्रागूढे काव्येऽर्थान्तरसंक्रमितवाच्यस्य व्यङ्ग्यमुपाधिरूपमगूढमिति सौत्रव्यङ्ग्यागूढपदाभ्यामन्वयः । एवमुत्तरत्रापि ।

उन्निद्रेति । उन्निद्रमुत्फुल्लम् कोकनदं रक्तोत्पलं कृष्णेष्वङ्गेषु रक्तरेणुसम्बन्धात् पिशङ्गता । गायनानामङ्गेषु पटवासग्रहणाज्जातिः, मधुपत्वेन मत्तता, गोष्ठीबन्धेनैव मधुपानमिति बहुवचनम् । मञ्जु मनोहरम् । मत्तानां यथा तथा गानं मनोहार्य्येव । मत्तानां पानमित्यपि जातिः । दीर्घिका भ्रमराणां गृहाः । सदा सन्निहितत्वान्नवानां प्रत्यग्राणां पुष्पविशेषाणां किञ्जल्कानां नानावर्णत्वेन च्छदानमतिरक्तत्वाद् विशिष्याभिधानम् ।

अत्रेति । चुम्बनस्य वक्त्रसंयोगाविशेषस्य रवेर्बिम्बे बाधात् संयोगे लक्षणा, तस्य च मन्मथोद्दीपकत्वं व्यङ्ग्यं द्राक् प्रतीतेरगूढः ।

## सारबोधिनी

यस्यासुहृदिति । बृहन्नलादशायामर्जुनस्य वाक्यमिदम् । आवहामि करोमि । शरणागतस्य तप्तशलाकया कर्णवेध इति देशाचारः । जीवन्न भवामीति जीवने जीवनाभावबोधने बाध इति लक्षणा, अश्लाघ्यजीवितत्वं लक्ष्यतावच्छेदकम् । नञा तदभावबोधनेन कष्टजीवितत्वं प्रतीयते ।

केचित्तु—कष्टजीवितत्वमेव लक्ष्यतावच्छेदकम् । न च तथा सति नञा तदभावबोधनेऽसङ्गतिः स्यादिति वाच्यम् । नञस्तथाविधतात्पर्यमात्रग्राहकत्वात् । अस्मिन्मरणमेव श्रेय इत्यनुतापातिशयो व्यङ्ग्यः । स च सर्वजनवेद्यत्वादगूढ एव ।

उन्निद्रेति । कोकनदं रक्तोत्पलम् । अत्र चुम्बनस्येति । वक्त्रसंयोगस्य बाधितत्वात् । संयोगे लक्षणा । संयोगत्वेनापि तद्व्यक्तेरनन्वयादत्यन्ततिरस्कृतवाच्यत्वम् । व्यङ्ग्यश्च प्रातःकालारम्भो वाच्यवत् प्रतीयत इत्यगूढः ।

## काव्यप्रदीपः

तेष्वगूढं यथा—

'यस्यासुहृत्कृततिरस्कृतिरेत्य तप्त-
सूचीवधव्यतिकरेण युनक्ति कर्णौ ।'

**काञ्चीगुणग्रथनभाजनमेष सोऽस्मि**
**जीवन्न संप्रति भवामि किमावहामि ॥**

अत्र जीवन्नित्यभिमतकार्यशक्तत्वे संक्रमितवाच्यम् । तस्य च मरणमेव श्रेय इति व्यङ्ग्यमसहृदयैरपि वाच्यवत्प्रतीयते इति गुणीभूतम् ।

**'उन्निद्रकोकनदरेणुपिशङ्गिताङ्गा**
**गायन्ति मञ्जु मधुपा गृहदीर्घिकासु ।**
**एतच्चकास्ति च रवेर्नवबन्धुजीव-**
**पुष्पच्छदाभमुदयाचलचुम्बि बिम्बम् ॥'**

अत्र चुम्बतेर्वक्रसंयोगो मुख्योऽर्थोऽचेतने बाधित इति संयोगमात्रं लक्षयतोऽस्यात्यन्ततिरस्कृतवाच्यत्वम् । व्यङ्ग्यश्चास्योषः कालो वाच्यायमानतया गुणीभूतः । नन्वत्र लक्ष्यतावच्छेदकस्य संयोगत्वस्य वक्रसंयोगेऽपि सत्त्वात्कथमत्यन्ततिरस्कृतवाच्यत्वमिति चेत्, लक्ष्यतावच्छेदकस्य सत्त्वेऽपि वाच्यस्य संयोगविशेषस्यान्वयाप्रवेशात् ।

**काव्यप्रकाशखण्डनम्**

एषां स्वरूपं लक्ष्येषु वक्ष्यामः । कामिनीकुचकलशतया गूढं चमत्करोति, अगूढं तु स्फुटतया प्रतीयमानमिति गुणीभूतमेव । यथा—

**राजर्षिवंशसूनोर्मे मर्कटद्वारसेवनात् ।**
**जीवन्तमपि मां ब्रह्मन्! मृतमित्यवधारय ॥**

अत्र मरणमेव श्रेय इत्यनुतापातिशयो व्यङ्ग्यः सर्वजनवेद्यस्वाद् गूढ एव ।

**आदर्शः**

यस्यासुहृदिति शत्रुसेवया जीवतो नृपस्य स्वाभ्युदयचेष्टार्थं केनाप्युद्विज्यमानस्य तं प्रत्युक्तिरियम् । असुहृदा कृता तिरस्कृतिः तिरस्कारः, सा यस्य मम कर्णावित्य तप्तसूचीनामिव व्यधव्यतिकरेण युनक्ति असुहृत्कृततिरस्कार 'वार्त्ताऽपि यस्य मम कर्णदुःसहा आसीदित्यर्थः, एष सोऽहं काञ्चीगुणग्रन्थनभाजनम् अस्मि मालादिग्रन्थकोऽस्मीत्यर्थः । अतः सम्प्रति जीवन् न भवामि किं स्वाभ्युदयचेष्टामावहामि करोमीत्यर्थः । चक्रवर्त्ती तु—मया कृततिरस्कृतिः असुहृद् यस्य मम शरणागतः सन् तप्तसूचीनां व्यधव्यतिकरेण स्वकर्णौ युनक्ति शरणागतानां पाश्चात्यानामीदृशव्यवहारादिति व्याचष्टे, तन्न; तादृशव्यवहारस्य अदृष्टत्वात् तादृशव्यतिकरस्य सुतरामभावाच्च । अत्रेति, अजीवत उक्त्यसम्भवात् जीवन्निति पदं प्रकृष्टजीविपरमित्यर्थः । अर्थान्तरेति, नञ्साहाय्यात् मृतप्रायत्वरूपस्य तद्व्यङ्ग्यस्यागूढत्वमिति शेषः, जीवन् न भवामीत्युक्ते मृतप्रायत्वस्य सर्वजनवेद्यत्वात् ।

अत्यन्ततिरस्कृतवाच्यलाक्षणिकव्यङ्ग्यस्यापि अगूढत्वमाह—उन्निद्रेति । प्रातर्मानिनीं प्रति उद्दीपकप्रदर्शनमिदम् । कोकनदमत्र रक्तपद्मम् । एतद् रवेर्बिम्बं चकास्तीव्यन्वयः । अत्रेति, वक्रसंयोगात्मकचुम्बनस्य

रवेबिम्बे बाधात् स्पर्शमात्रे चुम्बिपदस्य अत्यन्ततिरस्कृतवाच्यलक्षणा। चुम्बनदुद्दीपकत्वं तद्व्यङ्ग्यं सर्वजनवेद्यम्। अत्यन्तेति, एतद्व्यङ्ग्यस्येत्यर्थः, अगूढत्वमिति तच्छेषः।

## सुधासागरः

तदेतत्सर्वमभिप्रेत्य श्रीवृत्तिकृदाह—कामिनीत्यादि। उक्तभेदेष्वगूढमुदाहरति—'यस्यासुहृदि'ति।

वसन्ततिलकाच्छन्दः। कीचककृतंपराभवं निवेदयन्तीं द्रौपदीं प्रतिबृहन्नलारूपस्यार्जुनस्योक्तिरियम्। दासस्य तप्तशलाकया कर्णवेध इति देशाचारः।

स्पष्टमन्यत्। अत्र जीवन्नित्यभिमतकार्यशक्तत्वे सङ्क्रमितावाच्यम्। तस्य मरणमेव श्रेय इति व्यङ्ग्यमसहृदयैरपि वाच्यवत् प्रतीयत इति गुणीभूतम्। तदेतद् वृत्तिकृदाह 'अत्र जीवन्नित्यर्न्थान्तरसङ्क्रमितवाच्यस्ये' ति। व्यङ्ग्यमगूढमिति शेषः।

उन्निद्रे-'ति।

वसन्ततिलकाच्छन्दः। प्रातःकालवर्णनमिदम्। स्पष्टम्। अत्र चुम्बतेर्वक्त्रसंयोगो मुख्योऽर्थः। स चाचेतने रविबिम्बे तेन रूपेणानन्वयाद्बाधित इति सामान्यविशेषभावसम्बन्धेन संयोगमात्रं लक्षयतोऽस्यात्यन्ततिरस्कृतवाच्यत्वम्। व्यङ्ग्यश्चास्योषः कालारम्भः। स च वाच्यायमानतया गुणीभूतः। नन्वत्र लक्ष्यतावच्छेदकस्य संयोगत्वस्य वक्त्रसंयोगेऽपि सत्त्वात्कथमत्यन्ततिरस्कृतवाच्यत्वमिति चेत् लक्ष्यतावच्छेदकस्य सत्त्वेऽपि वाच्यस्य संयोगविशेषस्यान्वयाप्रवेशात्। तदेतद्वृत्तिकृदाह—अत्र चुम्बनस्येत्यादि।

---

अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः ।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः
केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥ ११५ ॥

अत्र केनाप्यत्रेत्यर्थशक्तिमूलानुरणनरूपस्य । 'तस्याप्यत्र' इति युक्तः पाठः ।

---

### सङ्केतः

अत्रासीदिति । देवरः पत्युर्भ्राता । गाढमिति । यतः द्रोणाद्रौनानाविधाः संरोहिण्यः ओषधयः सन्ति अतः स एवाहृतः इति भावः । अत्र केनापि इत्युक्ते 'मया' इति व्यङ्ग्यस्य झटिति प्रतीयमानत्वात् अगूढता । 'तस्याप्यत्र' इति पाठे तु 'मया' इति व्यङ्ग्यं गूढं स्यात् ।

### बालचित्तानुरञ्जनी

अगूढव्यङ्ग्यत्वमुदाहरति अत्रासीदिति । प्रतिप्रयाणे रामः सीतां प्रत्याह । हे मृगाक्षि ! सीते ! अत्रास्मिन् प्रदेशे फणिन एव पाशास्तैः कृतं बन्धनं तस्य विधिः अस्माकमासीत् । अत्र भवत्या देवरे लक्ष्मणे शक्त्या अस्त्रविशेषेण वक्षसि गाढं ताडिते सति हनुमता द्रोणाद्रिः सञ्जीवनीविशिष्टः अत्राहृतः । अत्र दिव्यैः लक्ष्मण-शरैरिन्द्रजित् लोकान्तरं प्रापितः । अत्र केनापि राक्षसपतेः रावणस्य कण्ठाटवी कृत्ता । अत्र प्रकृतोपयुक्तमंशमाह अत्रेति । केनापीत्युक्ते मयेति व्यङ्ग्यं काठिन्येन प्रतीयत इति गूढव्यङ्ग्य इत्यर्थः । केनापीत्यस्मिन् पाठे मध्यमका-व्यत्वमस्ति । कस्मिन् पाठे उत्तमत्वमित्यकाङ्क्षायामाह तस्यापीति । अस्मिन् पाठे मयेति व्यङ्ग्यस्य गूढत्वादुत्त-मत्वमित्यर्थः ।

### काव्यादर्शः

'अत्रासीद्' इति । रामः सीतां प्रत्याह । 'केनापि' इत्युक्ते 'मया' इति व्यङ्ग्यं झगित्येव प्रतीयत इत्यगूढता । 'तस्याप्यत्र' इति तु पाठे 'मया' इति व्यङ्ग्यं गूढं स्यात् ।

### विवेकः

अत्रासीदित्यादि । प्रतिपादमात्रेति (मत्रेति) पादोपादानात् प्रत्येकमेव वृत्तान्तानामद्भुतत्वम् । 'मृगाक्षि', 'मुग्धाक्षि' 'तन्वी' त्याद्यामन्त्रणं सर्वत्र सुगत (स्वगत)-नायिकाविशेषं बोधयति । रामभद्रोऽत्र वक्तेति । केनापी-त्यनेन मयेति प्रतीयमानं वाच्यायमानम् । ध्वनेरेवैतदुदाहरणं भवतीत्याह-तस्याप्यत्रेति ।

### दीपिका

केनापीति श्रीरामे वक्तरि वाक्यार्थप्रत्ययानन्तरं मयेत्यर्थ प्रतीयत इत्यगूढम् । अतथाविधेन नायकेनेदृश्या दिशा सोत्रासमात्मप्रकटनं [न युक्तमिति] प्रसङ्गाद्दोषमुद्घाटयति—तस्यापीति । अस्मिंस्तु पाठे सरभसमम...हेवाहिकादिकं न गुणीभूतमिति ध्वनेरेवेयमुदाहृतिः । अत्र च प्रतिपादं वृत्तानामद्भुततया स एव देशो नव नव इवाभासत इत्यत्रात्रेति पुनः पुनः प्रयोग इत्येकः ।

### दर्पणः

अत्रेति । अत्र श्रीरामो वक्ता । केनापीति सोच्छवासवचनेन मयेत्यात्मनः प्रकटनं न युक्तमिति गुणीभूतव्यङ्ग्यत्वम् । "तस्यापी" तिपाठे तस्य तथाविधस्य ममेत्यर्थः । तथास्य श्लोकस्य ध्वनित्वमित्याशयः ।

### साहित्यचूडामणिः

अत्रेति । भवत्या देवरे लक्ष्मणे । मयाप्यत्रेति वाच्यभागे यद्वदात्मप्रशंसा एवं केनाप्यत्रेति व्यङ्ग्येऽपीति तस्यागूढत्वम् ।

उचितं पाठमाह—तस्यापीति । कण्ठाटवीकर्तने कर्तृविवक्षायामयं क्लेशः, न पुनस्तत्सम्बन्धिनि देशे ।

### सम्प्रदायप्रकाशिनी

अत्रासीदिति । इहायोध्यां प्रति प्रतिप्रयाणे समनन्तरव्यापादितदशाननस्य दिव्ययानेन सञ्चरमाणस्य सीतां प्रति दाशरथेः समरभूमिनिर्देशाभिनयव्यञ्जिकोक्तिः । अत्र दशास्यनिपातनेन रामभद्रसमाख्यामयत्रिभुवनप्रस्तावे यत् कविना सीतां प्रति रामभद्रस्य योऽयं स्वनिर्देशः केनापीत्युपनिबद्धः तद् वाच्यादपि वाच्यतरायत इत्यर्थशक्तिमूलानुरणनरूपस्य वस्तुध्वनेरगूढता ।

पाठान्तरप्रदर्शनेनागूढतां द्रढयति—तस्याप्यत्रेत्यादि ।

### मधुमती

शब्दशक्तिमूलध्वनौ अपरार्थस्य व्यङ्ग्यस्यापि वाच्यायमानतया अगूढत्वं सुप्रसिद्धमिति, तदुपेक्ष्य, अर्थशक्तिमूले तदुदाहरति—अत्रासीदिति। भवद्देवरे इत्यत्र 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति पुवंद्भावः । नचैवं—'उल्लास्य कालकरवाल' इत्यत्रापि पूर्वोक्तध्वनित्वानुपपत्तिः । अपरार्थध्वनेः अगूढतया गुणीभावेऽपि उपामाध्वनेः अतथात्वात् । अत्रेति । 'मया' इति व्यङ्ग्यम् । तच्च अगूढम् । 'अनिर्धारितविशेषः बुद्धिस्थत्वादिरूपेणैव सर्वनामवाच्यः ।' इति मतावष्टम्भेन इदमुक्तम् । वस्तुतस्तु—'येन रूपेण बुद्धिस्थता तेनैव रूपेण सर्वनामपदादुपस्थितिः' इति वक्तव्यमिति—कथं अस्य व्यञ्जनम्? इति हृदि निधायाह—तस्याप्यत्रेतीति । तथा च राक्षसपतिकण्ठाटवीकर्तनरूपेण धर्मेण रामगततया प्रसिद्धेन रामरूप धर्मिव्यञ्जनं अगूढमेव। न च मयेत्यनभिधानात् न्यूनपदता । हर्षाविष्टवक्तृकत्वात् ।

## विस्तारिका

अत्रासीदित्यादि । लङ्कातोऽयोध्यागमनावसरे पुष्पकविमानविहारे सीतां प्रति रामस्योक्तिरियम् । बन्धनविधिरिति । विधेर्दुरतिक्रमत्वेन स्वावमाननाच्छादनम् । भवद्देवर इति । 'सम्बन्धोद्भावनेन वात्सल्योत्पादनया पराभवज्ञानतिरोधापनम्, द्रोणाद्रिर्गन्धमादनः, पर्वताहरणेन स्वभृत्योत्कर्षप्रकटनम् । इन्द्रजितोऽपि जयेन लक्ष्मणे वीरप्रकर्षः । दिवमर्हन्तीति दिव्याः तैर्लोकान्तरमिन्द्रलोकम् । यस्तेन जितस्तस्यैव सविधं प्रापितः अनिच्छन्नपि बलादिव स्थापितः । क्षिप्तस्यैकस्यैव बहूनामारम्भकत्वाच्छरैरिति बहुवचनम् । लक्ष्मणस्य शरैः शत्रून् निहत्य प्रत्यावर्तनात् सदातनसान्निध्यप्रकाशनम् । अत एव लक्ष्मणेनेति नोक्तम्, अहङ्कारप्रकटनप्रसङ्गभयाद् । धीरोदात्तेन तेन मयेत्यपहाय केनापीत्युक्तम् । अपिरवहेलायाम् । च्छिन्नप्ररूढच्छेदे नाटवीत्वरूपणम् । दिदृक्षितानां स्थानानां सीताया नवनवप्रीतिदायित्वादत्रेत्यसकृदुपात्तस्य नवीकृतत्वम् ।

अत्रेति । अनिर्धारितविशेषत्वेन किमः शक्तौ मयेत्यर्थो व्यङ्ग्यः । स च प्रसिद्धिवशादगूढः । केनापीति । पदान्तरोपपादनेऽपि स प्रतीयत इत्यर्थशक्तिमूलता । पाठान्तरेण गूढत्वमापादयति तस्येत्यादि ।

अयमाशयः—'अपिना' 'च' इत्यनेन च लक्ष्मणशरसमुच्चयरूपसाहित्यतात्पर्यग्राहकाभ्यां तत्तात्पर्यग्रहः । रामकर्तृकत्वप्रसिद्धया च तद्बाधः, ततो मयेत्यध्याहारादस्मदर्थप्रतीतौ गूढता; विरोधितात्पर्यग्रहान्तरायेण प्रतीतिविलम्बान् । तेन केनेति पदप्रयोज्यमेवागूढत्वम् । न च न्यूनपदत्वं प्रसिद्धिवशान्मयेत्यध्याहारे, विलम्बाभावाद् विरोधितात्पर्यग्रहेणैव विलम्बनात् । यत्र पदानुसन्धाने विलम्बः, तत्रैव तदवसर । यथा तथाभूतामित्यादीत्यत्र बल्कलधरैरित्यत्रास्माभिरिति विशेष्यपदस्य झटित्युपस्थापकत्वभावात् ।

ननु कथं शब्दशक्तिमूलवस्त्वलङ्कृत्योर्नोदाहृतमिति चेत्, मैवम्; प्रकृतवाक्यार्थप्रतीत्यां व्यवधानेन प्रतीयमानस्य व्यङ्ग्यस्य द्वितीयार्थस्यालङ्कारस्य वा झटित्यसंवेद्यत्वेन गूढत्वात् । एवं विभावादिव्यङ्ग्येष्वपि । लक्ष्यक्रमेषु न तत्प्रसङ्गः, विभावाद्यनुसन्धानस्य व्यवधायकत्वात् । अत एव पदव्यङ्ग्येष्वेवोदाहृतम्, वाक्यव्यङ्ग्येषु तु वाक्यार्थप्रतीत्यां व्यावधानेन न झटित्यवभासः । एवमन्यत्र स्वयमूह्यम् ।

## सारबोधिनी

अत्रासीदिति । विमानेनायोध्यां प्रति प्रयाणे सीतां प्रति रामस्येयमुक्तिः । विधिरिति । विधेर्दुरतिक्रमत्वेन स्वापमानतिरोधापनम् । भवद्देवर इति संबन्धोद्भावनेन वात्सल्योत्पादनया पराभवज्ञानतिरोधापनम् । अहङ्कारप्रकटनप्रसङ्गधिया धीरोदात्तेन रामेण मयेत्यपहाय केनापीत्युक्तम् । अपिरत्र हेलायाम् । अत्रेति । अनिर्द्धारितविशेषत्वेन किमः शक्तौ मयेत्यर्थो व्यङ्ग्यः । स च प्रसिद्धिवशादगूढः । तस्याप्ययत्रेति । तत्तत्संभवातिशयवत्त्वेन ख्यातस्य युक्त इति तथा च ध्वनित्वमेवेति भावः ।

अत्रायमभिप्रायः । अत्र वर्णनीयनायकोत्कर्षोऽपि कवितात्पर्य विषयः । स च केनापीति पाठे मयेति व्यङ्ग्येन प्रागेव प्रतीयत इति तत्राप्यगूढता स्यात् । तस्यापीति पाठे तु तज्जयान्नायकोत्कर्षप्रतीतौ गूढतेति ध्वनित्वमेव स्यादिति । न च तथा सति मयेत्यध्याहरे न्यूनपदत्वमेव स्यादिति वाच्यम् । एवं जयानुस्मृत्या सीतया सहालापेन च हर्षयुते वक्तरि तस्यादोषत्वात् । धीरोदात्तस्य रामस्य मयेत्यवक्तव्यत्वात् ।

ननु कथं शब्दशक्तिमूलवस्त्वलंकृतिव्यङ्ग्यं नोदाहृतमिति चेन्मैवम्। प्रकृतवाक्यार्थप्रतीतिव्यवधानेन प्रतीयमानस्य द्वितीयार्थस्यालङ्कारस्य वा झटित्यसंवेद्यत्वेन गूढत्वात्। एवं विभावादिव्यङ्ग्येष्वलक्ष्यक्रमेषु तत्प्रसङ्गः। विभावाद्यनुसंधानस्य व्यवधायकत्वात्। अत एव पदव्यङ्ग्येष्वेवोदाहृतं वाक्यव्यङ्ग्येषु वाक्यार्थप्रतीत्या व्यवधानेन न झटित्यवभासः। एवमन्यत्र स्वयमूह्यम्।

**काव्यप्रदीपः**

**'अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे**
**गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः।'**
**दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापितः।**
**केनाप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी॥**

अत्रानुनायकोपनायकप्रतिनायकेषु निर्दिष्टेषु चतुर्थवाक्येऽनुक्तोऽपि नायको राम एवार्थशक्त्या प्रतीयते। स च केनापीत्युपादानेन वाच्यायमानतया अगूढः कृतः। 'तस्याप्यत्र' इति पाठे गूढतया ध्वनित्वमव्याहतमेव। अत्र श्लोके प्रतिवाक्यमत्रेत्युपादाने प्रत्येकमेवाद्भुतत्वं व्यनक्तिः।

**आदर्शः**

अर्थशक्त्युद्भवस्याप्यगूढत्वंमाह—अत्रासीदिति। पुष्पकेण गमने सीतां रणस्थलं दर्शयतो रामस्योक्तिरियम्। विधिपर्यन्तानुधावनं बन्धनमोक्षस्यापि सूचनार्थम्। भवद्देवर इति सम्बन्धप्रदर्शनमनुरागोत्पादनाय। द्रोणाद्रिः गन्धमादनः। दिव्यैर्लक्ष्मणशरैः इन्द्रजिदत्र लोकान्तरं प्रापित इत्यन्वयः। शराणां कर्त्तृताप्रदर्शनं लक्ष्मणस्य तत्र अवहेलासूचनार्थम्। राक्षसपतेः रावणस्य। अत्रेति, अनुरणनरूपस्य मयेत्यस्य अगूढत्वमिति शेषः। केनापीत्यनेन तु भवत्येव मयेत्यस्य गूढत्वमित्यभिप्रायेणाह—तस्याप्यत्रेति। युक्त एतदपेक्षया प्रशस्त इत्यर्थः। तद्गूढत्व एव ध्वनित्वं नायकस्य धीरोदात्तत्वाक्षतिश्चेति भावः।

**सुधासागरः**

अत्रासीदि' ति।

शार्दूलविक्रीडितं छन्दः। विमानेनायोध्यां प्रतिप्रयाणे सीतां प्रति रामस्येयमुक्तिः। स्पष्टम्। अत्रानुनायकोपनायकेषु निर्दिष्टेषु चतुर्थवाक्येऽनुक्तोऽपि धीरोदात्तनायको राम एवार्थशक्त्या प्रतीयते। स च केनापीत्युपादानेन वाच्यायमानतयाऽगूढः कृत इत्यर्थशक्तिमूलानुरणनरूपव्यङ्ग्यस्यागूढत्वमिति गुणीभूतव्यङ्ग्यत्वं द्रष्टव्यम्। 'तस्याप्यत्र' इति पाठे गूढतया ध्वनित्वमव्याहतमेव। अत्र श्लोके प्रतिवाक्यमत्रेत्युपादानं प्रत्येकमेवाद्भुतत्वं व्यनक्ति। तदाह श्रीवृत्तिकारः—अत्र केनापीत्यादि।

अपरस्य रसादेर्वाच्यस्य वा (वाक्यार्थीभूतस्य) अङ्गं रसादि, अनुरणनरूपं वा ।यथा—

**अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।**
**नाभ्यूरुजघनस्पर्शी नीवीविस्त्रंसनः करः ॥ ११६ ॥**

**अत्र शृङ्गारः करुणस्य ।**

---

**सङ्केतः**

रसादेरिति । रसादेः वाक्यार्थभूतस्य प्रधानभूतस्य रसादि अङ्गम्, वाच्यस्य तु वस्त्वलङ्काररूपस्य अलङ्कारवस्तुरूपं व्यङ्ग्यं च अङ्गं, गुणीभूतमेव, अपराङ्गत्वात् ।

**'अयं स रशनोत्कर्षी नीवीविस्त्रंसनः करः ।**
**नाभ्यूरुजघनस्पर्शी पीनस्तनविमर्दनः ॥'**

इति तु पाठो युक्तः, सम्भोगक्रमभणनात् । परं तु शोकार्ततया व्यत्ययो न दुष्टः । शृङ्गारः इति । रणभुवि भूरिश्रवसः अर्जुनकृत्तहस्तप्रेक्षणेन पूर्वरतवृत्तान्तः स्मर्यमाणः, सम्प्रति ध्वस्ततया यतः शोकविभावतां याति, अतः करुणस्य अङ्गिनः अङ्गं विप्रलम्भः ।

**बालचित्तानिरञ्जनी**

रसादेरङ्गिनः रसाद्यङ्गं वाक्यार्थीभूतस्य प्रधानस्य वाच्यस्य वस्त्वलङ्काररूपस्याङ्गिनः अनुरणनरूपं वस्त्वलङ्काररूप वा अङ्गं भवतीत्यर्थः । रसस्याङ्गिनः अङ्गभूतं रसमुदाहरति अयमिति । भूरिश्रवसो रणभुवि पतितहस्तावलोकनान्तरं वचनम् । रशनां मेखलां संभोगावसरे ऊर्ध्वं कर्षति, पीनौ स्तनौ मर्दयति, नाभिश्च ऊरू च जघनं च नाभ्यूरुजघनं स्पृशति, नीवीं विस्त्रंसयति । सोऽयं करः । "अयं स रशनोत्कर्षी नीवीविस्त्रंसनः करः नाभ्यूरुजघनस्पर्शी पीनस्तनविमर्दन इति युक्तः पाठः, संभोगक्रमलाभात् । तथापि शोकार्तोक्तत्वे न दोषाय । अत्र को रसः कस्याङ्गमित्याकाङ्क्षायामाह विधत्ते । अत्रेति । युद्धस्थले पतितकरावलोकनेन अनुभूतप्राक्तनसंभोगवृत्तान्तः स्मर्यमाणः । सत्वत्र इदानीं तया शोकस्थायिभावः प्रतिपद्यते इति करुणस्याङ्गिनः पोषकत्वेनोपकारकत्वात् अङ्गभूतो विप्रलम्भशृङ्गार इत्यर्थः ।

**काव्यादर्शः**

रसादेरिति । रसाभावतदाभासभावशान्त्यादेः वाच्यस्य वा वाक्यार्थीभूतस्य वस्त्वलंकाररूपस्याङ्गिनोऽङ्गं रसभावादि । अनुरणनरूपं वेति । अलंकारवस्तुरूपं गुणीभूतमेवापराङ्गत्वात् ।

रसो रसस्याङ्गं यथा 'अयम्' इति । 'रशनां' मेखलाम् । संयोगावसरे ऊर्ध्वं कर्षतीति । शृङ्गार इति । समरभुवि पतितकरावलोकनेन प्राक्तनसंभोगवृत्तान्तः स्मर्यमाण इदानीं विध्वस्ततया यतः शोकविभावतां प्रतिपद्यते, अतः करुणस्य वाक्यार्थीभूतस्याङ्गिनोऽङ्गभूतो विप्रलम्भशृङ्गारः । रसादेर्व्यङ्ग्यस्य गुणीभावे रसवदाद्यलंकारविषय इत्युक्तमित्यत्र रसवदलंकारः ।

### विवेकः

अपराङ्गतानिबन्धनं गुणीभावमाह—अपरस्येति । वाक्यार्थीभावः प्राधान्यं, तेन चमत्कारकारीत्यर्थः । यद्यपि यथा यथा व्यभिचारिणामप्रयुक्तरसनिष्पत्त्युपयोगित्वलक्षणोऽङ्गभावस्तथा तथा न रसानां, तथापि निर्वाह्यस्य रसादेः परिपोषप्रकर्षरूपोपकारित्वादस्याङ्गत्वम् । तथा स्मरणविह्वलहृदयत्वाच्छोकावेगमधिकतरमुपजनयदतीव करुणस्योपकारकमङ्गाङ्गिभावादेव च विरोधिनोरपि रसयोरेकवाक्यानुप्रवेशो न दोषाय । स्वयं लब्धपरिपोषकत्वे वा कथं रसत्वम् ? अतो रसत्वमङ्गत्वञ्चेत्यन्योन्यविरुद्धमित्याशङ्कामग्रे (ङ्काऽये) विपरिहरिष्यते ।

### दीपिका

प्रत्येकं भिन्न-भिन्ना एव समरभुवः प्रदेशा इत्यपरः । रसादेर्वाक्यार्थीभूतस्याङ्गम्, रसादेर्वाच्यस्य तु रसाद्यनुरणनरूपं वेति योजना । अनुरणनरूपस्य तु रसादौ गुणीभावाव्यभिचार एवेति तद्गणनमेतादृशो वृत्तिकर्तुरभिप्राय उदाहरणदृष्ट्या ज्ञेयः । वाच्यस्येत्यनन्तरं 'वा' शब्दाभावपक्षेऽन्तिमो 'वा' शब्दस्तृणजलौकान्यायेनाकृष्यः । करुणस्य प्राकरणिकस्य । अत्र हि प्रागवस्थास्मृतिप्रभावितः खण्डशृङ्गारः समधिकशोकावेगप्रकृतिकं करुणमेव प्रकर्षयति ।

### दर्पणः

वाक्यार्थीभूतस्य रसादेरसरूपं व्यङ्ग्यम् करुणस्य प्रकृतस्य परिपोषकत्वादङ्गत्वं शृङ्गारस्येति भावः ।

### साहित्यचूड़मणिः

अपरस्याङ्गमित्यत्रापरशब्दं द्विधा व्याख्याति—रसादेरिति । आदिपदाद् भावादेः । वाच्यस्येत्येतावत्युक्ते पदार्थमात्रस्येति प्रतीयेत । तच्चानुचितम्, अङ्गित्वानुपपत्तेरित्याह-वाक्यार्थीभूतस्येति । अङ्गभूतस्यापि द्वैविध्यमाह—रसादीति । रसादेरङ्गं रसादि वाच्यस्याङ्गमनुरणनरूपम् । यदाह—

**व्यङ्ग्यस्य प्रतिभामात्रे वाच्यार्थानुगमेऽपि वा ।**
**न ध्वनिर्यत्र वा तस्य प्राधान्यं न प्रतियते ॥ ध्व. १.१३ सं० इति ॥**

तत्र रसस्याङ्गं रसमुदाहरति—अयमिति । प्रस्तुतकरुणौचित्यात् स इति स्मर्यमाणः शृङ्गारानुगुण्येन । एवं रसान्तरेऽपि द्रष्टव्यम् ।

**सम्प्रदायप्रकाशिनी**

अथापराङ्गव्यङ्ग्यविवेचनं प्रस्तौति—अपरस्य रसादेरित्यादिना। अपरशब्दविवक्षामुद्घाटयति—रसादेर्वाच्यस्य वेति। अत्र हि गुणीभूतव्यङ्ग्यस्य द्वौ प्रतियोगित्वेन विवक्षितौ रसादिरर्थः वाच्यो वाक्यार्थश्चेति। यच्चैतद् गुणीभूतव्यङ्ग्यं तदपि द्विरूपं रसादिक्रमानुरणनरूपं च। अनुरणनरूपमिति सामान्यस्य वक्ष्यमाणन्यायेन संकोचाद् वस्तुमूलस्यालङ्कारध्वनेरिहासम्भवः।

अथ रसवदादयोऽलङ्कारा गुणीभूतव्यङ्ग्याभिधाने वक्ष्यन्त इति यत् प्रतिज्ञातं तस्यायमवसर इत्यभिप्रेत्य क्रमेणोदाहरति—अयं स रशनेति। अयं स इति रणभूमिनिपतितस्य भूरिश्रवसो भुजप्रत्यभिज्ञा। रशनोत्कर्षो यो हि लौल्येन घणघणायमानमणिकङ्कणो मे रशनां ताच्छील्येनोदग्रथयत् सोऽयं, पीनस्तनविमर्दनः यो मे पीनौ स्तनौ पीनत्वादेव विशेषेणामृन्दात् सोऽयं, य एव नाभिमूरुं जघनमप्यस्पृशत् सोऽयं, य एव चातिचपलो नीवीमप्यपातयत् सोऽयमेवेदृशीं दशामनुप्रपन्न इति परित्यक्तलज्जं प्रियभुजमालिङ्ग्य विकलविकलं रुदन्त्या भूरिश्रवसो धर्मपत्न्यः प्रलापोऽयम्। अत्र सम्भोगशृङ्गारः करुण प्रतिभृत्यभूयमापद्यते।

**मधुमती**

अपरस्येति। नचैवं—अनुग्राह्यानुग्राहकलक्षणध्वनिसङ्करे अनुग्राहकस्यापि अपराङ्गत्वं स्यात् इति वाच्यम्। यत्र—साक्षादङ्गता, तत्र अपराङ्गत्वम्, यथा—'अयं स रशनोत्कर्षी' इत्यादौ। यत्र तु—परम्परया तथात्वं, तत्र अनुग्राह्यानुग्राहकलक्षणः सङ्करः, यथा—उदाहृते 'स्निग्धश्यामले' त्यादौ। अत्र हि-अत्यन्ततिरस्कृतवाच्याभ्यां 'रामः' इत्यर्थान्तरसंक्रमद्वारा तन्मूलध्वनेः उपकारः स्पष्ट। अत एव—वृत्तिकारः अविवक्षितवाच्यं अगूढे एव उदाजहार, न तु अपराङ्गे। साक्षादङ्गत्वाभावात्। तदिदमुक्तम्—रसादि अनुरणनरूपं वा इति। नचैवं उभयध्वन्योः वाच्यसिद्ध्यङ्गता स्यादिति वाच्यम्। इष्टापत्तेः। अत एव—अवान्तरध्वनीनामपि प्रधानध्वन्यङ्गत्वेन गुणीभूतत्वमेव। यत् वक्ष्यति—"यद्यपि स नास्ति कश्चित् विषयः, यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह संकरः संसृष्टिर्वा नास्ति, तथापि प्राधान्येन व्यपदेशा भवन्ति इति क्वचित् केनचित् व्यवहारः" इति।

**विस्तारिका**

अपरस्येति। वाक्यार्थीभूतस्य प्रधानस्य रसादे रसादि वाच्यस्यार्थस्यानुरणनरूपमिति यथासंख्यमन्वयः। केचितु—अनुरणनरूपमित्यतो वाकारं पठित्वा वाच्यस्य रसाद्यनुरणनरूपं वेति योजयन्ति, तन्न चारु; रसस्य वाच्याङ्गत्वासम्भवात्। न च—

**तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी।**
**निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः॥**

इत्यत्र इदमरण्यमीदृशम्, यत्र स्थित्वा निरुपकरणोऽपि रामो रक्षांसि जिगायेति रामचन्द्रगतवीरस्य वाच्यस्यारण्यकस्योत्कर्षकत्वेनाङ्गताभावात्। अत एवम् महताञ्चोपलक्षणम्' इति लक्षितमुदात्तालङ्कारे। महतां रसानामुपलक्षणमङ्गभावो वाच्येषु सम्भवतीति वाच्यं दशरथवचनपालनावगतेः पितृविषयके रत्याख्यो भाव एव, तस्याङ्गभावात्। पितृभक्त्यैव निरूपकरणस्य जय इत्यवगतेरिति न रसादेर्वाच्याङ्गतेति।

यथासंख्यान्वयाभिप्रायेण क्रमश उदाहरणान्याह—अयमित्यादि । समरपतितस्य भूरिश्रवोहस्तस्य दर्शनेन तद्वधूनां विलापोऽयम् । अयं छिन्नः, तदवस्थः सः । तामवस्थामाह-रसनेत्यादि ।

अत्र पूर्वावस्थास्मरणोद्बुद्धा रतिः, रसनोच्छेदेनात्मन्यनासादितस्थैर्यशोकं प्रज्वलयन्ती करुणमेव पुष्णाति । अथ हेतुविच्छेदस्य सुदुःसहत्वादिति करुणाङ्गतैव शृङ्गारस्येति । अङ्गमिति सम्बन्धः ।

### सारबोधिनी

अत्र प्राञ्चः । वाक्यार्थीभूतस्य प्रधानस्य रसादे रसादिवाच्यस्यानुरणनरूपमङ्गमिति यथाक्रममन्वय इति योजयन्ति । टीकाकृतस्तु अनुरणनरूपमित्यतो वाकारं पठित्वा वाच्यस्यानुरणनं वेति योजयन्ति । न च रसस्य वाच्याङ्गत्वासंभव इति वाच्यम् ।

**तदिदमरण्यं यस्मिन् दशरथवचनानुपालनव्यसनी ।**
**निवसन् बाहुसहायश्चकार रक्षःक्षयं रामः ॥**

इत्यत्रेदमरण्यमीदृशं स्थित्वा व्यसन्यपि बाहुमात्रसहायोऽपि रक्षांसि जिगायेति रामगतवीरस्य वाच्यारण्योत्कर्षकत्वेनाङ्गभावात् । अत एव महतां चोपलक्षणमिति लक्षितेन उदात्तालङ्कारेण महतां रसादीनामुपलक्षणमङ्गभाव इति वाच्यम् ।

अयमिति । एतच्च समरभूमिपतितं भूरिश्रवसो हस्तमालोक्य तद्वधूरभिदध्यौ । शृङ्गारोचितरशनाकर्षित्वादिविलासस्मरणं विगलद्हृदयत्वात् शोका वेगमधिकमुपजनयतीति शृङ्गारस्य करुणपोषकत्वमित्याह शृङ्गारः करुणस्येति ।

### काव्यप्रदीपः

अपरस्पररसादेर्वाच्यस्य वा प्रधानस्याङ्गमलक्ष्यक्रमः, अनुस्वानाभलक्ष्यक्रमो वेति द्विविधः । तत्र प्रथमे रसस्याङ्गभावेन गुणीभूतत्वं यथा—

**'अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।**
**नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥'**

अत्र भूरिश्रवसश्छिन्नं हस्तमासाद्य तद्वधूनां प्रलापे शृङ्गारः करुणास्याङ्गम् । निषन्नस्य रसस्यापराङ्गत्वाभावाद्रसपदेनात्र स्थायिभावो द्रष्टव्यः ।

### काव्यप्रकाशखण्डनम्

अपरस्य रसादेः, रसादिः अङ्गं उत्कर्षकं तथा वाच्यस्य (प० १८.१) अनुरणनरूपमङ्गम् । केचित् तु वाच्यस्य रसादिरङ्गमित्याहुः । लक्ष्यदर्शने विशिष्टं विवेचयिष्यामः । यथा—

**अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।**
**नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥**

अत्र शृङ्गारः करुणस्योत्कर्षकः। तथा हि—एतत् समरपतितं भूरिश्रवसो हस्तमालोक्य तद्वधूरभिदधौ। तथा च शृङ्गारोचितरसनाकर्षणादिविलासस्मरणविगलद्हृदयत्वात् शोकवेगमधिकमुपजनयति।

**आदर्शः**

अपरस्याङ्गमिति व्याचष्टे—अपरस्येति। रसादेरङ्गं रसादि वाक्यार्थीभूतस्याङ्गन्तु अनुरणनरूपमिति यथासङ्ख्यं बोध्यम्। वाच्यस्येत्युक्तौ पदार्थस्यैवाङ्गित्वं स्यादत उभयसाधारण्यार्थं वाक्यार्थीति। उदाहरिष्यति च यथासङ्ख्याभिप्रायेणैव। चक्रवर्त्ती तु—वाक्यार्थीभूतस्याप्यङ्गं रसादिकम्। अन्यथा—

**तदिदमरण्यं यत्र दशरथवचनानुपालनव्यसनी।**
**विचरन् बाहुसहायश्चकार रक्षःक्षयं रामः॥**

इत्युदात्तालङ्कारोदाहरणतया दशमोल्लासे यद्वक्ष्यते तत्र 'न चात्र वीरो रसः' इत्याशङ्क्य—'तस्येह अङ्गत्वा'दिति समाधानेन वाक्यार्थीभूतस्यारण्यविचरणस्याङ्गत्वेन वीररसप्रदर्शनं ग्रन्थकृतोऽनुपपन्नं स्यादिति व्याचष्टे, तन्न; तस्य अङ्गताप्रदर्शनेन तदङ्गघटितस्योदात्तालङ्कारस्यैव ग्रन्थकृता दर्शितत्वात् न त्वपराङ्गत्वस्य, 'महत्ताश्चोपलक्षण' मिति तल्लक्षणे हि 'उपलक्षणम् अङ्गभावः' इति व्याख्यास्यति, अङ्गभावश्च तत्र परम्परया वीररसोत्साहेन रामस्य प्रकर्षो रामसम्बन्धाच्चारण्यमहत्त्वमिति, अपराङ्गत्वन्तु साक्षादङ्गस्यैवेति। अयं **स इति**। भूरिश्रवसः समरपतितं हस्तमालोक्य तत्पत्न्या रोदनोक्तिरियम्। अत्रेति, 'शृङ्गारः करुणस्य' अङ्ग**मित्यर्थः**। रसनोत्कर्षणादिव्यङ्ग्यः शृङ्गारो ह्यत्र चमत्कारी करुणस्य प्रकर्षकः तदभावे करुणपुष्ट्यभावात्, पूर्वानुभूतसुखसम्भिन्नरतिस्मरणेन पतिमरणे करुण प्रकर्षात्। अङ्गिनिर्वाहकाङ्गस्य तु अङ्ग्यपेक्षया चमत्काराधिक्याभावात् नापराङ्गत्वम् यथा 'जाने कोपपराङ्मुखीत्यादौ असूयानिर्वाहकाङ्गस्य शृङ्गारस्य। न चात्र शृङ्गारोऽपि निराकाङ्क्षवाक्यव्यङ्ग्य एवेति कथं तस्य करुणाङ्गत्वमिति वाच्यम्, मृतालम्बनकत्वेन तस्य तदानीं रसत्वाप्राप्त्या करुणाङ्गत्वादेव।

**सुधासागरः**

अपरस्य प्रधानस्य रसादेः वाक्यार्थीभूतवाच्यस्य वा अङ्गम् अलक्ष्यक्रमव्यङ्ग्यमनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यं वेति द्विविधं यथाक्रमं बोध्यम्। तदुक्तमपरस्येत्यादिना वृत्तिकृद्भिः। तत्र प्रथमे रसस्याङ्गभावेन गुणीभूतमुदाहरति—'अयं स' इत्यादिना। स्पष्टम्। अत्रेत्यादि। अत्र भूरिश्रवसश्छिन्नहस्तमासाद्य तद्वधूनां प्रलापे शृङ्गारोचितरशनाकर्षित्वादिविलासस्मरणं विगलद्धृदयत्वाच्छोकावेगमधिकमुपजनयतीति शृङ्गारस्य करुणपोषकत्वाच्छृङ्गार करुणस्याङ्गमित्यर्थः। निष्पन्नस्य रसस्यापराङ्गत्वाभावाद् रसपदेनात्र रस्यते इति व्युत्पत्त्या स्थायिभावो द्रष्टव्यः।

---

कैलासालयभाललोचनरुचा निर्वर्तितालक्तक—
व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम्।
स्पर्धाबन्धसमृद्धयेव सुदृढं रूढा यया नेत्रयोः
कान्ति कोकनदानुकारसरसा सद्यः समुत्सार्यते ॥ ११७ ॥

अत्र भावस्य रसः।

---

**सङ्केतः**

कैलासेति कैलासालयः शम्भुः यतः प्रसादनार्थं गौरीपादयोः पतितः तेन नखद्युतिः सा निर्वर्तितालक्तक-व्यक्तिः सालक्तकच्छाया इत्यर्थः। नेत्रयोः कान्तिरिति। प्रणते शम्भौ कोपजा नेत्रारुणता गतेत्यर्थः। अत्र कवेः देवीगतरतिभावस्य शृङ्गारः अङ्गम्।

अत्र पूर्वत्र च रसवदलङ्कारः। यथा पद्मादिना वस्तुना उपमितं मुखादि वस्तु चारुतया भाति, तथा रसादिनाऽपि रसाद्युपस्कृतं भातीति, वस्तुन इव रसादेरप्यलङ्कारत्वम्। ननु—अत्र उदाहरणद्वयेऽपि करुणरसभावौ व्यङ्ग्यौ, तयोश्च मुख्यतेति कथं गुणीभूतव्यङ्ग्यता? इति चेत्—सत्यम्। मुख्यावपि न तथा चमत्कुरुतः, यथाऽत्र गौणोऽपि शृङ्गारः इति तेनैव व्यपदेशः। एवं अन्यत्रापि भाव्यम्।

**सङ्केतः (रुय्यकः)**

कैलासेति। कुपितायां पार्वत्यां परमेश्वरः पादयोः पतितः, सा तु तदैव प्रसन्नेत्यर्थः, तात्पर्यात् (तात्पर्या ?) पश्यतामिति पश्यतः अनादृत्येत्यनादरे षष्ठी। अद्याप्यहमुपेक्षित इत्यसहनत्वं तपसः। अभियुक्त उद्योगेनाक्षिप्तः।

**बालचित्तानिरञ्जनी**

भावस्याङ्गभूतं रसमुदाहरति कैलासेति। गिरिभुवः पार्वत्याः। कैलासालयजा तस्य ललाटलोचनरुचा अरुणकान्त्या निर्वर्तिता निष्पादिता अलक्तकव्यक्तिः लाक्षाकान्तिर्यस्याः। प्रसादार्थं गौरीपादयोः शिवस्य पतनात् सा पादनखद्युतिः वः युष्मान् सदा त्रायतां रक्षतात्। नेत्रकान्तिः स्पर्धाबन्धसमृद्धस्थितया यत्पादनखद्युत्या सुदृढं रूढा कोकनदस्यानुकारः अनुकरणं तेन सरसा नेत्रयोः कान्तिः सद्यः समुत्सार्य तिरस्क्रियते। शम्भो प्रणमति सति गौरी आकृतलोचनारुणा भासतेत्यर्थः।

अत्रेति। अत्र पार्वतीविषयस्य रत्याख्यस्य भावस्य शृङ्गारोऽङ्गं कमलाद्युपमितस्य सुखादेरिव रसाद्युपकृतस्यापि रसादेश्चारुत्वदर्शनात् उपस्कारकस्य रसादेरपि वस्तुन इवालङ्कारत्वमनुभवसिद्धमङ्गीकर्तव्यम्।

## काव्यादर्शः

भावस्य रसोऽङ्गं यथा 'कैलास' इति । प्रणते महेशे गौर्याः कोपकृता लोचनारुणता ययाविति तात्पर्यार्थः । अत्र कवेर्देवताविषयरतिभावस्य शृङ्गारोऽङ्गम् । अत्रापि रसवदलंकारो यतो विप्रलम्भस्यालंकारत्वं, न तु वाक्यार्थता । भावध्वनेश्चात्मभूतस्यालंकार्यत्वम्, यथा चन्द्रादिना वस्तुना वस्त्वन्तरं वदनाद्यलंक्रियते तदुपमितत्वेन चारुतयावभासात्, तथा रसादिनापि रसाद्युपस्कृतं सुन्दरं भातीति रसादेरपि वस्तुन इवालंकारत्वम् । यथा चोपमादिभिरुपमीयते प्रस्तुतोऽर्थस्तथा रसादिनापि सरसीक्रियते सोऽर्थ इति स्वसंवेद्यमेतत् ।

## विवेकः

कैलासेत्यादि—कैलासालयः परमेश्वरः, भालं ललाटं, कुपितायां पार्वत्यां परमेश्वरः पादयोः पतति । सा च तदैव प्रसन्नेति तात्पर्यार्थः ।

## दीपिका

भावस्येति भगवतीविषयरतेः । रसो मानप्रसादनरूपः सम्भोगः ।

## साहित्यचूडामणिः

अथ भावस्याङ्गं रसमाह—कैलासालयेति । कैलासालयः परमेश्वरः । स्पर्धाबन्ध आरुण्यजातीयत्वादीर्ष्यानुवृत्तिः, तेन दीप्तयेव ।

भावस्य रस इति । कविसम्बन्धिन्याः पार्वतीगोचराया रतेरङ्गमीर्ष्याविप्रलम्भः ।

## सम्प्रदायप्रकाशिनी

कैलासालयेति । गिरिभुवो देव्याः शिवायाः सा पादनखद्युतिः असामान्यानुभावगरिमा पादाङ्गुलीनखद्युतिर्वः सदा त्रायतां युष्मानविरतमभिरक्षतु । सेत्युक्तम् । सा कीदृशी, कैलासालयफाललोचनरुचा निर्वर्तितालक्तकव्यक्तिः कैलासालयस्य शिवस्य फाललोचनरुचा प्रणयापराधप्रणतस्य ललाटनेत्रप्रभापटलने निर्वर्तितालक्तव्यक्तिः निष्पादितयावकरसरञ्जनाभिव्यक्तिः । अनेनोत्तरार्धोपनिबध्यमानस्योत्प्रेक्षालङ्कारस्य सामग्री सम्पादिता । यया एतया स्पर्धाबन्धसमद्धियेव नेत्रकान्त्यभ्यसूयया ज्वलन्त्येव सुदृढं रूढा दृढतरं प्ररूढा अत एव कोकनदानुकारसरसा रक्तारवन्दसंवर्तिकासदृशत्वात् सुकुमारा सद्यस्समुत्सार्यते अविलम्बमपनीयते । शिवे प्रणमति प्रसन्ना देवीति वाक्यार्थः । अत्र मानोपबृंहितः सम्भोगशृङ्गारो देवताविषयस्य रतिभावस्याङ्गम् । अतो रसवदलङ्कारो द्विधोदाहृतः पूर्वोदाहरणे रसाङ्गतया इह तु भावाङ्गतयेति ।

## विस्तारिका

कैलासेत्यादि । कैलासालयः शिवः, भाललोचनो रविः । निर्वर्तिता निर्वाहिताऽलक्तकस्य व्यक्तिः प्रकाशो यत्रेति द्युतिविशेषणम् । स्पर्धाबन्धो जिगीषा समृद्धया प्रचितया । समिद्धयेति पाठे स एवार्थः । रूढा प्रादुर्भूता । सद्यस्तत्क्षणम् । समृद्धस्य विपक्षनिर्जये न विलम्बः ।

अत्रेति। भावस्य त्रायतामित्यवगतस्य कविनिष्ठस्य। रसो महादेवनिष्ठा रतिः प्रणत्यवसेया। महादेवोऽपि यत्प्रसादाय प्रणमति। तत्र भक्तिरुचितेति रसस्य भावाङ्गता। एवं सर्वत्राङ्गादिभावे भाव्यम्।

**सारबोधिनी**

कैलासालयेति। कैलासलयः शिवः। अत्र गिरिभुवः कोपवशात् नेत्रयोः शोणकान्तिरासीत् सपादप्रणते शिवे उपगतेति तत्त्वम्। तत्रेदमुत्प्रेक्ष्यते स्पर्धाबन्धेति। रूढा उपचिता। अत्रेति। भावस्य त्रायतामित्यवगतस्य कविनिष्ठस्य रसो महादेवनिष्ठा रतिः प्रणत्यवसेया। महादेवोऽपि यत्प्रसादाय प्रणमति तत्र भक्तिरुचितेति रसस्य भावाङ्गता। एवं सर्वत्राङ्गाङ्गिभावेन बोध्यम्।

**काव्यप्रदीपः**

रसस्यैव भावाङ्गता यथा—

**'कैलासालयभाललोचनरुचा निर्वर्तितालक्तक-**
**व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायताम्।**
**स्पर्धाबन्धसमिद्धयेष सुदृढं रूढा यया नेत्रयोः**
**कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते॥'**

अत्र वक्तुर्देवीविषयकरतिरूपभावे देवयोः शृङ्गारोऽङ्गम्।

**काव्यप्रकाशखण्डनम्**

**कैलासालयभाललोचनरुचा निर्वर्तितालक्तक**
**व्यक्तिः पादनखद्युतिर्गिरिभुवः सा वः सदा त्रायंताम्।**
**स्पर्द्धाबन्धसमीहयेव सुदृढं रूढा यया नेत्रयोः**
**कान्तिः कोकनदानुकारसरसा सद्यः समुत्सार्यते॥**

कैलासालयः शिवः, अत्र गिरिभुवः कोपवक्षात् नेत्रयोः शोणा कान्तिरासीत् सा पादप्रणते शिवेऽपगतेति ध्वनितम्। तत्रेदमुत्प्रेक्षते—स्पर्द्धाबन्धेति। रूढा उपचिता। अत्र भावस्य त्रायतामित्यवगतस्य कविनिष्ठस्य रसो महादेवनिष्ठा रतिः प्रणतिरवसेया। महादेवोऽपि यत्प्रसादनाय प्रणमति तत्र भक्तिरुचितेति रसस्य भावाङ्गता। एवं सर्वत्राङ्गाङ्गिभावो बोध्यः।

**आदर्शः**

इदानीं भावमङ्गिनं कृत्वा रसादीनां सर्वेषां तदङ्गत्वं प्रदर्शयिष्यन् भावाङ्गं रसमाह—कैलासेति। मानिन्याः पार्वत्या महेशेन पादप्रणामे कृते कोपापगमात् तन्नेत्रारुण्यनाशवर्णनमिदम्। कैलासालयो. महेशः प्रणामकाले तद्भाललोचनस्य आग्नेयस्य ज्योतिर्मयत्वेन अरुणस्य रुचा निर्वर्त्तिता निष्पादिता अलक्तकस्य व्यक्तिः प्रकाशो यस्याः तादृशी गिरिभुवः पार्वत्याः सा पादनखद्युतिः वो युष्मात् त्रायताम्। सा का इत्याह—स्पर्द्धेति; यया

पादनखद्युत्या पार्वत्याः नेत्रयोः रुढा जाता शोणत्वात् कोकनदानुकारेण रक्तोत्पलसादृश्येन सरसा कान्तिः सद्यः समुत्सार्यते पादपतनेन कोपाधीनस्य नेत्रारुणयस्य नाशात्। अत्रोत्प्रेक्ष्यते स्पर्द्धेति, पादनखद्युतिरहमरुणा कथमन्याऽपि द्युतिः अरुणा आस्तामित्येवं स्पर्द्धाबन्धेन समिद्धया दीप्तयेव। अत्रेति, त्रायतामिति निराकाङ्क्षवाक्येन व्यङ्ग्यस्यापि नः पार्वतीविषयभावस्येत्यर्थः। 'रसः' महेशशृङ्गारः अङ्गमित्यर्थः। स च निर्वर्त्तितालक्तकव्यक्तिरित्यन्तसाकाङ्क्षावाक्यलभ्येन पादपतनेन व्यङ्ग्यः।

**सुधासागरः**

रसस्यैव भावाङ्गतामुदाहरति 'कैलासालये'ति।

शार्दूलविक्रीडितं छन्दः। अत्र मानेन त्यक्तालक्तकाया गिरिभुवः कोपवशान्नेत्रयोः शोणा कान्तिरासीत् सा पादप्रणते शिवेऽपगतेति तत्त्वम्। तत्रोत्प्रेक्षते सा, कैलासालयस्य शिवस्य भाललोचनरुचा ललाटनयनदीप्त्या, निर्वर्तिता सम्पादिताऽलक्तकस्य यावकस्य व्यक्तिः प्रकटता यत्र तथाभूता, गिरिभुवः पार्वत्या, पादनखद्युतिः वः सदा त्रायतां युष्मान्निरन्तरं रक्षताम्, स्पर्धाबन्धेन ईर्ष्याग्रहेण समृद्धयेव प्रबृद्धयेव, समिद्धयेति पाठे देदीप्यमानयेत्यर्थः, यया नखद्युत्या। नेत्रयोरर्थात् पार्वतीलोचनयोः, सुदृढं रूढा बलवदुपचिता, अत एव कोकनदानुकारा रक्तोत्पलानुहारिणी चासौ सरसा सातिशया, कान्तिरारक्तच्छविः सद्यः समुत्सार्यते झटित्यपनीयत इत्यर्थः।

अत्र कविनिष्ठे पार्वतीविषयकप्रीतिरूपे भावे पार्वतीपरमेश्वरयोः शृङ्गारोऽङ्गम्। तदुक्तं वृत्तिकृताऽत्रेत्यादिना।

---

**अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-**
**स्तानेतानपि बिभ्रती किमपि न क्लान्ताऽसि तुभ्यं नमः।**
**आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-**
**स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥ ११८ ॥**

**अत्र भूविषयो रत्याख्यो भावो राजविषयस्य रतिभावस्य।**

---

### सङ्केतः

अत्रेति।भूपगतायाः कविरतेः भूविषया रतिरेव अङ्गत्रम्। अन्योन्यावस्थाबन्धरूपरतेः अभावात् नात्र शृङ्गारः। ततश्च प्रेयस्वदलङ्कारः।

### बालचित्तानुरञ्जनी

भावस्याङ्गभूतं भावमुदाहरति अत्युच्चा इति। कश्चिद्राजानं स्तौति। हे पृथ्वीपते! परितः अत्युच्चाः गिरयः स्फुरन्ति। तानेतानपि बिभ्रत्यपि त्वं किमपि क्लान्ता श्रान्ता नासि। तादृश्यै तुभ्यं नमः इति। आश्चर्येण मुहुर्मुहुः स्तौति। हे राजन्। तावत् इमां बिभ्रत् तव भुजः स्मृतः। वाचो मुद्रिताः। राजप्रभावख्यापने कवेरतितरा रतिः। तस्याश्च भूविषयरतिरेव स्थायी भावोऽङ्गम् न चात्र शृङ्गारः परस्परावस्थाबन्धात्मिकाया रतेस्तावत् ततोऽत्र प्रेयस्विदलङ्कारः। "प्रेयः प्रियतराख्यानं विद्यते यन्निबन्धना" इति वचनात्।

### काव्यादर्शः

रतिभावस्येति। राजप्रभावख्यापने कवेरतितरां रतिस्तस्याश्च भूविषयरतिरेव स्थायी भावोऽङ्गम्। न चात्र शृङ्गारः परस्परास्याबन्धात्मिकाया रतेरभावात्। ततोऽत्रालंकारः प्रेयस्वत्, प्रेयः प्रियतराख्यानं विद्यते यत्र निबन्धने। एवं रसवदपि निबन्धनमेव।

### विवेकः

अत्युच्चा इति—किमपि मनागपि न क्लान्ताऽसीति भूविषयो रत्याख्यो भावोऽङ्गं राजविषयस्य रतिभावस्येति।

### दीपिका

भूविषयो रत्याख्यो भाव आहार्यो न तु वास्तुवः, नृपतिगतभक्तिप्रकर्षप्रकटनायैव तदुपनिबन्धनात्।

### साहित्यचूडामणिः

अथ भावस्याङ्गभावामुदाहरति—अत्युच्चा इति। तान् प्रागुपन्यस्तान् गिरीन्। एतान् अनन्तरोक्तान् अम्बुधीश्च। भूविषयो भावः। कविसम्बन्धी तस्यैव राजविषयस्याङ्गमिति भावो भावस्याङ्गम्।

## सम्प्रदायप्रकाशिनी

अथ प्रेयोलङ्कारोदाहरणम्—अत्युच्चा इति। तथा तेऽपि परितः स्फुरन्तीत्यर्थः। इत्याश्चर्येणेति समन्वयः। अत्र भूविषयस्य भावस्य राजविषयभावाङ्गतया प्रेयस्त्वम्। एवं रसाङ्गतयोदाहर्तव्यम्। यथा 'त्वं मुग्धाक्षी'त्यादौ सखीनां नायिकाविषयो रतिभावः शृङ्गारस्य। इत्थं प्रेयानपि द्विधा।

## विस्तारिका

अत्युच्चा इति। परितः सर्वत्र किमपि किञ्चिदपि। मुहुर्मुहुर्बहशो द्वित्वनिरसनाय द्विरुक्तिः। स्तुतिं प्रस्तौमि। अनवच्छिनां स्तुतिमाचरामि। इमां भुवं भुजः, न भुजौ। मुद्रिताः संकुचिताः। भूविषयः पादत्रयप्रतिपाद्यः चतुर्थपादगम्यो राजविषयः।

## सारबोधिनी

अत्युच्चा इति। स्फारा विस्तीर्णाः। किमपि किञ्चिदपि।

## काव्यप्रदीपः

भावे भावस्याङ्गत्वं यथा—

**'अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-**
**स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः।**
**आश्चर्येण मुहूर्मुहुः स्तुतिमिमां प्रस्तौमि यावद्भुव-**
**स्तावद्बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः॥'**

अत्र भूविषयो रतिभावो राजविषयस्य रतिभावस्याङ्गम्।

## आदर्शः

भावस्याङ्गं भावमाह—अत्युच्चा इति। अम्भोधय इत्यत्रापि परितः स्फुरन्तीत्यन्वयः। न क्लान्ताऽसीत्यत्र हे पृथिवीति सम्बोधनमूह्यम्। स्तुतिमित्यत्र च सनमस्कारामित्यूह्यम्, तदैव 'स्तुतिमितीत्यत्र इतिकारेण 'नम' इत्यन्तस्य परामर्शसम्भवात्। प्रस्तौमि करोमि। तावदिमां भुवं बिभ्रत् तव भुजः स्मृतः, ततो वाची मुद्रिता इत्यन्वयः। बिभ्रदित्यत्र श्लेषवशात् पालने धारणाध्यासादिदमुक्तम्। अत्रेति उभयत्र रतिभावत्वकथनं स्वरूपकथनमात्रम् भावान्तरप्रसक्त्यभावेन अव्यावर्त्तकत्वात्।

## सुधासागरः

भावे भावस्याङ्गमुदाहरति 'अत्युच्चा' इति।

शार्दूलविक्रीडितं छन्दः। स्फाराः विस्तीर्णाः, किमपि किञ्चिदपि स्पष्टमन्यत्। अत्रेत्यादि, अङ्गमिति शेषः।

**बन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां प्रेयसां**
**श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।**
**अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे**
**विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥११९ ॥**

**अत्र भावस्य रसाभास-भावाभासौ प्रथमार्धद्वितीयार्धद्योत्यौ ।**

---

### सङ्केतः

बन्दीति । अत्र पश्यतां इति अनादरे षष्ठी । पश्यतः प्रियान् अनादृत्येत्यर्थः । भावस्येति । रिपुस्त्रीणां रत्यभावे सैनिकानां हठात् अनुचितप्रवृत्त्या रसाभासः । शत्रूणां च रत्यभावे दैन्याद्यनुचितं इति उत्तरार्धे भावाभासः । तौ च राजविषयरतेः अङ्गम् । अत्र ऊर्जस्व्यलङ्कारः ।

### बालचित्तानुरञ्जनी

भावस्याङ्गभूतौ रसाभासभावाभासौ दर्शयति बन्दीकृत्येति । कश्चिद्राजानं स्तौति । हे नृपते ! तव सैनिकाः द्विषां मृगदृशः प्रियाः बन्दीकृत्य ताः पश्यतां प्रेयसाम् । अनादरे षष्ठी । पश्यतः प्रियननादृत्येर्थः । ताः श्लिष्यन्ति, प्रणमन्ति, परितः लान्ति परितः आददते, चुम्बन्ति । हे अचिन्त्यवारांनिधे अचिन्त्यसमुद्रत्वसुकृतिः । अस्माकं दृशोर्निपतितोऽसि । यतः तत् तस्मात् अखिला विपदो विध्वस्ताः । इति तैः प्रत्यर्थिभिः शत्रुभिः त्वं स्तूयसे । अत्र कस्य को वा अङ्गमित्याकाङ्क्षायामाह अत्रेति । शत्रुस्त्रीणां रत्यभावे सैनिकानामनौचित्यप्रवृत्तत्वात् रसाभासः प्रथमार्धेन द्योतितः शत्रूणाञ्च औचित्ये दैन्यादीनि भावाभासो द्वितीयार्धेन द्योतितः । तौ च वर्णनीयत्वेन अङ्कितस्य राजविषयस्य रतिभावस्याङ्गमित्यर्थः । ऊर्जस्विदलङ्कारः ।

**"अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात् ।**
**भावानां च रसानां च बन्ध ऊर्जस्वि कथ्यते ॥"**

इति वचनात् ।

### काव्यादर्शः

'पश्यताम्' इत्यनादरे षष्ठी । पश्यतः प्रियाननादृत्येत्यर्थः । भावस्येति । शत्रुस्त्रीणां रत्यभावे सैनिकानामनौचित्यप्रवृत्तत्वाद् रसाभासः । शत्रूणां चानुचितं दैन्यादीति द्वितीयेऽर्धे भावाभासः, तौ च राजविषयस्य रतिभावस्याङ्गम् । अत्र अलंकार ऊर्जस्वि, अनौचित्यप्रवृत्तत्वाद्, ऊर्जो बलं विद्यते यत्र निबन्धने । यदाह—

**अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात्।**
**भावानां च रसानां च बन्ध ऊर्जस्वि कथ्यते॥**

### विवेकः

वन्दीत्यादि—हठहृता स्त्री बन्दी। पश्यतां (प्रेयसा) मित्यनादरे षष्ठी पश्यतस्ताननादृत्येत्यर्थः।

### दीपिका

बन्दीकृत्य हठादानीय। नृपेत्यामन्त्रणम्। ताः शोकानुरागकातरेण चक्षुषा अनिमेषं प्रेक्षमाणानाम्। प्रेयसामित्यनादरे षष्ठी। लान्ति लालयन्ति। तत्तस्मादखिला विपदो निरस्ता इति योज्यम्। तैरिति येषां दाराः समक्षमेव तथा क्रियन्त इत्यर्थः। अत्रेति। भावस्य नृपतौ कविभक्तेः प्रथमपद्यार्द्धद्योत्यः सैनिकानां परस्त्रीविषयक-रतिप्रकृतिकः सम्भोगाभासः, द्वितीयेऽप्यर्द्धे विप्रकृतानां राज्ञि भक्तिः कृत्रिमत्वादाभास एव। प्रथमद्वितीयपादेति पाठे तु पादशब्दोऽयमर्द्धरूपभागवाच कोऽङ्गी कर्त्तव्यः।

### साहित्यचूडामणिः

अथ भावस्य रसभावाभासावङ्गमुदाहरति—बन्दीकृत्येति। नृपेति सम्बुद्धिः। पश्यतामित्यनादरे षष्ठी। तदिति। यस्मादस्माकं दृशोर्निपतितोऽसि।

**वंशवीर्यश्रुतादीनि वर्णयित्वा रिपोरपि।**
**तज्जयान्नायकोत्कर्षकथनं च धिनोति नः॥**

इति नीत्या श्लाघनीयवंशादिकानां नायकपरिपन्थिनामसूर्यपश्येषु शुद्धान्तेषु सैनिकैः परामर्शस्यानौचि-त्यप्रवृत्तत्वात् पूर्वत्रार्धे रसाभासः। उत्तरत्र तु कृच्छ्रगतैः परपुरुषैर्विपक्षस्तुतावनौचित्याद् भावाभासः। उभयं कविसम्बन्धिनो भावस्य राजविषयस्याङ्गम्।

### सम्प्रदायप्रकाशिनी

अथोर्जस्विसमाहितालङ्कारावेकश्लोकेनोदाहरति—बन्दीकृत्येति। भो नृप ते सैनिकाः द्विषां मृगदृशो बन्दीकृत्य परितः श्लिष्यन्ति सोपहासं प्रणमन्ति केशाञ्चलादिषु बलाद् गृह्णन्ति। पश्यतामित्यानादरे षष्ठी। पश्यत एव द्विषोऽनादृत्येत्यर्थः। तैः प्रत्यर्थिभिस्तु सुकृतशतेन दृष्टोऽसि त्वद्दर्शनेन विध्वस्तविपदो वयमभूमेति स्तूयस इत्यत्र सैनिकानां यः सम्भोगशृङ्गाराभासः, यश्च द्विषां वर्ण्यनायकविषयो भावाभासस्तावुभावपि नायकविषयस्यो-पश्लोकयितृरतिभावस्याङ्गम्। अतो रसाभास इहोर्जस्वी, भावाभासः समाहित इति ज्ञेयम्।

### मधुमती

पश्यतां प्रेयसां इति अनादरे षष्ठी। रसेति। परस्त्रीविषयतया रसः, विरोधिविषयतया भावश्च अनौचि-त्यप्रवृत्तः, इति उभयोः आभासत्वम्।

## विस्तारिका

बन्दीत्यादि । नृपेति सम्बुद्धिः । ता मृगदृशः । प्रेयसामित्यनादरे षष्ठी । बलादालिङ्गनतो जातस्य कोपस्य त्याजनाय प्रणामः परितोऽस्थानेऽपि त्वरया विवेचनाभावात् । प्रत्यर्थिभिर्वैरिभिः ।

अत्रेति । भावस्य कविनिष्ठस्य रसाभासः, प्रथमार्धद्योत्योऽनौचित्यप्रवृत्तेः । भावाभासस्तु 'अपरार्धगम्यः, प्रतिपक्षविषयस्याहार्यत्वात् । तदाह—प्रथमद्वितीयेत्यादि ।

## काव्यप्रदीपः

आभासस्याङ्गत्वं यथा—

**'वन्दीकृत्य नृप द्विषां मृगदृशस्ताः पश्यतां प्रेयसां**
**श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।**
**अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे**
**विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ।।'**

अत्र प्रथमार्धे शृङ्गारोऽनुरक्तविषयतया, द्वितीयार्धे तु रतिरूपो भावः शत्रुविषयतया आभासः । तौ च राजविषयकरतिभावस्याङ्गम् ।

## आदर्शः

भावस्याङ्गे रसाभासभावाभासावाह—वन्दीकृत्येति । हे नृप, तव द्विषां मृगदृशः पत्नीः वन्दीकृत्य ते तव सैनिकाः ताः पश्यतस्तत्प्रेयसः अनादृत्य ताः श्लिष्यन्तीत्यादि । अनादरे षष्ठी । लान्ति गृह्णन्ति । तैः प्रत्यर्थिभिस्तु त्वं स्तूयसे । स्तुत्याकारमाह—अस्माकमिति । 'दुष्कृतैर्दृष्टत्वेऽपि भयाद्वैपरीत्येन सुकृतैरित्यादिस्तुतिः । आपन्निवर्त्तकत्वेन सम्बोधयति—औचित्येति । तत् तस्मात् अखिला विपदो विध्वस्ताः । अत्रेति परोढाविषयत्वाद् रसाभासः, शत्रुविषयत्वाच्च भावाभासः । अनयोराख्यातान्तनिराकाङ्क्षावाक्यव्यङ्ग्यत्वेऽपि राजस्तुतिपर्यवसायकत्वेन अस्वातन्त्र्यादङ्गतैव ।

## सुधासागरः

'बन्दीकृत्येतित्र

शार्दूलविक्रीडितं छन्दः । 'सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात् । हे नृपते सैनिकाः भटाः, द्विषां शत्रूणां मृगदृशः सुन्दरीः बन्दीकृत्य ताः पश्यतां प्रेयसाम्, अनादरे षष्ठी 'षष्ठीचानादरे' इत्यनुशासनात्, तथा च शोकानुरागतरेण चक्षुषा ताः स्वस्वयोषितः पश्यतः पतीननादृत्येत्यर्थः, श्लिष्यन्ति गाढमालिङ्गन्ति, प्रणमन्ति रिरंसया प्रसादयन्ति, लान्ति आदानं कुर्वन्ति, परितः ओष्ठललाटाक्षिषु कपोलयोश्च चुम्बन्ति, तत् तस्मात् कारणात्तैः पराजितैः प्रत्यर्थिभिर्वैरिभिरित्यमुना प्रकारेण त्वं स्तूयसे । प्रकारमाह 'हे औचित्यवारांनिधे ! अस्माकं सुकृतैरस्मत्पुण्यैदृशोर्निपतितोऽसि चक्षुर्गोचरतां प्राप्तोऽसि, अखिलाः विपदो विध्वस्ताः, दृशोरित्यत्रापि चास्माकमित्यस्यान्वयो बोध्यः । अत्र प्रथमार्द्धे शृङ्गारोऽननुरक्तविषयतया द्वितीयार्द्धे तु रतिरूपो भावः शत्रुविषयतयाऽऽहार्यत्वादाभासः । तौ च रसाभासभावाभासौ राजविषयकरतिभावस्याङ्गभूतौ । तदेतद् वृत्तिकृदाह—अत्र भावस्येत्यादि ।

**अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।**
**ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ।।१२० ।।**

**अत्र भावस्य भावप्रशमः ।**

---

### सङ्केतः

अविरलेति । अत्र तवेक्षणे क्षणात् इति भिन्नं व्याख्येयम्, अभिन्नं वा । तथा तद् शब्दः पूर्ववस्तुवाचको निर्दिष्टः, तेन यत्पदं नापेक्षते । अत्रापि राजविषयकरतेः मदभावप्रशमः अङ्गम् । प्रशमसमाहितयोः ऐकार्थ्यात् अत्र समाहितालङ्कारः ।

### बालचित्तानुरञ्जनी

भावस्याङ्गं भावशान्तिमुदाहरति अविरलेति । हे राजन् ! तव वैरिणां यो मदः मुहुः अविरलैः करवालस्य कम्पनैः भ्रुकुटीतर्जनगर्जनैश्च सह दृष्टः स मदः तव नेत्रेक्षणात् क्वापि गतः । अत्रापि राजविषयकरतिभावस्य मदलक्षणव्यभिचारिभावस्य भावप्रशमोऽङ्गम् । अत्र भावपरिहाररूपं समाहितमलङ्कारः । प्रशमसहितयोरेकार्थत्वात् भावस्याङ्गम् ।

### काव्यादर्शः

भावस्य भावशान्तिरङ्गं, यथा 'अविरले' ति । अत्रापि राजविषयरतिभावस्य मदलक्षणव्यभिचारिभावप्रशमोऽङ्गम् । अत्र भावपरिहाररूपं समाहितमलंकारः, प्रशमसमाहितशब्दयोरेकार्थत्वात् ।

### दीपिका

अविरलेत्यादि मदलिङ्गनिर्देशः । भावप्रशमो मदापरनामकगर्वप्रशमो नृपतौ रतेरङ्गमित्यर्थः । एवमुत्तरेष्वपि ।

### साहित्यचूडामणिः

अथ भावस्याङ्गं भावप्रशममुदाहरति—अविरलेति । वैरिणां चपलहर्षादिनान्तरीयकस्य मदस्य गर्वस्य व्यङ्ग्यस्य प्रशमो वर्णनीयविषयरतिरूपस्य भावस्याङ्गम् । एषु च रसवदाद्यलङ्कारव्यपदेश इत्यनन्तरमुद्धाटयिष्यते ।

### सम्प्रदायप्रकाशिनी

अथ भावशान्त्यादीनामपि गुणीभावेनालङ्कारता—अविरलेति । कम्पनैरित्यादिरुपलक्षणे तृतीया । तदुपलक्षितो मदस्तवेक्षणे सति क्षणात् पक्वापि गत इति मदरूपभावप्रशमो नायकविषयोपवर्णयितृरतिभावस्याङ्गमित्यलङ्कार एव ।

### विस्तारिका

अविरलेत्यादि । भीषणा वाचस्तर्जनानि । तथा हुङ्कारा गर्जनानि । मदोऽहङ्कृतिः । तवेक्षणे त्वद्विषयकदर्शने ।

अत्रेति । भावस्य मदस्य कोपस्य वा प्रशमो विनाशः । कविनिष्ठराजविषयकरतावङ्गम् ।

### सारबोधिनी

अविरलेति । अत्रेति । भावप्रशमो भावस्याङ्गमिति संबध्यते । एवमुत्तरत्राप्यनुषञ्जीयम् ।

ननु मदगतपदाभ्यां मदप्रशमयोर्वाच्यतया कथं प्रशमतेति चेन्न । गत इत्यनेन गमनस्य मुख्यार्थस्य बाधात् शान्त इत्यर्थो लक्ष्यते । प्रशमातिशयो व्यज्यते । एवं प्रकृतगर्वार्थकेन मदशब्देन "मदो मद्योपयोगज" इत्यनेनोक्तो मदस्तयोरभेदरूपः संबन्धोऽपि व्यज्यते । तथा च भावप्रशमोऽभिव्यक्तः । सभङ्गमिति ।

### काव्यप्रदीपः

भावशान्तेर्यथा—

**'अविरलकरवालकम्पनैर्भुकुटीतर्जनगर्जनैर्मुहुः ।**
**ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणे क्षणात् ॥**

अत्र वैरिणो गर्वरूपो भावः । तस्य शमो राजविषयकरतिभावेऽङ्गम् ।

### आदर्शः

भावाङ्गं भावप्रशममाह—अविरलेति । ददृशे अस्माभिः, तवेक्षणे त्वत्कर्मकदर्शने सति स मदः क्षणात् क्वापि गतः नष्ट इत्यर्थः । अत्रेति, अविरलेत्यादिव्यङ्ग्यस्य राजवैरिविषयवक्तृभावस्य नाशः, तन्मदनाशव्यङ्ग्यराजविषयवक्तृभावस्याङ्गमित्यर्थः । चक्रवर्त्ती तु-शत्रूणां मदरूपव्यभिचारिभावस्य नाश एवाङ्गमित्याह तन्न; मदस्य गमनाभावेन तन्नाशस्य क्वापि गत इत्यनेन लक्षणयैव गम्यत्वात् न तु व्यञ्जनया व्यङ्ग्यस्यैव च गुणीभूतत्वेनोदाहर्त्तव्यत्वात् ।

### सुधासागरः

भावशान्तेर्भावाङ्गतामुदाहरति—'अविरले'ति स्पष्टम् ।

वैतालीयं छन्दः । उक्तञ्च वृत्तरत्नाकरे—

**षड्विषमेऽष्टौ समे कलास्ताश्च समे स्युर्नो निरन्तराः ।**
**न समाऽत्र पराश्रिता कला वैतालीयेऽन्ते रलौ गुरुः ॥ इति ।**

अयमर्थः। विषमपादे षण्मात्राः ततो रगणलघुगुरवो भवन्ति। समपादे त्वष्टौ कलास्ततो रगणलघुगुरवो भवन्ति। किञ्च समे पादे षट् कलाः षट् लघवः निरन्तराः न भवन्ति। तथाऽत्र वैतालीये सर्वपादेषु समाः कलाः। समो लः पराश्रितो न भवति, समा लघुकला परया कलया सह गुरुर्न भवतीति यावदिति।

अत्र भावस्येत्यादि, वैरिणो गर्वरूपो भावस्तस्य शमो राजविषयकरतिभावेऽङ्गमित्यर्थः। ननु गत इति प्रशमस्य वाच्यतया कथं भावप्रशमतेति चेत्। उच्यते। गत इत्यनेन गमनस्य मुख्यार्थस्य बाधाच्छान्त इत्यर्थो लक्ष्यते, तेन प्रशमातिशयो व्यज्यते इति।

---

साकं कुरङ्गकदृशा मधुमानलीलां
कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते।
अन्याभिधायि तव नाम विभो गृहीतं
केनापि तत्र विषमामकरोदवस्थाम्॥ १२१॥

अत्र त्रासोदयः।

---

### सङ्केतः

अत्र त्रासस्येति। भावस्य। रतेरङ्गमिति शेषः। अत्र भावोदयालङ्कारः।

### बालचित्तानुरञ्जनी

भावोदयमुदाहरति साकमिति। हे राजन् तव वैरिणि विषमावस्थामकरोत। अत्र राजविषयकरतिभावस्य शत्रूणां विषमावस्थयात्र सलक्षणो भावोदयो नामलङ्कारः।

### काव्यादर्शः

भावोदयो भावस्याङ्गं यथा 'साकम्' इति। अत्रारीणां विषमावस्थया त्रासलक्षणभावोदयो रतेरङ्गम्। अत्र भावोदयनामालंकारः।

### दीपिका

सार्द्धमिति सहार्थे। तव नाम त्वद्वाचकं पदमनेकार्थम्। तच्च प्रकरणादिसहायेनान्याभिधायि। केनापि हेतुना जनेन वा। विषमां भयत्रासकम्पोद्वेगकर्बुरिताम्। त्रासस्येति भावान्तरसाचिव्येन पुष्टस्येत्यर्थः।

### साहित्यचूडामणिः

भावोदयमुदाहरति—साकमिति। केनापि परिजनादिना। अन्याभिधायि यथा विश्नाथशब्देन राजा परमेश्वरोऽप्युच्यते।

### सम्प्रदायप्रकाशिनी

साकं कुरङ्गकेति। सुहृद्भिर्वधूभिश्चापि साकं मधुपानाय प्रवृत्ते वैरिणि केनचित् त्वत्सनामार्थान्तरप्रतिपादनायापि त्वन्नाम्नि गृहीते विषमावस्थाभूदिति योऽयं त्रासोदयः स रतिभावस्याङ्गम्।

## विस्तारिका

साकमित्यादि। कुरङ्गकदृशा सुहृदभिश्च साकमित्यन्वयः। अन्याभिधाय्यन्याभिप्रायकम्। तव नाम त्वत्सजातीयम्। विषमां कातरप्रेक्षणापसारणमूर्च्छादिरूपाम्।

अत्रेति। कविनिष्ठभावस्याङ्गमिति नेयम्।

## सारबोधिनी

साकमिति। तत्र वैरिणि।

## काव्यप्रदीपः

भावोदयस्य यथा—

**'साकं कुरङ्गकदृशा मधुपानलीलाः**
**कर्तुं सुहृद्भिरपि वैरिणि ते प्रवृत्ते।**
**अन्याभिधायि तव नाम विभो गृहीतं**
**केनापि तत्र विषमामकरोदवस्थाम्॥'**

अत्र विषमावस्थाव्यङ्ग्यस्य त्रासस्वरूपभावस्योदयो राजविषयरतिभावस्य।

## आदर्शः

भावाङ्गं भावोदयमाह—साकमिति। हे विभो, कुरङ्गकदृशा सुहृद्भिरपि साकं सह तव वैरिणि मधुपानलीलां कर्तुं प्रवृत्ते सति, अन्यार्थकं तव नाम केनापि गृहीतं सत् तेषामवस्थां विषमां व्याकुलत्वेन विपर्यस्ताम् अकरोदित्यर्थः। अत्रेति, पूर्वार्द्धे त्रासाप्रतीत्या तदनुवृत्त्यभावात् पदार्द्धे तत्प्रतीत्या तदुदयः। स चात्र निराकाङ्क्षवाक्यव्यङ्ग्योऽपि तद्विषयभावस्यैव पर्यवसायकः, तेन तद्विषयभावस्य अङ्गम्।

## सुधासागरः

भावोदयस्य भावाङ्गतामुदाहरति—'साकमि'ति।

वसन्ततिलका छन्दः। हे विभो राजन्! ते वैरिणि कुरङ्गकदृशा मृगाक्ष्या सुहृद्भिः स्निग्धैरपि साकं सार्द्धं मधुपानलीलां मद्यपानक्रीडां कर्तुं प्रवृत्ते सति केनापि जनेन अन्याभिधायि अनेकार्थतया त्वद्भिन्नस्यापि बोधकं तव नाम त्वद्वाचकपदं गृहीतमुच्चारितं सत् तत्र क्रीडामन्दिरे, विषमां कम्पादिकर्त्रीमवस्थामकरोदित्यर्थः। अत्र त्रासस्योदय इति। विषमावस्थाव्यङ्ग्यस्य त्रासस्वरूपभावस्योदयः राजविषयकरतिभावस्याङ्गमित्यर्थः।

**असोढा तत्कालोल्लसदसहभावस्य तपसः**
**कथानां विश्रम्भेष्वथ च रसिकः शैलदुहितुः ।**
**प्रमोदं वो दिश्यात्कपटबटुवेषापनयने**
**त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥ १२२ ॥**

अत्रावेगधैर्ययोः सन्धिः ।

---

### सङ्केतः

असोढेति । 'तपो मुञ्चत्वेषा' इत्येव भगवतः अपेक्षितमिति अक्षमा । विश्रब्धजल्पितश्रवणे रसिकः । प्रकृते स्मरेणोपलक्षितो हरः स्मरहरः इत्युचितम्, न तु स्मरं हरतीति । अत्र शिवविषयरतेः सन्धिः अङ्गम् ।

### बालचित्तानुरञ्जनी

भावस्याङ्गं भावसंधिमुदाहरति असोढेति । शैलदुहितुः तस्मिन् काले उल्लसन् असहभावः अशक्तत्वं । पार्वतीदौर्बल्यं यत्र तत् तस्या तपसः । कर्मणि षष्ठी । असोढा तपो मुञ्च त्वमिति भगवतापेक्षितमितित्वसहत्वं तपसः । अथ च कथानां विश्रम्भेषु रसिकः । अस्या विस्रब्धं श्रुणोतीत्यभिलाषवानित्यर्थः । कपटेन यो ब्रह्मचारिवेषः तस्यापनयेन त्वराशैथिल्याभ्यां युगपदभियुक्तः प्रेरितः स्मरहरः वो युष्मभ्यं प्रमोदं दिश्यात् ।

अत्र त्वराभिव्यङ्ग्य आवेगः, शैथिल्याभिव्यङ्ग्यं धैर्यम्, तयोः संधिः स्मरहरविषयस्य रत्याख्याभावस्याङ्गम् । अत्र भावसंधिरलङ्कारः ।

### काव्यादर्शः

'असोढे' ति । 'तपो मुञ्चत्वेषा' इति भगवतोपेक्षितमित्यसहनत्वं तपसः । विश्रब्धजल्पितमस्याः शृणोमीति च रसिकः अभियुक्त उद्योगेनाक्षिप्तः । अत्रावेगधैर्ययोः स्पर्धिभावेनोपनिबन्धः शिवविषयाया रतेरङ्गम् । अत्र भावसंधिरलंकारः ।

### विवेकः

असोढेत्यादि 'अद्याप्यहमुपेक्षित इत्यसहनत्वं तपसः ।'

### दीपिका

तस्मिन काले उल्लसन् असहभावः कार्यजननकालक्षेपासहिष्णुत्वं यस्य तथाभूतस्य तपसोऽसोढा प्रतिरोधासमर्थः । अभियुक्त आविष्टः ।

## साहित्यचूडामणिः

नेपथ्यावधूनने । त्वराशैथिल्याभ्याम् आदरोपेक्षाभ्याम्, युगपद् एकदैवाक्रान्तः । आवेगधैर्ययोस्त्वराशैथिल्यशब्दद्वयव्यङ्ग्योः सन्धिः ।

## सम्प्रदायप्रकाशिनी

असोढा तत्कालोल्लसदिति । असहभावोऽशक्तता दौर्बल्यमित्यर्थः । तत्कालमुल्लसत्यविलम्बितमाविर्भत्यसहभावो यत्र तस्य देव्युग्रतपसोऽसोढा । तां तथा शरीरनिरपेक्षं तपस्तप्यमानां सोढुमपारयन्नित्यनेन कपटवटुवेषापनयने त्वराहेतुरुक्तः । अथ शैलदुहितुः कथानां विस्रम्भे रसिक इति तु वेषापनयनामान्द्ये । युगपदभियुक्त इति वेषापनयनविषययोस्त्वरामान्द्ययोस्तुल्योगिता ।

अत्रावेगधैर्ययोरिति । आवेगस्त्वराभिव्यङ्ग्यः । धैर्यं शैथिल्याभिव्यङ्ग्यम् । सन्धिः सम्भूयवृत्तिता । स भावस्य गुणीभवति ।

## विस्तारिका

असोढेत्यादि । कपटबटुवेषापनयनविषये त्वरा शैथिल्यमाहार्यम् । तपसोऽसोढा झटिति फलं दत्त्वा, ततः सकाशात् पार्वती निवर्तयितुकामः । तपो विशेषयति—तत्कालेति । तत्काले बटुप्रादुर्भावसमये उल्लसन् प्रादुर्भवन्, असद्भावः फलप्रदाने कालविलम्बाक्षमत्त्वम् । कथानां विश्रम्मेषु विश्वस्तकथासु ।

**अत्रेति । त्वरागम्य आवेगः, शैथिल्यगम्यं धैर्यम् ।**

**पश्येदिति । परिवृढः प्रभुः, कञ्चिदभियोक्तारम् ।**

## सारबोधिनी

असोढेति । तपसोऽसोढा झटिति फलं दत्त्वा तपसः सकाशात् पार्वतीं निवर्तयितुं तयोर्विशेषयति तत्कालेत्यादि । तत्काले वपुःप्रादुर्भावकाले उल्लसन् प्रादुर्भवन्, असहभावः फलप्रदाने कालविलम्बाक्षमत्वम् । अत्रेति । त्वरागम्य आवेगः शैथिल्यगम्यं धैर्यम् । यस्येत्यादि । किञ्चिदभियोक्तारम् ।

## काव्यप्रदीपः

भावसंधेर्यथा—

**'असोढा तत्कालोल्लसदसहभावस्य तपसः**
**कथानां विस्रम्भेष्वथ च रसिकः शैलदुहितुः ।'**

**प्रमोदं वो दिश्यात्कपटबटुवेषापनयने**
**त्वराशैथिल्याभ्यां युगपदभियुक्तः स्मरहरः ॥**

अत्र स्मरहरगतयोरावेगधैर्ययोः संधिः शिवविषयरतिभावस्याङ्गम् ।

**आदर्शः**

भावाङ्गं भावसन्धिमाह—असोढेति । तपस्यन्तीं पार्वती जटिलविप्ररूपेण छलयतो महेशस्य वर्णनमिदम् । कपटवटुवेशापनयने युगपत् एकदा त्वराशैथिल्याभ्यामभियुक्तः स्मरहरः वः प्रमोदं दिश्यात् । तत्र त्वराहेतुः प्रथमचरणार्थः । तत्काले उल्लसन् उद्बुध्यमानः असहभावो दुःसहत्वं यस्य तादृशस्य तपसः असोढा सोढुमसामर्थः । तपःकृष्टत्वेन स्वरूपमदर्शयित्वा स्थातुमसामर्थ्यात् । शैथिल्यहेतुर्द्वितीयचरणार्थः । विश्रम्भो विश्वासः ।

**सुधासागरः**

भावसन्धेर्भावाङ्गतामुदाहरति—'असोढे'-ति ।

शिखरिणी छन्दः । 'रसै रुद्रैश्छिन्ना यमनसभलागः शिखरिणी'—इति लक्षणात् । तत्काले तत्क्षणे उल्लसन् असहभावः कालापेक्षाऽसहिष्णुता अर्थाद् गौर्याः यत्र तथाभूतस्य तपसोऽसोढा सोढुमशक्तः, अथ च शैलदुहितुः पार्वत्याः कथानां शिवनुरागव्यञ्जकालापानां विस्रम्भेषु प्रणयेषु रसिकः सतृष्णः, अत एव कपटवटोर्व्याजब्रह्मचारिणो वेषस्य कृत्रिमाकारस्यापनयने परित्यागे त्वराशैथिल्याभ्यां युगपदभियुक्तः समकालमेवाऽऽविष्टः स्मरहरो महेश्वरो वो युष्मभ्यं प्रमोदं दिश्यात् आनन्दं दद्यादित्यर्थः । अत्रेत्यादि । स्मरहरगतयोरावेगधैर्ययोः सन्धिर्नृपविषयकरतिभावस्याङ्गमित्यर्थः ।

---

पश्येत्कश्चिच्चल चपल रे का त्वराऽहं कुमारी
हस्तालम्बं वितर ह ह हा व्युत्क्रमः क्वासि यासि।
इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित्फलकिसलयान्याददानाऽभिधत्ते॥ १२३ ॥

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां शबलता।

एते च रसवदाद्यलङ्काराः। यद्यपि भावोदयभावसन्धिभावशबलत्वानि नालङ्कारतया उक्तानि तथापि कश्चिद् ब्रूयादित्येवमुक्तम्।

यद्यपि न नास्ति कश्चिद्विषयः यत्र ध्वनिगुणीभूतव्यङ्ग्ययोः स्वप्रभेदादिभिः सह सङ्करः संसृष्टिर्वा नास्ति, तथापि प्राधान्येन व्यपदेशा भवन्ती' ति क्वचित्केनचिद्व्यवहारः।

---

**सङ्केतः**

पश्येदिति। वने काचित् कन्या रतार्थिनं पान्थं प्रत्याह। पश्येत् कश्चित् इति आशङ्का। रे चञ्चल! चल—गच्छ इति असूया। का त्वरा? इति धृतिः। कुमारी अस्मि इति स्मृतिः। हस्तालम्बं वितर इत्यौत्सुक्यम्। ह ह! इति श्रमः। हा! इति दैन्यम्। व्युत्क्रमः इति विबोधः। क्वासि यासि? इति औत्सुक्यम्। एषां पूर्वपूर्वोपमर्देन उपनिबन्धः शबलता नृपविषयरतेः अङ्गम्। "अन्यत्र तु प्रधाने वाक्यार्थे यत्र अङ्गभूतः रसादिः, तत्र गुणीभूतव्यङ्ग्ये रसवदादयोऽलङ्काराः।" इति यदुक्तम्—तथा चोदाहृतमित्याह—एते चेति। रसः—शृङ्गारादिः, प्रेयः—प्रियतराख्यानम्, ऊर्जः—बलम्। तानि विद्यन्ते येषु निबन्धेषु तानि रसवदादीनि।

कश्चित् प्राश्निकाधुनिकः। एवं अलङ्कारतया। उक्तमिति। अस्माभिरिति शेषः।

यद्यपीति। अयं भावः—यद्यपि रसादितात्पर्यालोचनेन मध्यमकाव्येऽपि पुनः ध्वनावेव विश्रान्तिरिति, ध्वनिगुणीभूतव्यङ्ग्ययोः सर्वत्र सङ्करः संसृष्टिर्वा। तथापि यत्र यस्मात् चारुताप्रतिपत्तिः तत्र तेन व्यपदेशः कार्यः। ततोऽत्र गुणीभूतव्यङ्ग्यमेव प्रधानम्, न ध्वनिः इत्यर्थः। स्वप्रभेदादीत्यादिशब्दात् अलङ्काराः ग्राह्याः।

**बालचित्तानुरञ्जनी**

भावस्याङ्गभूतां भावशबलतामाह पश्येदिति। वने काचित् कन्या रत्यर्थिनं प्रत्याह। कश्चित् पश्येत्। हे चपल चञ्चल का त्वरा? अहं कुमार्यस्मि। हस्तालम्बं वितर देहि। हहहा व्युत्क्रमः व्युत्क्रमो जायते। असोत्यव्ययं

युष्मदर्थे । त्वं क्व यासि ? इत्थं पृथ्वीपरिवृढ राजन् ! अरण्यवृत्तेः भवद्विद्विषः कन्या फलकिसलयान्याददाना सती कञ्चिदभिधत्ते । इति राजानं कश्चित् स्तौति । अत्र केषां शबलता ? तत्राह अत्रेति । पश्येत् कश्चिदिति शङ्का । रे चपलेत्यसूया । का त्वरेति धृतिः । अहं कुमारीति स्मृतिः । हस्तालम्बं वितरेत्यौत्सुक्यम् । एतेषां शबलता पूर्वपूर्वोपमर्देनोपनिबद्धा । सा राजविषयक रतिभावस्याङ्गमित्यर्थः ।

अत्र भावशबलतैवालङ्कारः । यत् प्रतिज्ञातं रसवदादयोऽलङ्कारा वक्ष्यन्त इति तत्प्रस्तुतमित्यनुस्मारयति । एते चेति । त एवार्थे प्राधान्ये सति ध्वनिना व्याप्तविषयत्वात् । रसः शृङ्गारादिः । प्रेयः प्रियतराख्यानम् । ऊर्जो बलं तानि विद्यन्ते येषु समाहितेषु [?] एते रसवदाद्यलङ्कारा उक्ता इत्यर्थः ।

ननु रसादिचतुष्टयस्य रसवदाद्यलङ्कारत्वं युक्तं न भावोदयादीनां पुरातनैरलङ्कारकारैरनुक्तत्वादिति शङ्कामनुवदति यद्यपीति । अप्राधान्यात् रसादिचतुष्टयस्य अलङ्कारत्ववत् भावोदयादीनामप्यप्राधान्यात् अलङ्कारत्वं दुर्वारम् । भावोदयभावसंधिभावशबलताश्च पृथगलङ्कारा इत्यलङ्कारसर्वस्वकारसूत्रानुरोधेन कश्चिद् ब्रूयात् तद-प्यङ्गीकार्यमित्येवमुक्तमिति परिहरति तथापीति । एवमिति । अलङ्कारतयेत्यर्थः ।

ननु गुणीभूतव्यङ्ग्यस्य मध्यमकाव्यस्यापि रसभावार्थपर्यालोचनया उत्तमकाव्य एव पर्यवसानान्मध्यमो-त्तमकाव्ययोः सङ्करः संसृष्टिर्वा स्यात् इत्याशङ्कामनुवदति यद्यपीति । स्वप्रभेदादिभिरित्यादिशब्देनालङ्कारो ग्राह्यः । स्वशब्देन मध्यमोत्तमशब्दयोः काव्ययोर्ग्रहणम् । सालङ्कारैर्ध्वनिप्रभेदैः, सालङ्कारैर्गुणीभूतव्यङ्ग्यैरित्यर्थः । यद्यपि साङ्कर्यादिकमस्ति तथापि न्यायान्निर्णय इति परिहरति तथापीति । प्राधान्यमत्र वर्णनीयतया द्रष्टव्यम् । अयं स रशनोत्कर्षीत्यादौ कविना वर्ण्यमानत्वात् [शृङ्गारस्य] प्राधान्यमस्तीति मध्यमकाव्यमस्तीति भावः ।

## काव्यादर्शः

'पश्येत् कश्चिद्' इत्याशङ्का । 'चपल रे चल गच्छ' इत्यसूया । 'का त्वरा' इति धृतिः । 'अहं कुमारी' इति स्मृतिः । 'हस्तालम्बं वितर' इत्यौत्सुक्यम् । 'हह' इति श्रमः । 'ह' इति दैन्यम् । ''व्युत्क्रमः इति विबोधः । 'क्वासि यासि' इत्यौत्सुक्यम् । एषां पूर्वपूर्वोपमर्देनोपनिबन्धः । सबलता राजविषयरतेरङ्गम् । भावशबलतैवालं-कारः । अन्यत्र तु प्रधाने वाक्यार्थेऽङ्गभूतो रसादिर्गुणीभूतो रसवदाद्यलंकार इति यदुक्तं तदिहोदाहृतमित्याह—एते चेति ।

ननु गुणीभूतव्यङ्ग्योऽपि काव्यप्रकारो रसभावतात्पर्यपर्यालोचनेन पुनर्ध्वनिरेव संपद्यते, इति ध्वनिगुणी-भूतव्यङ्ग्ययोः सर्वत्र संकरः संसृष्टिर्वेत्या शङ्क्याह—यद्यपीति । अयमर्थः । यद्यस्य चारुत्वप्रतीतिसहायता तदनेन व्यपदेशो, न सर्वत्र ध्वनिरागिणा भाव्यम् । यथा—

**"पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।**
**सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ।"**

'अनेन' इति अलक्तकोपरक्तस्य हि चन्द्रस्य परभागभासः । अनवरतपादपतनप्रसादनैर्विना न पत्युर्झटिति यथेष्टानुवर्तिन्या भाव्यमिति चोपदेशः । 'शिरोविधृता च या चन्द्रकला तामपि परिभव' इति सपत्नीलोकावजय उक्तः । निर्वचनमिति लज्जावहित्थहर्षेर्ष्यासाध्वससौभाग्याभिमानादि यद्यपि ध्वन्यते तथापि तद् निर्वचनशब्दार्थस्य

कुमारीजनोचितस्याप्रतिपत्तिलक्षणस्यार्थस्योपस्कारकतां याति, उपस्कृतस्त्वर्थः शृङ्गाराङ्गतामेति। निर्वचनमित्युक्त्या च व्यङ्ग्यस्यार्थस्य विषयीकृतत्वाद् गुणीभाव एव शोभते।

**विवेकः**

अभियुक्त उद्योगेनाक्षिप्तः' (रु. सं. ४० पृ.) पश्येदित्यादि—अनेनान्यगोपनीयः पुरुषव्यापारः शङ्काहेतुराक्षिप्यते, अतएवान्यदर्शनं दोषत्वेनोद्भावयति। स्वात्मनाऽनुमन्यत इति कृत्वा प्रारब्धानुवन्धाऽसूया प्रकाशिका। चलेत्यादि भणति। अथ तत्समाश्वासनगर्भं त्वरामात्रनिवारणाम्। धृतिसूचकमाह का त्वरेति एवमहं कुमारीत्यादौ यथाक्रमं स्मृत्यादयो द्रष्टव्याः।

प्रागुक्तं दर्शयति एते चेति चोऽवधारणे। एत एव रसवदाद्यलङ्कारा दण्डिभामहादेभिर्ये लक्षितास्त इत्यर्थः। भामहेन हि 'रसवद्दर्शितस्पष्टशृङ्गारादिरसोदय' मित्यादिना (भा. का. अ. ३/८) यत्र वाक्यार्थीभूतो रसः स रसवदलङ्कारस्य विषय इत्यभ्युपगताम्। एतच्चासमीचीनं, रसस्य वाक्यार्थीभावेऽलङ्कारत्वानुपपत्तेः। अलङ्कारो हीच्छाऽऽयत्तः पृथक्सिद्धचारुत्वहेतुः प्रसिद्धो, न पुनरात्मैवात्मनोऽलङ्कारः सम्भवति। नहि य एव रसोऽलङ्कार्यः स एवालङ्कारो भवति। एवमुद्भटेनापि 'यत्र चेतनानां वाक्यार्थीभावः स रसवादाद्यलङ्कारस्य विषय इति [भामहविवरणे] (ध्व. आ. २/५ वृ; लो. द्र;) यदुक्तं तदपि न सम्यक्, उपमाऽऽदीनां प्रविरलविषयत्वापत्तेः। यतो रामादिचरितवर्णनमयं काव्यं, तत्र चोपमाऽऽदयः सन्तोऽपि न पृथक् सत्तां लब्धुं क्षमा भवेयुः, रसवदाद्यलङ्कारैरेव काव्यस्य स्पष्टीकारात्। 'अचेतनवर्णने तु क्वचित् सम्भवात् यदि वा निर्विषयतैव तेषां स्यात् यस्माद् यत्राप्यचेतनानां वा रसवदाद्येकार्थीभावस्तत्रापि यथाकथञ्चिच्चैतन्याध्यारोपाच्चेतनवृत्तान्तयोजनया भवितव्यमेव' (का. अ. सू. वृ. ४/४५ वृः) ततश्चोपमाऽऽदीनां विषये सर्वत्र रसवदादेः साम्राज्यमिति। अथवा पारमार्थिकचेतनानां भावो रसवदादेर्विषयो नत्वध्यारोपितचैतन्यानामित्युच्यते (च्येत) तदानीं रसनिधानभूतस्य काव्यप्रबन्धस्य नीरसत्वभ्युपगतं स्यात्' (ध्व. आ. वृ. २/६)। यथा—तन्वी मेघजलार्द्रपल्लवतया धौताधरेवाश्रुभिः शून्येवाभरणैः स्वकालविरहाद्विश्रान्तपुष्पोद्गमा। चिन्तामौनमिवाश्रिता मधुकृतां शब्दैर्विना लक्ष्यते चण्डी मामवधूय पादपतितं जातानुतापेव सा॥ (वि. उ. ४/३८) इति। अत्र ह्युन्मादेन प्रकाश्यमानो विप्रलम्भशृङ्गार एव विलापेन करुणो वा विजृम्भते। अध्यारोपिताच्चैतन्यात्तदनुमतस्य रसवदाद्यलङ्कारस्यापि यद्ययमविषयस्तर्हि का वार्ताऽत्र रसस्योति भावः। तस्मात् सर्वैरेवानुप्रासोपमाऽऽदिभिरलङ्कारैरलङ्कार्ये काव्यस्यात्मभूते रसे रसध्वनिः, अङ्गभूते हि रसादौ रसवदाद्यलङ्कार इत्ययमेव पक्षः श्रेयानिति। 'यथा च चन्द्रादिनोपमानेन वदनाद्यलङ्क्रियते तथा रसादिनाऽपि रसादिकं सरसीक्रियते इति स्वयंवेदनसिद्धमेव, ततश्चोपमाना (पमाऽऽ) देरिव रसादेरप्यलङ्कारता युज्यत एव। अतएव रसेन विभावादीनां मध्ये किमलङ्क्रियत इति यत् केनचिच्चोदितं तदनभ्युपगमपराहतमेव प्रस्तुतस्यार्थस्यालङ्कार्यत्वेनाभिधानात्' (ध्व. आ. २/५ वृ.; लो. ७२/७३ पृ:)। नन्वेवं महापुरुष। चरिताङ्गतालक्षणस्योदात्तालङ्कारस्य निर्विषयत्वं स्यात्, तद्विषयस्य रसवदादिना व्याप्तत्वात्? न, स्वविषये तस्यैतदपवादकत्वात्, रसादौ च वाक्यार्थीभूते यत्न रसादीनामङ्गत्वं स रसवदलङ्कारस्येति। तत्र रसवदुदाहरणं अयं स इत्यादि श्लोकद्वयम्। एवं प्रियतरं प्रेयो रत्या प्रियतयोपलक्षितं भाववृन्दं विद्यते यत्र निबन्धने व्यापारध्वनि तत् प्रेयस्वत्। यथा अत्युच्चा इति। यथा त्वं पृथिवी धारयसीत्यनलङ्कृतो वाक्यार्थस्तथा नाथं सुन्दरतरीभूतो वाक्यार्थ इति प्रेयसस्त्वलङ्कारता।

एवमुत्तरत्रापि बोद्धव्यं यदाह—रत्यादिकानां भावानामनुभावादि- सूचनैः । यत् काव्यं बध्यते सद्‌भिस्तत् प्रेयस्व-दुदाहृतम् । इति (का. अ. सा. सं. ४/४३) रतिश्चात्र देवविषया, न तु कान्ताविषया । ऊर्जो बलं विद्यते यत्र तदुर्जस्वद् यथा वन्दीकृत्येत्यादि । हठसंग्रहो रागकारणकः शास्त्रविरुद्ध इत्यूर्जस्विता । कामक्रोधादिभिः कारणैः शास्त्रविरुद्धेन रूपेण रसभावा यत्र निबध्यन्ते तत्रायमलङ्कारः । शास्त्रविरोधे तु रसवत्प्रेयस्वदलङ्कारावेव यदुक्तम्—(का. अ. सा. सं. ४/४६) अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात् । भावनाञ्च रसाञ्च बन्ध ऊर्जस्व (स्वि) कथ्यत इति । प्रशमः परिहारः समाहित इत्यनर्थानन्तरं यथा अविरलेत्यादि । यदाह (का. अ. सा. सं. ४/४८) रसभावतदाभासवृत्तेः प्रशमबन्धनम् । अन्यानुभावनि शून्यरूपं यत्तत् समाहित' मिति । अस्यार्थः—अनौचित्यप्रवृत्ता रसा भावा वा तदाभासशब्दवाच्याः, तेन न शास्त्रविरुद्धानां रसानां भावानां वा यत्र प्रशान्तिर्न च बध्यते (निबध्यते) तत् परिहाररूपत्वात् समाहितम् । (का. अ. सा. सं. लघुवृ.) न चात्र रसान्तरस्य प्रादुर्भाव इत्याह—अन्येति । रसस्यानुभावैर्निःशेषेण शून्यमिति ।

कश्चिद् ब्रूयादिति विच्छितीनामानन्त्यादिति भावः । तथाहि भावोदयभावसन्धिभावशबलताश्च रसवदादिभ्यः पृथगलङ्कारा इदानीन्तनाः पठन्ति । आचार्योऽप्याह—काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते । ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति ॥ इति ।

यद्यपि यत्र यत्र गुणीभूतव्यङ्ग्यत्वमस्त्येवेति नियमस्तथापि यत्र गुणीभूतव्यङ्ग्यस्तत्र 'यदा तात्पर्येण रसभावेन पर्यालोचना क्रियते तदा ध्वनेः सद्भावादनयोः साङ्कर्यमस्त्येवेत्यभिप्रेत्याह यद्यपीति । परिहरति—तथाऽपीति । अत्र हेतुः प्रधानेनेति—प्राधान्यन्तु चारुत्वातिशयनिबन्धनम् । तथाहि **"पत्युः शिरश्चन्द्र कलामनेन स्पृशेति सख्या परिहासपूर्वम् । सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥** (कु. स. ७/१९) (ध्व. आ. ३/४० वृ:) इत्यादौ यदा तात्पर्येण रसादिपर्यालोचना क्रियते तदानीं हर्षेर्ष्यासाध्वसादिसंवलितलज्जालक्षण-व्यभिचारिप्रकाशितस्य शृङ्गाररस्य प्रतीतिरुदेतीति यद्यपि ध्वनित्वं तथाऽपि हर्षादिसंवलिताया लज्जाया व्यज्यमानाया अपि 'निर्वचन' मित्यनेन स्वोक्त्या किञ्चिद्विषयीकृतत्वाद् गुणीभाव एव शोभाऽतिशयहेतुरिति तेनैवात्र व्यवहारः ।

## दीपिका

पश्येत् कश्चिदिति शङ्का, तद्धेतुश्चान्यसङ्गोऽप्युपुरुषव्यापारः प्रतीयते । चलेत्यादिना काकुवशाद्रागानुविद्धाऽनुसूया । का त्वरेति आवेगविशृङ्खलत्वसंस्थापनरूपा धृतिः । अहं कुमारीति प्रत्यवायाभाववेदनानुगुणा स्मृतिः । हस्तालम्बं वितरेति फलाद्यवचयनश्रमात्तदङ्गस्पर्शौत्सुक्यात्तस्य च क्षणमात्रविलम्बेऽपि कातर्य्यरूपदैन्याद्युक्तिः । ह ह हा व्युत्क्रम इति तत्त्वानुसन्धानरूपमतिवितर्कशङ्कासम्भ्रमोक्तिः । क्वेत्यादि तदौदासीन्यदर्शनात् पुनर्दैन्यम् । परिवृढः प्रभुः । कश्चिदभियोक्तारमित्थमभिधत्त इत्यन्वयः ।

अत्रेति । शङ्कादिदैन्यान्तमुदाहृतिगतवितरेति पर्यन्तद्योत्यमुक्तरीत्या ज्ञेयम् । दैन्यादीनामिति । तथा चोपलक्षणतया मत्यादीनामुक्तरीत्या परिग्रहः कार्यः । विरोधिनां पूर्वोपमर्दनेनोदयशालिनाम् । दैन्यविबोधिनामिति पाठे ह ह हेत्यत्र मतिकृतः कथं पुनः कुमार्या ममेदृशं स्वातन्त्र्यं युज्येतेति वितर्कजनको विबोधप्रतिभासो ग्राह्यः । शबलता समुदायतया प्रतिसन्धानम् ।

एतइति । एवंजातीयाः । अत एवार्थप्राधान्ये सति ध्वनिना व्याप्तविषयत्वात् । तत्राद्ययो रसवदलङ्करणम्, शेषेषु क्रमेण प्रेय—ऊर्जस्वि समाहित-भावोदयभावसन्धिभावशबलत्वाद्याः षडलङ्कृतय उक्तानि प्राचीनैः । ब्रुयादिति सम्भावनायां लिङ् । उक्तमिति । पूर्वोदाहृत्यनन्तरम् । एते च रसवदाद्यलङ्कारा इत्युक्तिः सर्वेषामप्यलङ्कारव्यपदेशपरेत्यर्थः । अथ कथमेषामलङ्कारता? वाच्यवाचकरूपाङ्गोपस्कारेण मुखेन हि रसाद्युपकारका अलङ्कारा उच्यन्ते, रूपकानुप्रासादौ तथैवाङ्गीकारात् । न चैवमिह, वाच्यवाचकाभ्यामन्यैरुपकार्य्यत्वात्, इति चेत्? इह केचिदाहुः रसाद्युपकृतिमात्रेणैबेहालङ्कारव्यदेशो भाक्तश्चिरन्तनप्रसिद्ध्याऽङ्गीकार्य्य इति । तत्र, मुख्गतयैवोपपादयिष्यमाणत्वात् । रसाद्युपकरणमात्रेणालङ्करणत्वम् । रूपकादौ तु वाच्यद्युपधानमजागलस्तनन्यायेनेत्यपरे, तदपि रिक्तम्, वाच्यवाचकादिष्वप्यलङ्कारव्यदेशापत्तेरित्युक्तत्वात् ।

तस्मात् स्वव्यञ्जकवाच्याद्युपस्कृतै रसादिभिरङ्गभूतैरङ्गिनो व्यञ्जकवाच्यवाचकोपस्कारद्वारेणोपकुर्वद्भिरलङ्कारव्यपदेशो लभ्यत इत्यास्माकः पक्षः । समासोक्तौ तु नायकादिव्यवहारमात्रस्यैवालङ्कारता, न त्वास्वादस्य, तस्योक्तरीतिविरहात् । यथा चोपमाऽऽदिः स्वसन्निवेशेनान्वयमुपस्कुरुते, तथा रसादिमपीति सर्वमनाविलम् ।

ननु मिश्रीभावस्य पृथग् वक्ष्यमाणत्वात् सजातीयादिभिरमिश्रितानामेव गुणीभूतव्यङ्ग्यभेदानामुदाहृतयोऽत्र प्रकरणे उल्लेख्याः न च "अयं स रसनो" इत्यादेः, अप्रधानभूतकरुणादिसम्भेदादित्याह—यद्यपीति । स्वप्रभेदाः सजातीयभेदाः । आदिना विजातीयवाच्यालङ्कृतिपरिग्रह ।

अयमर्थः—न खलु ध्वनित्वगुणीभूतव्यङ्ग्यत्वे तद्विशेषो वा गोत्वाश्वत्वादिवद् । वैयधिकरण्यनियता धर्माः स्वीक्रियन्ते, किन्त्वौपाधिकाः । ततश्चोपाधिसमावेशात्तेषामपि समावेशे यदा यस्य प्रधानोपरकारकत्वमुत्कृष्यते तदा तस्योपाधेर्मुख्यत्वेन व्यवहारः । 'अयं स' इत्यादौ करुणादिप्राधान्येऽपि सम्भोगादिशाबल्येनास्वादः प्रकृष्यत इति तद्द्वारैव व्यवहारः श्रेयानिति गुणीभूतव्यङ्ग्यव्यपदेश एव प्रधानम् । संस्कारतारतम्यस्य सम्यगभावस्थले च मिश्रीभावव्यपदेशः साधुः, अतथाभावे तु क्वचिन्मिश्रामिश्रीभावोदाहृतिः संभेदमात्रमूलतया साध्यत इति सन्तोष्टव्यम् ।

**दर्पणः**

पश्येत्कश्चिदिति । अत्र यं पुरुषं ब्रवीति तस्मात् समं गोप्यः कश्चिद्व्यापार आक्षिप्यते । तेनात्र शङ्का च । त्वरेति । आवेगविशृङ्खलार्थ स्थापनरूपा धृतिः । अहं कुमारीति स्मृतिः । हस्तालम्बमित्यादिना तदङ्गस्य औत्सुक्यात् न विफलावचः **[?]** श्रमः । कातर्यप्रकटनं दैन्यम् । हहहा व्युत्क्रमविशेषेणं कथमेवं मया कुमार्या क्रियत इति बोधोऽयमिति यावत् । नीतिमार्गानुस्मृत्यादेरेवार्थनिर्धारणमिति । क्वासि यासीति । तस्य तद्गरागातिरेकबोधार्थं कञ्चित् कुतश्चिन्मिथ्यागमनमालोक्यौत्सुक्यम् ।

रसवदादीति । अयं स रशनेत्यत्र कैलासालयेत्यत्र च रसवदलङ्कारः । अत्युच्चा इत्यादिषु षट्सु क्रमेण प्रेय ऊर्जस्वी समाहितभावोदयभावसंधिभावशबलता व्याख्याताः । षट् प्राचीनैरुक्ताः । एषां गुणीभूतरसादीनां स्वव्यञ्जकवाच्यत्वाच्चमत्कारोपस्कृतामलङ्कारव्यपदेशः । ननु ध्वनिगुणीभूतव्यङ्ग्यानां ध्वनिमिश्रणस्य पृथग्वक्ष्यमाणत्वात् शुद्धानामेवोदाहरणम् । अयं स रशनेत्यादौ तु करुणादिसंभेद इत्याह यद्यपीति । स्वप्रभेदेः सजातीयप्र-

भेदैः अयं स इत्यादौ करुणादेस्तत्प्राधान्येऽपि संभोगशृङ्गारादिद्वारेणैवास्वादप्रकर्ष इति तेनैव गुणीभूतेन व्यवहारो न्याय्यः। यच्चैवंभूतानामपि मिश्रीभावस्थलेऽप्युदाहरणं तस्मिन् मिश्रीभावफलमिति।

**साहित्यचूडामणिः**

पश्येत् कश्चिदिति शङ्का। चल चपल रे इत्यसूया। का त्वरेति धृतिः। अहं कुमारीति स्मृतिः। हस्तालम्बं वितरेति श्रमः। हहहा व्युत्क्रम इति विबोधः। क्वासीति दैन्यम्। यासीत्यौसुक्यम्। अमीषां शबलता राजविषयस्य रतिभावस्याङ्गम्।

त एते रसवदाद्यलङ्कारा इत्याह—एत इति। रसवत्प्रेयऊर्जस्विसमाहितादयः। रसोऽत्रास्तीति रसवत्। यदाहोद्भटः—

**"रसवद् दर्शितस्पष्टशृङ्गारादिरसोदयम्।" इति।**

रस्या प्रियतयोपलक्षितं भाववृन्दमत्रास्तीति प्रेयस्वत्। तदुपचारात् प्रेयोऽपि। यदाह—

**रत्यादिकानां भावानामनुभावादिसूचनैः।**
**यत् काव्यं बध्यते सद्भिस्तत् प्रेयस्वदुदाहृतम्॥ इति।**

ऊर्जसो बलस्य विद्यमानत्वादुर्जस्वि। बलयोगाद्यनौचित्येन प्रवृत्तिः यदाह—

**अनौचित्यप्रवृत्तानां कामक्रोधादिकारणात्।**
**भावानां च रसानां च बन्ध ऊर्जस्वि कथ्यते॥ इति।**

समाहितमिति परिहाररूपत्वात्। यथाह—

**रसभावतदाभासवृत्तेः प्रशमबन्धनम्।**
**अन्यानुभावनिश्शून्यरूपं यत्तत् समाहितम्॥**

इति रसस्य परविश्रान्तिलक्षणस्य प्रशाम्यदवस्था न संभवतीति व्यतिरिक्तविषयमेतदवगन्तव्यम्।

इत्थं च रसभावतदाभासभावप्रशमानां चतुर्णां यथायोगमङ्गत्वे रसवदादयश्चत्वारोऽलङ्कारा इति निष्कर्षः। युगपल्लक्षणमेतेषां चित्तवृत्तिविशेषरूपं साधर्म्यं सूचयितुम्।

ननु भावप्रशमपर्यन्तमेते चत्वारः प्रपञ्चिताः, तत् कथं भावोदयादीनप्युदाहृत्योक्तमित्यत्राह—यद्यपीति। कश्चिद् ब्रूयादिति। यत् सूत्रं—'भावोदयभावसन्धिभावशबलताश्चैते' पृथगलङ्कारा इति। भावप्रशमवदेतेप्यलङ्कारा इत्यर्थः। यच्चाह दण्डी—[काव्यादर्शे २.१]

**'ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति' इति।**

ननु 'किंकुर्वता रसादिना रसादिः परिष्क्रियते? ननूपमयापि किंकुर्वत्या वाक्यार्थः परिष्क्रियते? ननु तयोपमीयत इति चेत् तर्हि रसेनापि रसीक्रियत इति को विशेषः।

ननु ध्वनिगुणीभूतव्यङ्ग्ययोः सङ्करः संसृष्टिर्वा नियमभावी, यतो निश्शेषच्युतेत्यादौ ध्वनावपि मिथ्यावादिनीति बान्धवजनस्याज्ञातपीडागमेत्यत्र वाच्यातिशयासम्भवाद् गुणीभूतव्यङ्ग्यत्वम्। शुद्धे हि ध्वनित्वे 'सत्यं निस्त्रपमौनगर्भवदनव्याख्यातभावाक्षरमि'—त्यादिवद् भवितव्यं तदतिशयेन। एवं 'ग्रामतरुणमि'त्यादौ शृङ्गारस्फुरणस्यानपह्नवनीयत्वात् सङ्करो गुणीभूतव्यङ्ग्यस्येति चेत्, तत्राह—यद्यपीति। आदिपदादन्यप्रभेदः। तथापीति। प्रधानेन व्यपदेशा भवन्तीति। यस्य यत्रोपपत्तिबाहुल्यं तत्र तेन व्यपदेशः। यदाह—'पत्युःशिरश्चन्द्रकलामि'-त्युदाहृत्य—

**प्रकारोऽयं गुणीभूतव्यङ्ग्येऽपि ध्वनिरूपताम्।**
**धत्ते रसादितात्पर्यपर्यालोचनया पुनः॥ ध्व. ३.४० ॥**

इति क्रमे "तस्माद् वाक्यमत्र ध्वनिः। पदानि तु गुणीभूतव्यङ्ग्यानि। यत्र वाक्ये गुणीभूतव्यङ्ग्यैरुद्भासितेऽपि रसादितात्पर्यं नास्ति, तत्र गुणीभूतव्यङ्ग्यतैव समुदायधर्मः" इति।

## सम्प्रदायप्रकाशिनी

पश्येत् कश्चिदिति। भोः पृथ्वीपते भवद्विद्विषोऽरण्यवृत्तेः कन्या कञ्चिदभिद्यत्ते एवमुक्तिप्रत्युक्तिपरिपाटीमारचयतीत्यर्थः। पश्येत् कश्चिदिति सन्त्रासनपरस्योक्तिः। त्वामरण्यवृत्तिं कश्चिद् पश्येदित्युक्ता तु प्रतिवक्ति—चल चपल रे इति। यदि पश्येत् तर्हि चपल एहि पलायावह इत्यर्थः। अथ तस्योपहासपरस्योक्तिः—का त्वरेति। अहो ते भीरुतेति यावत्। सा प्रत्याह—अहं कुमारीति। भीरोर्मे त्वरैव स्वभावः क इहोपहास इति यावत्। स पुनर्धौर्त्येनाह—हस्तालम्बं वितरेति। यदि त्वरया चलितव्यं तर्हि देहि हस्तालम्बमित्युक्ताया प्रत्युत्तरं—हहहा व्युत्क्रम इति। हस्तालम्बं दातुमर्हः सन् कुतो मां याचस इत्यथः। अथ चलिते तत्र सैवाह—क्वासि यासीति। असीति त्वमर्थे निपातः।

अत्र शङ्कासूयेति। पश्येदित्यनेन हि वाक्येन शङ्काभिव्यज्यते। चल चपलेत्यसूया। का त्वरेति धृतिः अहं कुमारीति स्मृतिः। हस्तालम्बमित्यौत्सुक्यम् हहहेति श्रमदैन्ये। व्युत्क्रम इति विबोधः। क्वासि यासीत्यौत्सुक्यम्। अत्रैषां शबलता भावस्याङ्गम्। अथ रसवदादयोऽलङ्कारा वक्ष्यन्त इति यत् प्रतिज्ञातं तत् कृतमित्यनुस्मारयति—एते च रसवदादयोऽलङ्कारा इति। अतो रसाभावादीनां यदा प्राधान्यं तदा ध्वनित्वं, यदा त्वङ्गभावस्तादालङ्कारत्वमेवेति सिद्धम्। ननु रसादिचतुष्टयस्य गुणीभावे रसवदाद्यलङ्कारत्वं प्रसिद्धं, भावोदयादयस्तु नालङ्कारतया प्रसिद्धाः, तत् कथमेवमुक्तमित्यत आह—यद्यपि भावोदयेत्यादि कश्चिद् ब्रूयादिति। उक्तं ह्यलङ्कारसर्वस्वकृता—'भावोदयभावसन्धिभावशबलताश्च पृथगलङ्कारा" इति। ननु यानि ध्वन्युदाहरणानि तत्रापि गुणीभूतव्यङ्ग्यत्वमनुपश्याम गुणीभूतव्यङ्ग्योदाहरणेषु च ध्वनित्वम्, अतः कथमियं विभागसिद्धिरित्यत आह—यद्यपि स नास्तीत्यादि। स्वप्रभेदादिभिरित्यादिशब्दाद् ध्वनेर्गुणीभूतव्यङ्ग्यप्रभेदैरलङ्कारैः सालङ्कारैः स्वप्रभेदैः सालङ्कारैर्गुणीभूतव्यङ्ग्यप्रभेदैश्चेत्यर्थः।

## मधुमती

क्वासि यासि ?' इत्यत्र 'असि' शब्दः युष्मदर्थे निपातितः । अस्मदर्थे 'अस्मिः' शब्दवत् । त्वमित्यर्थः । 'ते च गुणीभूताभिधाने उदाहरिष्यन्ते' इति यत् प्रतिज्ञातम्, तत् अधुना मयोक्तमिति स्मारयति—एते चेति । भामहाद्यभिमताः इति शेषः । न तु रसवदादीनां अलङ्कारत्वे ग्रन्थकर्तुः तात्पर्यमिति भ्रमः कर्तव्यः । अमीषां गुणानामिव साक्षादुपकारकत्वेन, अङ्गोपकारद्वारा अङ्ग्युपकारकत्वाभावात् । एवं च स्थिते-यत्र रसस्य अन्योपसर्जनत्वं तत्र रसवदलङ्कारः । यत्र भावस्य तथात्वम् तत्र प्रेयोऽलङ्कारः । यत्र तु तदाभासस्य तत्र ऊर्जस्व्यलङ्कारः । एवं यत्र भावशान्तेः तत्र प्रेयोऽलङ्कारः । एव यत्र भावोदयादेस्तथात्वं तत्रापि उक्तन्यायसाम्यात् भावोदयादयोऽपि अन्येषां मते पृथगेव अलङ्कारा: भवेयुः इत्यर्थः । कश्चित् ब्रूयादिति । "भावोदयभावसन्धिभावशबलत्वानि पृथगलङ्काराः ।" इति अलङ्कारसर्वस्वकारसूत्रदर्शनात् इत्यर्थः ।

यद्यपीति । रसध्वनौ भावध्वन्यावश्यकत्वात् तयोः उपकार्योपकारकभावलक्षणः सङ्करः । अन्यत्रापि अवान्तरध्वनीनां प्रधानध्वनिरूपेतराङ्गत्वेन गुणीभूतव्यङ्ग्यत्वम् । तथाच—स्वप्रभेदैः गुणीभूतव्यङ्ग्यप्रभेदैः अलङ्कारैः सालङ्काराभ्यां च ताभ्यां ध्वनेः समावेशेन उभयनिमित्तसमावेशात् कतमो व्यवहारः अस्तु ? इति आक्षेपग्रन्थार्थः । समाधत्ते—तथापीति ।

यद्यपि—'अयं स रशनोत्कर्षी' इत्यादौ मुख्यत्वेन करुणस्यैव प्राधान्यम् । तथापि वर्णनीयत्वेन शृङ्गारस्यैव प्राधान्यमिहाभिमतम् । तत्रैव कवेः अभिनिवेशात् । एवं च—यद्यत्रैवशृङ्गारवर्णने एव कवेः तात्पर्यम्, तदैव मध्यमत्वम् । अन्यथा तु उत्तमत्वमेव । कवितात्पर्येणैव विशेषनिर्णयात् । न च तत्तात्पर्यस्यैव अशक्यग्रहत्वम् । अभियोगेन तद्ग्रहात् । दृश्यते हि—केषाञ्चित् कवीनां शब्दे, केषाञ्चित् अर्थे, केषाञ्चित् उभयत्र, केषाञ्चित् रसे, तत्रापि केषाञ्चित् शृङ्गारे, केषाञ्चित् वीरादौ चेत्येवं पाटवम् । तदेव अभियोगः इत्युच्यते । तेन च तत्तात्पर्यमुन्नीय तत्तद्व्यपदेशः कर्तव्यः इति सम्प्रदायः ।

वस्तुतस्तु—उपधेयसङ्करेऽपि निमित्तासङ्करात्, नानानिमित्तसमावेश स्थले 'विवक्षातः कारकाणि भवन्ति' इति कारकप्रयोगवत् इहापि विवक्षात एव उत्तमत्वादिव्यवहारः । तत्र च—यत्र ध्वनित्वविवक्षा तत्र उत्तमत्वव्यपदेशः, यत्र अपराङ्गत्वादिविवक्षाः तत्र गुणीभूतव्यङ्ग्यत्वव्यवदेशः, यत्र तु चित्रत्वविवक्षा तत्र अधमत्वव्यपदेशः । एवं च—'प्राधान्येन व्यपदेशा भवन्ति' इत्यत्र विवक्षाविषयत्वमेव प्राधान्यं इहाभिमतमिति ध्येयम् । एतच्च अग्रे उपमाग्रन्थे आकरे एव स्फुटम् । एतेन—'शुद्धभेदैः सह शरेषुयुगखेन्दवः' इत्युक्तमनुपपन्नम् । स्वप्रभेदादिभिः सह सङ्करसम्भवेन शुद्धत्वाभावात्—इत्यपि निरस्तम् । उक्तप्रकारेण उपधेयसङ्करेऽपि तत्तदुपाधीनां असाङ्कर्येण शुद्धत्वस्य सम्भवात् ।

## विस्तारिका

अत्रेति । कश्चिदित्यनेन शङ्का । रे इत्याक्षेपसम्बोधनम्, तेनासूया । अत एवाभिप्रायात् सम्बन्धाचरणाच्च चपलेति सम्बुद्धिः त्वरेत्यनेन सम्बन्धः । निजजिगमिषाधारणाय प्रयुक्तेन धृतिश्च । कुमारीति । तेन कुमार्या ममैवं स्वातन्त्र्यं नोचितमित्यर्थपरेण कौमार्यस्मरणात् स्मृतिश्च । ह ह हेत्यनेन श्रमसंवलितं दैन्यम् । सम्भोगस्य प्राथमिकत्वेन श्रमः । हस्तालम्बप्रार्थनगम्यमनौपेक्ष्यं दैन्यम । व्युत्क्रम इत्यनेन मया शास्त्रविरुद्धमाचरितमित्यर्थ-

परेण विबोधशब्दार्थो मतिः। क्वासि, यासीत्यनेन भावपरीक्षार्थगमनोद्यतस्याभियोक्तुर्गमनवाराणपरेणौत्सुक्यं गम्यते। असीति त्वमित्यर्थे। शबलता पूर्वपूर्वोपमर्दनेन परपरोदयः। अत्रासूयास्मृतिविबोधानां शान्तसञ्चारिणां शङ्काधृतिश्रमदैन्यौत्सुक्यैः शृङ्गारसञ्चारिभिर्बाधनम्। पर्यन्ते औत्सुक्यप्रधानास्वादाविर्भावात्। स चास्वादो विरोध्युपमर्देन जायमानो.... रात् प्रकृष्टत्वं विपक्षतिनिर्जयपूर्वकं बाह्यस्थितो नृपतिरिवान्यनृपतिभ्यः।

गुणीभूतव्यङ्ग्यम्, तदाह—विषय इति। चतुर्थोल्लासेऽभिहितं स्ववचनं सङ्गमयति—एते चेत्यादि। 'रसवदादिपदानि तत्तत्रैव व्याख्यातानि। अथ रसाङ्गालङ्कारत्वं न सम्भवति, वाच्यवाचकादिभिः परिष्कार्यमाणानां तेषां तदपरिष्कारकत्वात्। तत्परिष्कारत्वाधारसपरिष्कारकस्यैव शङ्कावत्त्वात्। मैवम्, स्वविभावाद्युपकृतेनाङ्गरसेनेत्यादौ मुख्यरसत्वम्, विभावाद्युपस्कारद्वारा मुख्यरसाद्युपस्क्रियत इत्यर्थालङ्कारत्वानपायात्, अयं स रसनेत्यादौ तथा प्रदर्शितत्वात्।

ननु भावोदयादीनामलङ्कारत्वं प्राचीनैरनुक्तम्, कथमिहोच्यत इत्यत आह—यद्यपीति। इतरोत्कर्षकत्वरूपस्य बीजस्य सत्त्वेऽप्यनुक्तिः, अविवेचकत्वाय पर्यवस्यतीत्याह—ब्रूयादिति। सम्भावनायां प्राप्तकाले वा लिङ्। कश्चिद् विवेचकः, तेजाक्षिप्ताः प्राञ्चः।

ननु अयं स रसनेत्यत्र प्रकरणगम्यमस्य करुणस्य प्राधान्येन सम्भवति ध्वनित्वे कथं गुणीभूतव्यङ्ग्यतेत्यत आह—यद्यपीति। विषय आश्रयः, स्वपदेन विजातीयप्रभेदपरिग्रहः। सङ्करस्त्रिविधः, संसृष्टिरेका। क्वचिदित्यादि। यत्र यन्मुखेन चमत्कारस्तत्र तेनैव व्यवहार इत्यर्थः। तेनात्र करुणस्य गुणीभूतव्यङ्ग्यशृङ्गारमुखेन चमत्कारित्वात् तेनैव व्यवहारः, न ध्वनित्वेन। तदाह—प्रधानेनेति। प्राधान्यं तु चमत्कारप्रयोजकत्वम्।

## सारबोधिनी

अत्रेति। पश्येत्कश्चिदित्यनेन शङ्का। चलचपलेत्यनेनासूया। का त्वरेति धृतिः। अहं कुमारीत्यन्तेन मम कुमार्या नैवं स्वातन्त्र्यमित्यर्थपरेण कौमार्यस्मरणात् स्मृतिः। हस्तालम्बमित्यनेन श्रमः। हहहेति दैन्यम्। व्युत्क्रम इति विबोधः। अत्र विबोधपदेन मतिरुच्यते। क्वासि मासीत्यौत्सुक्यम्। शबलता पूर्वपूर्वोपमर्देन परपरोदयः।

केचित्तु एषां समप्राधान्येन तिलतण्डुलवत् चर्व्यमाणता शबलता राजविषयकस्य रतिभावस्याङ्गमित्याहुः। एते च गुणीभूतव्यङ्ग्ये उदाहरिष्यन्त इति स्ववचनं सङ्गमयति एते चेति। रसवदादिपदानि तत्रैव व्याख्यातानि अथ रसवदादीनां परिष्कारकत्वाभावात् तेषामिति कश्चिदिति इतरोत्कर्षकत्वस्यालङ्कारत्वव्यवहारबीजस्य सत्त्वेऽलङ्कारत्वानुपपत्तिरबोधायैव पर्यवस्यतीत्याक्षिप्ता प्राञ्चः।

नन्वयं स रशनेत्यत्र प्रकरणगम्यकरुणस्य प्राधान्येन संभवति ध्वनित्वे कथं गुणीभूतव्यङ्ग्यतेत्याह यद्यपीति। विषय आश्रयः। आदिपदेन विजातीयप्रभेदपरिग्रहः। क्वचिदित्यादि। यत्र यन्मुखेन चमत्कारस्तत्र तेनैव व्यवहार इत्यर्थः। तेनात्र करुणस्य गुणीभूतव्यङ्ग्यशृङ्गारमुखेन चमत्कारित्वात् तेनैव व्यवहारो न ध्वनित्वेन। तदाह प्राधान्येनेति। प्राधान्यं तु चमत्कारप्रयोजकत्वम्। अनुरणनरूपयोरलङ्कारवस्तुनोर्वाच्याङ्गत्वं क्रमेणाह।

## काव्यप्रदीपः

भावशबलताया यथा—

'पश्येत्कश्चिच्चल चपल रे का त्वराहं कुमारी
हस्तालम्बं वितर हहहा व्युत्क्रमः क्वासि यासि।
इत्थं पृथ्वीपरिवृढ भवद्विद्विषोऽरण्यवृत्तेः
कन्या कंचित्फलकिसलयान्याददानाभिधत्ते ॥'

अत्र पश्चेत्कश्चिदिति शङ्का। चल चपल रे इत्यसूया। का त्वरेति धृतिः। अहं कुमारीति स्मृतिः। हस्तालम्बं वितरेति श्रमः। हहहेति दैन्यम्। व्युत्क्रम इति विबोधश्चैतन्यागमरूपः। क्वासि यासीत्यौत्सुक्यम्। एषां शबलता नृपविषयरतिभावेऽङ्गम्।

एते च गुणीभूता रसादयो रसवदाद्यलंकारव्यपदेशं लभन्ते। ननु गुणीभूतो रसो रसवत्, भावस्तु प्रेयः, रसभावाभासावूर्जस्वि, भावशान्तिः समाहित इत्यस्त्येव पूर्वेषामलंकारव्यवहारः, न पुनर्भावोदयादिषु। तत्कथमेत-दुच्यत इति चेत्। यद्यन्यवचनं विना मद्वचसि नादरस्तर्हि कश्चित्प्रेक्षावानवश्यं ब्रूयात् 'रसादिना तुल्यन्यायत्वात्' इति। ननूदाहृतेषु ध्वनिगुणीभूतव्यङ्ग्ययोर्भेदेषु ध्वनिभेदैर्गुणीभूतव्यङ्ग्योदैरलंकारभेदैर्वावश्यं संकरः संसृष्टिर्वा वर्तते। तत्कथं ध्वनिरिति क्वचित्, क्वचिद्गुणीभूतव्यङ्ग्य इति। तत्रापि क्वचिदलंकारध्वनिरिति, क्वचिद्रसादिध्वनिरित्यादि। एवं तद्गुणीभूतव्यङ्ग्य इत्यादिव्यपदेशानां नियम इति चेत्, प्राधान्यात्। यत्र हि यत्प्रधानं तत्र तेन व्यपदेशः। प्राधान्यं चातिशयितश्चमत्कारः। स च सहृदयहृदयैकवेद्य इति नासिद्धः।

## आदर्शः

भावाङ्गं भावसबलत्वामाह—पश्येदिति। हे पृथ्वीपरिवृढ पृथ्वीप्रभो अरण्यवृत्तेः भवद्विद्विषः कन्या भक्षणार्थं वन्यफलकिसलयान्याददाना अर्थात् आकर्ष्टुकामं कश्चिदित्थम् अभिधत्ते, कन्या च तत्रैव जातभावा बोध्या। किमभिधत्ते इत्याह—पश्येदिति। तत्र पश्येदित्यत्र शङ्का व्यङ्ग्या, चल चपल रे इत्यत्र असूया, का त्वरा इत्यत्र धृतिः, अहं कुमारीत्यत्र कौमार्यस्मरणरूपा स्मृतिः, हस्तालम्बमित्यत्र श्रमः, ह ह हा इत्यत्र दैन्यम्, व्युत्क्रम इत्यत्र एतादृशोक्तिर्ममानुचिता इत्येवंरूपा मतिरेवात्र विबोधः। क्वासि यासीत्यत्र औत्सुक्यं व्यङ्ग्यम्।तत्र च श्रमापेक्षया दैन्यं विहाय सर्वमुत्तरोत्तरं बलवत्। त्वमित्यर्थे असीति अव्ययम्। एषां सबलता च राजप्रयोज्यत्वाद् राजविष-यभावप्रकर्षकाङ्गम। एते चेति, ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्त इति यत् (पृ. ९४) प्रागुक्तम् तदिदं दर्शितम्।

ननु सर्वत्रैव अपराङ्गोऽङ्गिनं रसादिकमादाय कथं न ध्वनिव्यवहार इत्यत आह—यद्यपीति। प्रायशः स नास्तीत्यर्थः, शुद्धध्वनौ सङ्करसंसृष्ट्यभावात्। स्वप्रभेदादिभिरित्यादिपदात् स्वप्रभेदद्वयस्येव ध्वनिगुणीभूतव्य-ङ्ग्यद्वयरूपपरप्रभेदयोरपि सङ्करो बोध्यः। समाधत्ते—तथाऽपीति। प्रधानेन चमत्काराधिक्यरूप प्राधान्यवता, न तु निराकाङ्क्षवाक्यव्यङ्ग्यतया प्रधानेनेत्यर्थः, तदा अपराङ्गेऽपि अङ्गिस्तथात्वात् ध्वनिव्यवहारापत्तेः। एवञ्च द्वयोस्तु-

ल्यचमत्कारित्वे निराकाङ्क्षवाक्यव्यङ्ग्यत्वे वा अङ्गाङ्गिभावसत्त्वे तत्सङ्करस्तदसत्त्वे संसृष्टिः अङ्गिमात्रस्य चमत्कारित्वे तु शुद्धध्वनिः, अङ्गमात्रस्य चमत्कारित्वे तु अपराङ्गमिति विषयविभागः ।

## सुधासागरः

भावशबलताया भावाङ्गत्वमुदाहरति—'पश्येदि'-ति ।

मन्दाक्रान्ता छन्दः । 'मन्दाक्रान्ता जलधिषडगैम्भौं नतौ ताद् गुरू चेद्' इति लक्षणात् । हे पृथ्वीपरिवृढ भूमिस्वामिन् अरण्यवृत्तेः भयाद् वननिवासिनो भवद्विद्विषः कन्या फलकिसलयान्याददाना सती कञ्चिदभियोक्तारं रतिलम्पटमित्थमभिधत्ते, कथमित्याकाङ्क्षायां पूर्वार्द्धमाह । अत्र शङ्केत्यादि । पश्येत् कश्चिदिति शङ्का । चल चपल रे इत्यसूया । का त्वरेति धृतिः । अहं कुमारीति स्मृतिः । हस्तालम्बं वितरेति श्रमः । हहहेति दैन्यम् । व्युत्क्रम इति विबोधश्च कन्यागमनरूपः । क्वाऽसि यासीत्यौत्सुक्यम् । एषां शबलता नृपविषये रतिभावेऽङ्गमित्यर्थः । 'ते च गुणीभूतव्यङ्ग्याभिधाने उदाहरिष्यन्त' इति पूर्वोक्तं स्ववचनं सङ्गमयति—एते चेत्यादि । एते च गुणीभूता रसादयो रसवदाद्यलङ्कारव्यपदेशं लभन्ते ।

यद्यपीत्यादि । ननु गुणीभूतो रसो रसवत् । भावस्तु प्रेयः । रसभावाभासौ ऊर्जस्वि । भावशान्तिः समाहित इत्यस्त्येव पूर्वेषामलङ्कारव्यवहारो न पुनर्भावोदयादिषु, तत्कथमेतदुच्यते इति चेत्, यद्यन्यवचनं विना मद्वचसि नादरस्तर्हि कश्चित्प्रेक्षावानवश्यं ब्रूयात् रसादिना तुल्यन्यायत्वादित्यर्थः ।

अयमत्र श्रीवृत्तिकृतामाशयः—भावोदयादिष्वितरोत्कर्षकत्वस्यालङ्कारत्वव्यवहारजीवस्य सत्त्वेऽप्यलङ्कारत्वानुक्तिरबोधायैव पर्यवस्यतीत्याक्षिप्ताः प्राञ्चः । परन्तु रसवदाद्यलङ्काराः प्राचामेवाभिमता न तु स्वस्यापि, अमीषां गुणानामिव साक्षादुपकारकत्वेनाङ्गोपकारद्वारकाङ्ग्यपकारकत्वाभावात्, तस्माद् गुणीभूतव्यङ्ग्यत्वमेवेति ।

ननु 'अयं स रशने'-त्यत्र प्रकरणगम्यस्य करुणस्य प्राधान्येन सम्भवति ध्वनित्वे कथं गुणीभूतव्यङ्ग्यतेत्यत आह—यद्यपीत्यादि ।

विषय आश्रयः । आदिपदेन विजातीयप्रभेदपरिग्रहः ।

क्वचिदित्यादि । यत्र यन्मुखेन चमत्कारस्तत्र तेनैव व्यवहार इत्यर्थः । तेनात्र करुणस्य गुणीभूतव्यङ्ग्यशृङ्गारमुखेन चमत्कारित्वात्तेनैव व्यवहारो न ध्वनित्वेन । तदाह-प्राधान्येति । प्राधान्यस्तु चमत्कारप्रयोजकत्वमित्यर्थः । अयमाशयः-ननूदाहृतेषु ध्वनिगुणीभूतव्यङ्ग्ययोर्भेदेषु ध्वनिभेदैरलङ्कारभेदैर्वाऽवश्यं सङ्करः संसृष्टिर्वा वर्त्तते, तत्कथं ध्वनिरिति क्वचित्, क्वचिद् गुणीभूतव्यङ्ग्य इति, तत्रापि क्वचिदलङ्कारध्वनिरिति, क्वचिद्रसादिध्वनिरित्यादि, एवं तद्गुणीभूतव्यङ्ग्य इत्यादिव्यपदेशानां नियम इति चेत्, प्राधान्यात् । यत्र हि यत्प्रधानं तत्र तेन व्यपदेशः । प्राधान्यञ्चातिशयितश्चमत्कारः । स च सहृदयैकवेद्य इति नासिद्ध इति ।

---

**जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया**
**वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।**
**कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना**
**मयाप्तं रामत्वं कुशलवसुता न त्वधिगता॥ १२४॥**

अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सहोपमानोपमेयभावो वाच्याङ्गतां नीतः।

---

**सङ्केतः**

जनस्थाने इति। जनस्थानं जनानां स्थानं, दण्डकारण्यं च। कनकमृगे तृष्णा भ्रान्तिः, कनके मृगतृष्णा लिप्सा च। वैदेहि इति पदद्वयम्, वैदेही सीता च। लङ्काभर्तुः रावणस्य वदनेषु दशसु मुखेषु, इषुघटना बाणयोगः; अलं अतिशयेन काभर्तुः कुत्सितस्य भर्तुः वदनपरिपाटीषु वदनपङ्क्तिषु वचनश्रेणिषु घटना आदेशकारिता च। कुशलवौ सुतौ यस्याः सा सीता, कुशलवसुनो भावः तत्ता—शुभधनता चेत्यर्थः। अनुरणनोपमः अनुस्वानेन तुल्यः व्यङ्ग्यः इति। वाच्याङ्गतामिति। व्यङ्ग्योपमयैव रामत्वे लब्धे यत् रामत्वं इत्युक्तं, तत्—व्यङ्ग्योपमा अपरस्य वाच्यस्य अङ्गतां नीता इत्यर्थः।

**सङ्केतः (रुय्यकः)**

जनस्थान (इति) जनस्थानं दण्डकारण्यञ्च। कनके मृगतृष्णा (कनकमृगे) भ्रान्तिश्च। वैदेही सीता, वैदेहीति च पदद्वयम्। लंकाभर्तुः रावणस्य, अलम् ईषद्रूपत्वात्? कुत्सितरूपस्य च भर्त्तुः। वदनेषु दशसु इषुघटना शरयोजनादि, चित्रोक्तिपरम्परासु च (घटना)। कुशलवौ सुतौ यस्याः सा सीता, शुभधनता च।

**बालचित्तानुरञ्जनी**

शब्दशक्तिमूलमपरस्याङ्गमुदाहरति जनस्थान इति। याचकवचनम्। मया याचकेन रामत्वं रामचन्द्रत्वमाप्तम्। तदेव विशेषणैराह। जनानां स्थाने, पक्षे दण्डकारण्ये, कनकमृगस्य मार्गणमन्वेषणम् तत्र तृष्णा तद्युक्तधिया पक्षे, कनकमृगे तृष्णा तदन्वितधिया, भ्रान्तं पर्यटितम्। वै प्रसिद्धौ। देहि विश्राणयेति, पक्षे वैदेहि सीते! इति वचः प्रतिपदं उपसृत्य यथा स्यात् तथा प्रलपितम्। अलमत्यर्थं काभर्तुः ईषद्भर्तुः, अल्पत्वेन तु कुत्सितत्वं लक्ष्यते। वदनपरिपाटीषु वचनश्रेणिषु घटना आदेशकारितेति यावत् कृता, पक्ष लङ्काभर्तुः रावणस्य, वदनानां परिपाटी पङ्क्तिः, [तत्र] इषुघटना शरयोजना कृता, कुशलं वसु धनं यस्य तस्य भावस्तत्ता, पक्षे कुशलवौ सुतौ यस्याः सा कुशलवसुता सीता तु नाधिगता न प्राप्ता। किं कस्याङ्गमित्याकाङ्क्षायामाह अत्रेति। शब्दशक्तिर्मूलं यस्यानुरणनरूपः व्यङ्ग्यतायोग्यः। 'अनुरणनोपम' इति पाठे अनुरणनसदृशः रामवृत्तान्तस्याप्राकरणिकत्वात्। स्वविशेषणोपमेयकथनेनैव रामत्वे सिद्धे रामत्वमिति शब्देनोपादानात् उपमानोपमेयभावो वाक्यार्थीभूतस्य वाच्यस्यार्थस्याङ्गमित्यर्थः।

## काव्यादर्शः

एवं रसादेर्गुणतां दर्शयति। वाच्यस्य शक्यार्थीभूतस्य शब्दशक्तिमूलानुरणनरूपो व्यङ्ग्योऽलंकारोऽङ्गम्, यथा 'जनस्थाने' इति जनानां स्थानं दण्डकारण्यं च। कनकमृगे तृष्णा भ्रान्तिश्च। 'वैदेही' सीता, 'वै देहि' इति च पदद्वयम्। लंकाभर्तुः रावणस्य, अलं ईषद्रूपत्वात्, कुत्सितस्य भर्तुश्च। वदनेषु दशसु, इषुघटनां शरयोजना विचित्रोक्तिपरंपरासु च। कुशलवौ सुतौ यस्याः सा सीता, शुभधनता चा वाच्यतामिति। 'रामत्वम्' इत्यस्य व्यङ्ग्य उपमालंकारोऽङ्गतां नीतः।

## विवेकः

अथ वा यस्य (वाच्यस्य) वाक्यार्थीभूतस्याङ्गभूतं शब्दशक्तिमूलमर्थशक्तिमूलञ्च यथाक्रममुदाहरति— जनस्थान इत्यादि। जनस्थानं [जनानां स्थानं] दण्डकारण्यम्। कनकमृगतृष्णा [कनके मृगतृष्णा कनकमृगे] भ्रान्तिश्च। वैदेहीति सम्बोधनं प्रार्थनावाचकं पदद्वयश्च। लङ्काभर्तु रावणस्य, अलमीषद्रूपत्वात् [काभर्तुः] कुत्सितस्य च भर्तुः। वदनेषु दशसु इषुघटना शरयोजना वक्रोक्तिपरम्परा च। कुशलवौ सुतौ यस्याः सा सीता शुभधनता च। तदित्थं श्लिष्टपदमाहात्म्याच्च शब्दशक्तिमूलानुरणनोपमतत्सदृश उपमानोपमेयभावः प्रतीयमानोऽपि मयाऽऽप्तं रामत्वमित्यनेन वाच्यतां नीतत्वाद् (नीतो) दैन्यञ्च व्यक्तमेव।

## दीपिका

सम्प्रति वाच्याङ्गभूतस्य रसादिमध्ये कस्यचिदुद्देश्यानुसारेणोदाहरणयोग्यत्वेऽपि तस्यानुरणनरूपार्थेन सह तन्त्रेणैकमेवोदाहणं भविष्यतीति शब्दशक्तिमूलस्य वस्तुनो वाच्याङ्गत्वमुदाहरति—जनेति। जनस्थानं पुरपत्तनादि दण्डकारण्यं च कनकं प्रति मृगतृष्णा निष्फलप्रत्याशा कनकमृगे तृष्णा लोभश्च। वै निश्चितम्, देहि प्रयच्छ। वैदेहि सीते। भर्तुर्धनिनः। परिपाटिषु परिचयेष्विति निमित्तसप्तमी। अलमत्यर्थमेव का घटना उपायो न कृता वद। लङ्काभर्तर्दशग्रीवस्य वदनानां परिपाट्यां पङ्क्ताविषुघटना शरसंयोगः कुशलमायतिशुद्धं वसु धनमस्येति कुशलवसुस्तस्य भावस्तत्त। कुशलवौ सुतौ यस्याः सा कुशलवसुता जानकी। अत्र रामत्वं मया प्राप्तमित्यवचनेऽपि शब्दशक्तेरेव रामासादृश्यं लभ्यते, वचनेन तु सादृश्यहेतुकतादात्म्यारोपमाविष्कुर्वता ज्ञापनमपाहतम्। उपमानोपमेयभावः सादृश्यम्, वाच्यतामन्त्रयोपपादकताम्, वाच्याङ्गतामिति तु पाठे वाच्योऽन्विताभिधानो वाक्यार्थः तदङ्गताम्, असम्बन्धे सम्बन्धरूपवाच्यातिशयोक्त्यङ्गतामिति वा।

## दर्पणः

अथ शब्दशक्तिमूलं क्रमेणोदाहरति जनेति। जनस्थानं नगरग्रामादि दण्डकारण्यं च। कनकं प्रति मृगतृष्णा निष्फला। कनके मृगे तृष्णा च वै निश्चितम्। देहं प्रतिच्छविः देहतृष्णा च। अलं व्यर्थम्। काभर्तुः कुत्सितस्वामिनो यद्वदनं तस्य परिपाटीषु परम्परासु, लङ्काभर्तुः रावणस्य वदनानां मुखानां, परिपाटी पंक्तौ, इषुघटना शरसंयोगश्च, कुशलं शुद्धं वसु धनं यस्य, एवं भूतौ कुशलवौ सुतौ यस्याः सा सीता च उपमानोपमेयभावः सादृश्यं, वाच्यतामन्वयोपपादकताम्। वाच्याङ्गम् इति पाठे तु वाच्यः वाच्यार्थः तदङ्गता। असंबन्धरूपाया अतिशयोक्तेर-

ङ्ताम् । अत्र रामत्वम् इत्यव्यवसायेऽपि शब्दशक्तेरेव प्रतीयमानरामतादात्म्यं च तेनाविष्कृतमिति गोपनकृतचारुतामिव स्यात् । गुणीभूतव्यङ्ग्यत्वमिति भावः ।

### साहित्यचूडामणिः

प्रकृतमनुसरन्नाह—जनस्थान इति । राजस्थानादौ पर्यटितम् कनकेन धनसामान्यं लक्ष्यते, तदेव मृगतृष्णा अर्कमरीचिका तया हृता बुद्धिर्यस्य । वैशब्दः प्रसिद्धौ । अलं पूर्णं कृत्वा काभर्तुः कुत्सितप्रभोः वदनं व्यक्ता वाक् स्तोत्ररूपा तस्य परिपाटीषु परम्परासु घटना उद्योगः इति निर्विण्णस्य कस्यचित् प्राकरणिकं प्रमेयम् । अन्यस्तु जनस्थाने खरदूषणावासे । कनकमृगः काञ्चनहरिणः, तत्र तृष्णा प्रेयसीप्रयोजिता । वैदेहि ! सीते ! लङ्काभर्ता दशकन्धरः । तस्य यानि वदनानि मुखानि तत्परिपाट्यामिषुघटना शरयोजना । एवञ्च मया राघवत्वमात्तं स्वीकृतं किन्तु कुशलवौ सुतौ तनयौ यस्याः सा सीता न प्राप्ता, कुशलमक्लेशलभ्यं वसु वित्तं यस्य तस्य भावश्च । अतश्च जनस्थानादिशब्दानां या शक्तिरभिधा तन्मूलानुस्वानलक्षणो रामेण सह याच्ञाखिन्नस्य पुंस उपमानोपमेयभाव इत्युपमालङ्कारो वाच्यस्य 'मयात्तं रामत्वमि'त्यभिधेयस्याङ्गतां नीतः । एतेन व्यतिरेको व्याख्यातः, कुशलवसुता न त्वधिगतेत्युक्तत्वात् ।

एवं शब्दशक्तिमूलोऽलङ्कार उदाहृतः ।

### सम्प्रदायप्रकाशिनी

अथ शब्दशक्तिमूलस्यालङ्कारध्वनेर्गुणीभावं दर्शयति—जनस्थान इति । जनस्थाने जनसन्निवेशे जनस्थानाख्ये दण्डकारण्यपरिसरे च । कनकमृगतृष्णा धनाशारूपो मोह इत्यर्थः, कनकमृगे जिघृक्षाकौतुकं च । वैदेहीति मैथिलीति, अन्यदा तु देहि वितर, वै इति प्रसिद्धो निपातः । लङ्काभर्तुर्दशग्रीवस्य, अलं पर्याप्तं काभर्तुर्दुष्प्रभोश्च । वदनपरिपाटयामिषुघटना शरसंयोजनं, वदनपरिपाटीषु घटना याचनार्थं वदनसविधे वृत्तिश्च । कुशलवसुता कुशलमबाधितं वसु येषां तेषां भावः, कुशलवौ सुतौ यस्याः सा जानकी च ।

अनुरणनरूप इति, दाशरथिवृत्तान्तस्याप्राकरणिकत्वात् । वाच्यतां नीतः, मया रामत्वमिति शब्देनोपादानात् ।

### मधुमती

जनस्थाने इति । काभर्तुः ईषद्भर्तुः । अल्पार्थे कोः कादेश विधानात् । ततः अल्पत्वेन कुत्सितत्वं लक्ष्यम् । कार्यकारणभावसम्बन्धः, अनुपास्यत्वं व्यङ्ग्यम् । यत्तु—कुत्सितभर्तुः इति पितृचरणव्याख्यानम्, तत्तु पर्यवसितार्थप्रदर्शनपरम् । वाच्यतां नीतः इति । वाच्यतां—स्फुटतामिति यावत् । मयाऽऽप्तं रामत्वं इति निदर्शनालङ्कारव्यक्तोपमानोपमेयभावस्य स्फुटत्वात् । एवं भूतोऽप्ययं वाक्यार्थस्य अङ्गमेव । वाक्यार्थस्यैवात्र औपम्यप्रतीतौ प्राधान्यात् । न चैवं—'उल्लास्य कालकरवाल' इत्यत्रापि अपराङ्गत्वं स्यादिति वाच्यम् । इष्टापत्तेः । अलङ्कारध्वनित्वविवक्षया उत्तमत्वव्यपदेशात् । अत्र—'वाच्याङ्गतां नीतः' इति क्वचित् पाठः । स तु—पूर्वापरग्रन्थपर्यालोचनया, 'अङ्गमिति शेषः' इति अवश्यवाच्यत्वेन च अप्रामाणिकः एव ।

## विस्तारिका

अनुरणनरूपयोरलङ्कारवस्तुनोर्वाच्याङ्गत्वं क्रमेणाह—जनस्थान इत्यादि । आगम्येत्यादि च । जनस्थानं जनपदं दण्डकारण्यं च । कनके मृगतृष्णा निष्फलाशा, कनकमृगे तृष्णा च । वै निश्चितम् । देहि प्रयच्छेति, वैदेहि इति सीतासम्बोधनञ्च । भर्तुर्भरणकर्तुः, परिपाटीषु मुखविवलनाङ्गमोदनानवधानादिषु का घटना न कृता वद । यद्वा काभर्तुरीषद्भर्तुः, "ईषदर्थे" कोः इति कादेशविधानात् । त्वत्तोऽल्पत्वेन कुत्सितत्वं लक्ष्यम् । 'अनुपमत्वं व्यङ्ग्यम् । पक्षे लङ्काभर्तुर्दशाननस्य वदनानां मुखानां परिपाट्यां पङ्क्तौ इषुघटना-शरसंयोजना कृता । कुशलमायतिशुद्धम्, वसु धनम्, तस्य भावस्तत्त्वम् । कुशलवौ सुतौ यस्याः सा सीता च ।

अत्र प्रकृताप्रकृतयोः कविरामयोः साम्यं व्यञ्जनया गम्यत इत्याह—रामेण सहेति । उपमानोपमेयभावः साम्यम् । शब्दान्वयव्यतिरेकानुविधायित्वाच्छब्दशक्तिमूलत्वम् । अनुरणनं लक्ष्यक्रमः, वाच्यस्य मया रामत्वं प्राप्तमित्यसम्बद्धसम्बन्धरूपातिशयोक्तर्वाच्याङ्गतामुत्कर्षकतां नीतः । मया रामत्वं प्राप्तमित्यभिधायकं विनेति शेषः । तदनुक्तावुपमाध्वनित्वानपायः स्यात् ।

अयमर्थः—सदृशतत्त्वारोपस्य चमत्कारत्वाद् वाच्यस्य तत्त्वारोपस्य प्रतीयमानं साम्यमुत्कर्षकमित्यपराङ्गता । अतः कुतो रामत्वं प्राप्तमिति साधर्म्याकाङ्क्षाया निवर्तकस्य साम्यस्य वाच्यसिद्ध्यङ्गत्वमेव नापराङ्गत्वमिति चेत्, जनपदभ्रमणं दण्डकारण्यभ्रमणमित्यादिसाम्यस्य शब्दशक्तितः प्रागेवावगतौ रामत्वारोपसाधर्म्याकाङ्क्षाऽनुदयेन वाच्यस्य सिद्धत्वात् कयाचिदनुपपत्त्या दोलायमाने वाच्ये व्यङ्ग्यस्य तत्सिद्धिकरत्व एव वाच्यसिद्ध्यङ्गत्वात् । अङ्गोपमायां तु शब्द एव साधर्म्यम् । केचित्तु वाच्याङ्गतामित्यत्र वाच्यान्वयोपपादकतामर्थमाहुः, तन्न; वाच्यसिद्ध्यङ्गतापत्तेः । वाच्यतामिति पाठे वाच्यस्यान्वित इति वाच्यपदार्थप्रत्ययः । तेन वाच्यतां वाच्योत्कर्षतामित्यर्थः ।

## सारबोधिनी

जनस्थान इति । जनानां स्थानं जनस्थानं नगरग्रामादि दण्डकारण्यं च । कनके मृगतृष्णा निष्फलाशा कनकमृगे तृष्णा च । वै निश्चितम् । देहि प्रयच्छ । वैदेही सीता च । भर्तुर्भरणकर्तुः परिपाटीषु सुखविवलनाङ्गमोठनानवधानादिषु का घटना न कृता । यद्वा, काभर्तुः कुत्सितभर्तुः वदनपरिपाटीषु वचनभङ्गीषु घटना योजना । अलम् अत्यर्थेन कृता, अलं व्यर्थं वा, पक्षे लङ्काभर्तुः रावणस्य वदनानां परिपाट्यां इषुघटना, शरसंयोजनं च । कुशलं वसु धनं यस्य । एवंभूतौ तौ कुशलवौ सुत यस्याः सा सीता च ।

अत्र प्रकृताप्रकृतयोः कवयितृरामयोः साम्यं व्यञ्जनया बोध्यत इत्याह रामेणेति । उपमानोपमेयभावः साम्यम् । शब्दानां परिवृत्यसहिष्णुत्वेन शब्दशक्तिमूलता । वाच्यस्य "मयाप्तं रामत्वम्" इत्यस्यान्यत्रान्यतादात्म्यारोपरूपातिशयोक्तिरूपस्याङ्गतामुत्कर्षतां नीतः । मयाप्तं रामत्वमित्यभिधाय कविनेति शेषः । तदनुक्तावुपमाध्वनित्वानपायः स्यात् ।

अयमर्थः । तत्सदृशे तत्त्वारोपस्याचमत्काररूपत्वात् । वाच्यस्य तत्त्वारोपस्य प्रतीयमान साम्यगुत्कर्षकमित्यपराङ्गता । अथ कुतो रामत्वम् इत्याकाङ्क्षाया निवर्तकस्य साम्यस्य वाच्यसिद्ध्यङ्गत्वमेव नापराङ्गत्वमिति

चेन। जनस्थानभ्रमणादिरूपसाम्यस्य शब्दशक्तिमूलव्यङ्ग्यतः प्रागेवावगतौ रामत्वारोपरूपवाच्यस्य सिद्धत्वात्। अङ्गोपमयां तु जनस्थानेत्यादिशब्द एव साधर्म्यम्। "वाच्यताम्" इति पाठे वाच्यपदात् तत्प्रत्ययः। तेन वाच्यतां वाच्योत्कर्षताम् इत्यर्थः।

अन्ये तु वाच्यतां नीतः मयाप्तं रामत्वमित्यनेनेति शेषः। वारणेन्द्रलीलाम् इति निदर्शनोदाहरणवद्रामत्वमित्यस्य बाधात् रामसदृशार्थकेन तेन वाच्यवत् प्रतीतत्वात् इत्यर्थः। तदङ्गं तु शब्दशक्तिमूलो द्वितीयार्थ इति वदन्ति।

### काव्यप्रदीपः

अथ वाच्याङ्गभावेन शब्दशक्तिमूलस्य लक्ष्यक्रमस्य गुणीभावो यथा—

**'जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया**
**वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम्।**
**कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना**
**मयाप्तं रामत्वं कुशलवसुता न त्वधिगता॥'**

अत्र पादत्रयद्योत्यापि रामेण सहोपमा मयाप्तं रामत्वमित्यनेन वाच्यतां नीता। तदङ्गं च शब्दशक्तिमूलानुरणनरूपो द्वितीयोऽर्थः।

### काव्यप्रकाशखण्डनम्

अनुरणरूपस्य रसस्य वाच्याङ्गत्वं यथा—

**जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया**
**वचो वैदेहीति प्रतिपदमुश्रु प्रलपितम्।**
**कृतालंकाभर्तुर्वदनपरिपाटीषु घटना**
**मयाप्तं रामत्वं कुशलवसुता न त्वधिगता॥**

यथा रामत्वं रामसादृश्यं व्याप्तं प्राप्तमित्यन्वयः। स्वपक्षे जनस्थानं नगर-ग्रामादि रापक्षे जनस्थानं खर-दूषणादिनिवासः दण्डकारण्यं वा। स्वपक्षे कनकविषया मृगतृष्णा निःफलाऽऽशा, रामपक्षे कनकमृगे सुवर्णमृगे तृष्णा च। वै निश्चितं देहि प्रयच्छ, रामपक्षे विदेहापत्यं स्त्री वैदेही सीता च। भर्त्तुः भरणकर्त्तुः। परिपाटीषु मुखविवलनाङ्गभोट्टनाऽनवधानादिषु का घटना न कृता तां वद। यद्वा [प. १९.१)] काभर्तुः कुत्सितभर्तुः। वदनपरिपाटीषु वचनभङ्गीषु, घटना योजना अलमत्यर्थेन न कृता। अलं व्यर्थ वा कस्य सुखस्याभर्तुरपोषकस्य नीचजनस्येत्यर्थः। लङ्काभर्तुः रावणस्य वदनानां परिपाट्यां पङ्क्त्यां इषुघटना शरसंयोजनं च। स्वपक्षे कुशलं प्रचुरं वसु धनं यस्य, एवंभूतता। कुश-लवौ सुतौ यस्याः सा सीता। अत्र प्रकृताप्रकृतयोः कवि-रामयोः साम्यं व्यञ्जनया बोध्यते। अत्र शब्दशक्तिमूलानुरणनरूपो रामेण सह उपमानोपमेयभावो मयेत्यादिना वाच्याङ्गतां नीतः। शब्दानां परिवृत्त्यसहिष्णुत्वेन शब्दशक्तिमूलता। वाच्यस्य मयाप्तं रामत्वस्य। अन्यत्रान्यतादात्म्यारोपरूपस्याति-

शयोक्तिरूपस्य अङ्गितां उत्कर्षतां नीतः। मयाप्तं रामत्वं इत्यभिधाय कविनेति शेषः। तदनुक्तावुपमाध्वनित्वानपायः स्यात्। अयमर्थः—सदृशे तत्त्वारोपस्य चमत्कारित्वात्, वाच्यस्य तत्त्वारोपस्य प्रतीयमानं स्वसाम्यमुत्कर्षकमित्य-पराङ्गता। ननु कुतो रामत्वं प्राप्तमित्याकाङ्क्षायां निवर्त्तकत्व साम्यस्य वाच्यसिद्ध्यङ्गत्वमेव नापराङ्गत्वम्। इति चेत्, न। जनस्थानभ्रमणादिरूपसाम्यस्य शब्दशक्तिमूलव्यङ्ग्यतः प्रागेवावगतौ रामत्वारोपरूपवाच्यत्व सिद्ध-त्वात्। अङ्गरूपोपमायां तु जनस्थान इत्यादि एव सादृश्यम्।

## आदर्शः

इत्थं रसाङ्गं रसादिकमुदाहृत्य वाक्यार्थस्याङ्गेऽनुरणनरूपे उदाहर्त्तव्ये वाच्यालङ्कारस्याङ्गं शब्दशक्तिमू-लमनुरणनरूपमलङ्कारमाह—जनस्थान इति। दरिद्रस्योक्तिरियम्। तुल्यशब्दवाच्यतारूपसाधर्म्यात् मया रामत्वं प्राप्तं राम इवाहं जात इत्यर्थः। तुल्यशब्दवाच्यत्वरूपं साधर्म्यमाह—जनस्थान इति। कनकमयमृगस्य तृष्णया प्राप्तीच्छया अन्तिधिया रामेण जनस्थाननाम्नि दण्डकारण्यैकदेशे भ्रान्तं मया तु जनानां स्थाने कनकरूपया मृगतृष्णया मरीचिकया अन्धितधिया भ्रान्तम् कनके मृगतृष्णारूपणञ्च दुष्पापजलार्थिनो मृगतृष्णायामिव दुष्पापे कनकेऽपि प्रवृत्तेस्तादृशवृत्तिविषयत्वसाधर्म्यात्। रामेण प्रतिपदं पदे पदे उदश्रु यथा स्यात् तथा वैदेहीति वचः प्रलपितम्; मया तु वै इत्यनेन सम्बोध्य कातर्यादुदश्रु यथा स्याात् तथा देहीति वचः प्रतिपदं प्रतिस्थाने प्रलपितम्। रामेण लङ्काभर्त्तू रावणस्य वदनानां मुखानां परिपाट्यां पङ्क्तौ परिपाटननिमित्तं वा इषुघटना कृता, मया तु भर्त्तुः प्रभोः परिपाटीषु परिचर्यानिमित्तं का घटना अलम् अत्यर्थं न कृता तद् वद; कुशलं दारिद्यापनायकं वसु धनं यस्य तथाता मया तु नाधिगता, रामेण तु कुशलवौ सुतौ यस्याः सा सीता प्राप्तैव इति तु-शब्दलभ्योऽर्थः। अत्रेति। 'उपमानोपमेयभावः उपमा, रामत्वप्राप्तिव्यङ्ग्या 'वाच्याङ्गतां' वाच्यस्य व्यतिरेकालङ्कारस्य अङ्गतां प्रकर्षकताम् कविना नीत इत्यर्थः। व्यतिरेकालङ्कारोऽत्र अप्राप्तकुशलवसुताकस्य उपमेयस्य दरिद्रस्य प्रातप्कुशलवसुताकात् रामादुपमानाद् आधिक्यरूपो नञा वाच्यः, आधिक्यञ्च प्रतिपाद्यस्य विषादस्याधिक्यात्। उपमानोपमेयभाव इत्युपलक्षणाम्, रामरूपकमपि तादृशं बोध्यम्। यद्यपि उपमानोपमेयभावो व्यतिरेकालङ्कारशरीरनिर्वाहक एव, तथाऽपि बहुविशेषणनिर्वाह्यत्वे सति वैचित्र्याधिक्यात् प्रकर्षकोऽपीत्यवधेयम्।

## सुधासागरः

अथ वाच्याङ्गभावेन शब्दशक्तिमूलस्य लक्ष्यक्रमस्य गुणीभावमुदाहरति—'जनस्थान' इति।

शिखरिणी छन्दः। कवेर्वाक्यमिदम्। मया जनानां स्थाने नगरग्रामादौ। कनके या मृगतृष्णा निष्फलाशा, यद्वा कनकस्य मृगो मार्गणं प्रार्थना वा तत्र या तृष्णा तयाऽन्धिताऽन्धीकृता विवेकशून्यीकृता या धीस्तया भ्रान्तम्। वै निश्चयेन देहीति वचः प्रतिपदं प्रतिस्थानमुदश्रु उत्थिताश्रुजलं यथा स्यात्तथा प्रलपितम्। अलमतिशयेन काभर्त्तुः कुत्सितभर्त्तुर्लुब्धधनिनो वदनपरिपाटीषु मिथ्यावचनपरम्परासु घटना एवमेवेति समर्थना कृता। रामेणाऽपि लङ्का-भर्त्तु रावणस्य वदनपरिपाट्यां वक्त्रपरम्परायामिषूणां वाणानां घटना कृता। इत्थं मया रामत्वमाप्तम्, परन्तु कुशलमार्यातिशुद्धं वसु धनं यस्य तत्ता तु नाधिगता। रामेण कुशलवौ सुतौ यस्याः सा सीता प्राप्तेति भावः। अत्र पादत्रयद्योत्याऽपि रामेण सहोपमा मयाऽऽप्तं रामत्वमित्यनेन वाच्यतां नीता, तदङ्गं च शब्दशक्तिमूलाऽनुरणरूपो द्वितीयोऽर्थः। तदेतदाह श्रीवृत्तिकारः—अत्र शब्दशक्तीत्यादि।

आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गी-
मम्भोजिनीं क्वचिदपि क्षपितत्रियामः ।
एतां प्रसादयति पश्य शनैः प्रभाते
तन्वङ्गि पादपतनेन सहस्त्ररश्मिः ॥ १२५ ॥

अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो निरपेक्षरविकमलिनीवृत्तान्ताध्यारोपेणैव स्थितः ।

---

### सङ्केत

आगत्येति । अत्र विसंष्ठुलाङ्गीव विसंष्ठुलाङ्गी तां तथेति विग्रहः । बहुब्रीहौ तु ङीप्रत्ययाप्राप्तेः । क्वचिदपि द्वीपे क्षपिता त्रियामा येन । दिनं कृतमित्यर्थः । पादपतनेन दीप्तियोगेन प्रसादयति—लक्षणया विकासयतीत्यर्थः । अत्र समासोक्तौ वस्तुरूपनायकवृत्तान्तस्य सामर्थ्यदागतत्वात् अङ्गत्वम् । निरपेक्षेति न हि रविपद्मिन्यौ नायकवृत्तान्तं आकाङ्क्षतः । नायकश्च नायिका च तौ नायकौ । तद्वृत्तान्तः अर्थात् आपतितः । अध्यारोपेणैवेति । नह्यत्र नायकवृत्तान्तः रविपद्मिनीवृत्तान्तवत् प्राधान्यं लभते । कुतः ? रविपद्मिनीवृत्तान्तस्य प्रभातप्रस्तावात् वाच्यस्य सतः अङ्गतां नीतत्वात् । रविपद्मिन्योः नायकवृत्तान्तः आरोपितः इति भावः ।

### सङ्केतः (रुय्यकः)

अध्यारोपेणैव स्थित इति । न ह्यत्र वाच्य इव प्रतीयमानोऽर्थो वाक्यार्थतां लभते, विशेषार्थाभिधायिनो (घानयो) रुभयार्थप्रतिपादकत्वाभावात् । विषं जलमपि । एकान्तस्थितोऽप्युदासीन इत्यच्युतपदद्योत्यम् । दर्शनेन किं तृप्तिरुत्पद्यते उपभोगनैवोत्पद्यते । हतजन इति लोकस्तावदन्यथा मन्यते । तत्र किमात्मानं वञ्चयावः ? आमन्त्रणं ज्योक्करणम् ।

### बालचित्तानुरञ्जनी

अर्थशक्तिमूलानुरणनरूपव्यङ्ग्यमुदाहरति । कश्चिन्नायको नायिकां प्रत्याह हे तन्वङ्गि ! पश्य क्वचित् क्वचिदपि द्वीपे क्षपिता त्रियामा रात्रिर्येन स सहस्त्ररश्मिरागत्य संप्रति प्रभाते पादपतनेन किरणपतनेन कृत्वा वियोगेन विसंष्ठुलाङ्गीं कृशामित्यर्थः । एताम् अम्भोजिनीं शनैः प्रसादयति लक्षणया विकासयतीत्यर्थः । अत्र वाच्यस्याङ्गं किमित्याकाङ्क्षायामाह अत्रेति । अत्र श्लिष्टपदोक्तौ प्रस्तुतरविकमलिनीवृत्तान्तस्य वाच्यस्य प्रधानस्य सामर्थ्यात् वाच्यसंस्कारकत्वेनागतो नायकवृत्तान्तोऽङ्गम् । ननु वियोगसंष्ठुलाङ्गीपादपतनेनेति श्लिष्टशब्दसद्भावात् किमुभ-

यशक्तिमूलः अर्थशक्तिमूलो वेति शङ्कायामाह अत्रेति। नाम्ना व्यपदेशा भवन्तीति न्यायात् अर्थस्यैवाधिक्यात् अर्थशक्तिमूल एवेति भावः।

ननु किमयमुपमालङ्कारध्वनिः ? किं वा वस्तुध्वनिरित्याकाङ्क्षायामाह वस्तुरूप इति। उल्लासस्य कालकरवालेत्यादाविव श्लिष्टशब्दभावनया पार्थक्येनार्थद्वयप्रतीत्यभावान्नोपमालङ्कारः। किन्तु वस्तुरूपालङ्कार एवेत्यर्थः। नन्वयं वाच्यसिद्ध्यङ्गमस्तु, मास्तु परस्याङ्गमित्यत आह निरपेक्षेति। रविकमलिन्यौ न हि नायिकानायकवृत्तान्तपेक्षेते अध्यारोपेणेत्यनेनैक्यप्रतिपत्तिः साध्यते। एवकारेण गुणभावं विना प्रकारान्तरेणान्वयाभावः। निरपेक्षत्वेन सिद्धस्य वाच्यस्य यदुपोद्बलकं तदपराङ्गम्। यत्तु वाच्येऽत्यन्तमेवोपकारकं तद्वाच्यसिद्ध्यङ्गमिति विवेकात् नायं वाच्यसिद्ध्यङ्गमिति भावः।

## काव्यादर्शः

वाच्यास्यालंकारस्य वस्तुरूपं व्यङ्ग्यमर्थशक्तिमूलानुरणनोपममङ्गम्, यथा 'आगत्य' इति। अत्र समासोक्तौ प्रस्तुतरविकमलिनीवृत्तान्तस्य प्राधान्यं तस्य नायकवृत्तान्तो वस्तुरूपोऽर्थपर्यालोचनेनागतोऽङ्गम्। निरपेक्षेति। न हि रविकमलिन्यौ नायकनायिकावृत्तान्तमपेक्षेते रविकमलिन्योर्नायकनायिकावृत्तान्तोऽर्थादापतित इत्यर्थः। अध्यारोपेणैवेति। न ह्यत्र वाच्य इव प्रतीयमानोऽर्थो वाक्यार्थतां लभते विशेष्याभिधायिनोरुभयार्थप्रतिपादकत्वाभावात्। वाच्यसंस्कारकत्वेन व्यङ्ग्यस्य स्थितेर्वाच्यस्यैव प्राधान्यम्। 'गावो वः पावनानाम्' इत्यादौ तु विशेष्यपदमप्युभयार्थाभिधायीति वाक्यार्थयोरुपमानोपमेयत्वं व्यङ्ग्यमित्यलंकारस्य प्राधान्ये ध्वनिरेव। तदुक्तम्—

**व्यङ्ग्यस्य यत्राप्राधान्यं वाच्यमात्रानुयायिनः।**
**समासोक्त्यादयस्तत्र वाच्यालंकृतयः स्फुटाः॥**

## विवेकः

आगत्येत्यादि—विसंष्ठुलत्वं संकुचितत्वं विलुलितत्वञ्च। प्रसादनं विकस्वरत्वञ्च। पादो रश्मिश्च। नायकेत्यादि—नायिकानायकयोश्चेत्येकशेषः। अध्यारोपेणैव स्थित इति—नह्यत्र रविकमलिनीवर्णनरूपो वाच्यो वाक्यार्थीभूतः, तथा नायककेलिरूपोऽर्थः प्रतीयमानोऽपि वाक्यार्थता प्रतिलभते, विशेष्याभिधायिनोरुभयथाऽर्थप्रतिपादकत्वाभावात्। अतः प्रतीयमानस्य तदङ्गत्वम्।

## दीपिका

विसंष्ठुलाङ्गीं विदलिताङ्गीम्। पादानां रश्मीनाम्। पादयोश्च पतनं प्रणामश्च। नायकेत्येकशेषः। वस्तुरूपोऽनुनयलक्षणमित्यनेन वस्तुनो वाच्याङ्गता। निरपेक्षेत्यनेन वाच्यसिद्ध्यङ्गतानिरासश्च। रविकमलिनी वृत्तान्ते स्वप्रकाशस्यानुरागस्यास्वादोपयोगिनोऽध्यारोपेण समर्पणेति रसादिपदव्यवहार्याया रतेरत्र काव्याङ्गता दर्शिता। इत्थंभावेनैव च रसादेर्वाच्याङ्गता, न तु तात्विकरूपेण। इयञ्च समासोक्त्यलङ्कृतिः। अत्र च पादशब्दस्य द्व्यर्थत्वे सत्यपि प्रसादयतीत्येतावन्मात्रेणैव प्रतीतिनिर्वाहान्न तस्योत्कटा शक्तिरित्यर्थशक्तिमूलतोक्तिः।

### दर्पणः

आगत्येति। विसंष्ठुलं बिल्वमिति। प्रसादयति विकासयति प्रसन्नां करोति च। पादानां रश्मीनां पतनं प्रणामश्छ। नायकश्च नायिका च नायकावित्येकशेषः। अध्यारोपेणैव स्थित इति। न ह्यत्र रविकमलिनी-वर्णरूपवाच्यार्थवत् प्रतीयमानो नायककेलिरूपोऽर्थो वाच्यार्थतां लभते। विशेष्याभिधायिनोः पदयोः उभयार्थानु-प्रतिपादकत्वाभावात्। प्रसादयतीत्येतावन्मात्रेणैव प्रकृतनिर्वाहात्। पदद्वयस्य द्व्यर्थत्वेऽपि नोत्कटा शब्दशक्ति-रित्यर्थशक्तिमूलोक्तिः। निरपेक्षेत्यनेनास्य वाच्यसिद्ध्यङ्गताया भेदश्च रसादौ चानुरणनरूपस्य गुणीभावः। व्यभिचार एवेति (?) तस्यागमनम् (?)। मुखविकारकारी कश्चिदान्तरो धर्मः येन दिग्भ्रमणमिव दृश्यते।

### साहित्यचूडामणिः

अथार्थशक्तिमूलं वस्तुमात्रमुदाहरति—आगत्येति। क्वचिदपि मेरुपार्श्वादौ विपक्षभवने च।

नायकश्च नायिका च नायकौ, तयोर्वृत्तान्तो यथानिर्दिष्टार्थसामर्थ्यसमुत्थितसूर्यपद्मिन्योर्वृत्तान्तत-याध्यारोपितेनैव स्वरूपेण स्थितः वस्तुरूप इति पूर्वोदाहरणादभिन्नस्वरूपः। गुणीभूतव्यतिरेके वक्तुरसंबन्धाभिधायित्वप्रसङ्ग इति सूचयितुमेवकारः। निरपेक्षेत्येतेन वाच्यसिद्ध्यङ्गादस्य भेद उपपाद्यते। तद्धि वाच्यस्य या सिद्धिरुत्पत्त्यवस्था तत्राङ्गम्। एतत् तु सिद्धस्य वाच्यस्य पश्चादन्वयदशायामङ्गम्। स्वसिद्धिं प्रति निरपेक्षे रविकमलिनीवृत्तान्तेऽध्यारोपेण स्थित इति यावत्।

### सम्प्रदायप्रकाशिनी

अर्थशक्तिमूलस्य वस्तुध्वनेर्दर्शयति—आगत्य सम्प्रतीति। पादपतनं किरणावतारः प्रणामश्च।

निरपेक्षेति। अङ्गभूतव्यङ्ग्यमन्तरेण वाच्यसिद्धिर्दर्शिता। सापेक्षत्वे हि वाच्यसिद्ध्यङ्गता स्यात्।

### मधुमती

आगत्येति। विसुंष्ठुलाङ्गीं—सङ्कुचिताङ्गीमेव सन्तापकार्श्यादिनाविषमिताङ्गीम्। नन्वत्र नायकवृत्तान्त-प्रत्ययः किं शब्दशक्तिमूलः? उत अर्थशक्तिमूलः? आहोस्वित् उभयशक्तिमूलः? किञ्च—किमत्र नायकवृत्तान्त एव ध्वन्यः? उत तेन सह उपमानोपमेयभावः इत्युपमालङ्कारोऽपि? इति, अस्य च ध्वनेः किं वाच्यसिद्ध्यङ्गता? उत न? इति च सन्देहे निर्धारयितुमाह—अत्रेति। अर्थशक्तिमूलः इत्यनेन शब्दशक्त्यादिमूलतां अपाकरोति यद्यपि—पादपदस्य श्लिष्टत्वात् शब्दशक्तिमूलत्वं अस्त्येव। तथापि 'भूम्ना व्यपदेश' इति अर्थशक्तिमूलत्वव्य-पदेशः। इदं तु प्रकृते। यत्र उभयशक्तिमूलत्वं तत्र अविवक्षैव व्यपदेशनियामिका। अत एव 'उल्लास्यकालकर-वाले' त्यत्रापि तथा विवक्षायां उभयशक्तिमूलत्वमेव, प्रकारान्तराभावात्। न चैवमपि—'विभाति नृप भीमः' इत्यत्रेव अत्रापि पादपदं श्लिष्टमिति पदप्रकाश्यशब्दशक्तिमूलध्वनित्वव्यपदेशः भवत्विति वाच्यम्। भीमपदस्येव पादपदस्यापि विशेष्यानुपस्थापकत्वात्। अत एव— अत्र समासोक्त्यलङ्कारेऽपि श्लिष्टविशेषणमात्रात् अपरार्थ-प्रतीतिः इति ज्ञेयम्। वस्तुरूपः इत्यनेन नोपमा व्यङ्ग्या इति प्रतिपाद्यते। तच्च श्लिष्टशब्दाभावेन, पार्थक्येन अर्थद्वयाप्रतीतेः। निरपेक्षेत्यनेन वाच्यसिद्ध्यङ्गतां निराकरोति। भवेदप्येवं यदि—वक्ष्यमाणतदुदाहरणे रूपक-सिद्धिः व्यङ्ग्यगरलार्थमिव, रविकमलिनीवृत्तान्तोऽपि नायकवृत्तान्तमपेक्षेत। न चैवम्, अनुपपत्त्यभावात्। एवं

च—'न वाच्यसिद्ध्यङ्गता नापराङ्गता वा' इति पितृचरणलेखनस्य नैतदाकारः सन्देहः इत्यर्थः । यथाश्रुते अस्य अपराङ्गत्वात् अराङ्गतिः स्यादिति ।

## विस्तारिका

आगत्येति । वियोगो द्वीपान्तरसञ्चारेण सम्बन्धाभावो विरहश्च । विसंष्ठुलं संकुचित्तम्, शोकादिना पूर्वावस्थातो विसंवादि च । क्वचिद् द्वीपान्तरे नायिकान्तरगृहे च । प्रसादनं विकासनं मानापनयनं च । पादो रश्मिश्चरणं च । 'पतनमधः संयोगः प्रणामश्च ।'

अत्रेति । नायकेत्येकशेषः । वृत्तान्तो व्यवहारः, स एव न तत्प्रतियोगिनौ नायिकानायकौ, तदुपस्थापकविरहात् व्यवहारावच्छेदकत्वेनैव तयोः प्रतीतेः । तेन प्राधान्येन तदनुपस्थितौ नोपमारूपकध्वनिः तदाह—वस्तुरूप इति । एनां प्रसादयतीत्येतावतापि व्यवहारप्राप्तौ । 'पाद'पदश्लेषस्यावर्जितसन्निधिमात्रत्वमित्याह—अर्थशक्तिमूल इति ।

ननु प्रकृताप्रकृतवृत्तान्तयोरभेदो वाक्यार्थोऽप्रकृतवृत्तान्तं विना न पर्यवस्यतीति वाच्यसिद्ध्यङ्गत्वमापतितमित्याह—निरपेक्षेति । अप्रकृतवृत्तान्तोपस्थितिं विनापि वाक्यार्थस्य प्रकृतवृत्तान्तस्य पर्यवसानाद् न तस्य साकाङ्क्षत्वम्, अपि तु तेनोत्कृष्टत्वमेवेत्यर्थः । नन्वेवं द्वयोर्वृत्तान्तयोरसम्बन्ध इत्याह—अध्यारोपेणैवेति ।

रविकमलिनीवृत्तान्तयोरध्यारोपः, तेन तद्विषयतयाऽऽरोप्यमाणेन नायकवृत्तान्तत्वेन रविकमलिनीवृत्तान्तत्वेन प्रतीतेरित्यारोपविषयताख्यसम्बन्धाद् द्वयोर्नासम्बन्धः, तदाह—स्थित इति । सम्बन्ध इत्यर्थः ।

इयं समासोक्तिः । अत्र व्यवहारस्य, रूपके तु व्यवहारिणश्च समारोपः । तदुक्तम्—"रूपकं रूपितारोपात्" इति । रूपित्वस्यारोपो रूपस्य रूपं व्यवहारः, तस्य समासोक्तिविषयत्वात् । 'ये तु रसस्य वाच्याङ्गत्वेऽप्येतदेव तन्त्रेणोदाहरणम्' इति वदन्ति, तेषामयमाशयः—"खण्डितानुनयलक्षणनायकवृत्तान्ततादात्म्यावगमाक्षिप्तरतिरूपेण रसेन वाच्यस्य रविकमलिनीवृत्तान्तस्य परिपोषणमिति रसस्य वाच्याङ्गता" इति, तदसत्; नायकतादात्म्याध्यवसितप्रकृतवृत्तान्तेनाक्षेपकरूपेणाक्षिप्त इति पोषकस्य प्राधान्येनाङ्गताविरहात् । आक्षेपकस्याक्षिप्यमाणपर्यवसायित्वादिति ।

## सारबोधिनी

आगत्येति । वियोगो द्वीपान्तरसञ्चारेण संबन्धाभावो विरहश्च । विसंष्ठुलं सङ्कुचितम् । कार्कश्यादिना पूर्वावस्थातो विसंवादि च । क्वचित् द्वीपान्तरे नायिकान्तरे च प्रसादनं विकसनं मानापनयनञ्च । पादो रश्मिश्चरणश्च । पतनमधःसंयोगः प्रणामश्च । अत्रेति । नायकेत्येकशेषः । वृत्तान्तो व्यवहारः । स एव न तत्प्रतियोगिनौ नायिकानायकौ, तदुपस्थापकविरहात् । व्यवहारवच्छेदकत्वेवैन तयोः प्रतीतेः तेन प्राधान्येन तदनुपस्थितौ नोपमारूपकध्वनी । तदाह वस्तुरूप इति । यद्यपि पादपतनेनेति श्लिष्टपादसद्भावात् शब्दशक्तिमूलं संभवति । तथाप्यर्थशक्तिमूलत्वेन व्यपदेशः, प्राधान्यात् । तद्व्यतिरेकेणापि नायकवृत्तान्तावगमाच्च ।

ननु प्रकृताप्रकृतवृत्तान्तयोरभेदो वाक्यार्थोऽप्रकृतवृत्तान्तोपस्थितिं विना न पर्यवस्यतीति वाच्यसिद्ध्यङ्गत्वमापतितमित्याह निरपेक्षेति । अप्रकृतवृत्तान्तोपस्थितिं विनापि वाक्यर्थस्य पर्यवसानं तु न तत्साकाङ्क्षत्वम् अपि

तु तेनोत्कर्षणीयत्वमेवेत्यर्थः । अस्या व्यङ्ग्योक्तेर्वाच्योत्कर्षकत्वेन समासोक्तित्वं तथा द्वयोर्वृत्तान्तयोरारोप्यारोपविषयताया एव संबन्धत्वात् ।

टीकाकृतस्तु—रसस्य वाच्याङ्गत्वेऽप्येतदेवोदाहरणमिति वदन्ति । तेषामयमाशयः । खण्डितानुनयनलक्षणनायकवृत्तान्ततादात्म्यावगम आक्षिप्तरतिरूपेण रसेन वाच्यस्य रविकमलिनीवृत्तान्तस्य परिपोषणमिति रसस्य वाच्याङ्गतेति ।

**काव्यप्रदीपः**

वाच्य एवार्थशक्तिमूलस्याङ्गभावो यथा—

**'आगत्य संप्रति वियोगविसंष्ठुलाङ्गी-**
**मम्भोजनीं क्वचिदपि क्षपितत्रियामः ।**
**एतां प्रसादयति पश्य शनैः प्रभाते**
**तन्वङ्गि पादपतनेन सहस्त्ररश्मिः ॥'**

अत्रार्थशक्तिमूलो नायकनायिकावृत्तान्तो वाच्यरविकमलिनीवृत्तान्ताध्यारोपेण तदङ्गतयैव स्थितः । समासोक्तौ 'उपोढरागेण विलोल—' इत्यादौ सर्वत्र प्रतीयमानार्थोपस्कृतवाच्यस्यैव प्राधान्यात् । अयं च पादपतनेनेति श्लिष्टशब्दसद्भावेऽपि न शब्दशक्तिमूलत्वेन व्यपदेश्यः, किं त्वर्थशक्तिमूलत्वेन । प्राधान्येन व्यपदेश इति न्यायात् । तद्व्यतिरेकेणापि नायकनायिकावृत्तान्तव्यक्तिसंभवाच्च । न चोपमात्र व्यङ्ग्या । 'उल्लास्य काल—' इत्यादिवच्छ्लेषाभावात् । न च वाच्यसिध्यङ्गत्वम् । रविकमलिनीवृत्तान्तस्यैतन्नैरपेक्ष्येणैव सिद्धेरिति ।

**आदर्शः**

अर्थशक्त्युत्थमनुरणनरूपमलङ्कारमपि वाच्याङ्गमाह—आगत्येति । प्रातर्मानिनीं प्रति नायकस्योक्तिरियम् । हे तन्वङ्गि, सहस्त्ररश्मिः सूर्यः सम्प्रति आगत्य एतामम्भोजिनीं पादेन रश्मिना पतनेन प्रभाते शनैः प्रसादयति एतत् पश्य । कीदृशः ? क्वचिद द्वीपान्तरे क्षपितरात्रिकः । अम्भोजिनीं कीदृशीम् ? सूर्यवियोगेन विसंष्ठुलाङ्गीं व्याकुलाङ्गीम्, अङ्गमत्र पुष्पमेव । अत्रेति, नायकेत्यत्र एकशेषः नायिकानायकवृत्तान्त इत्यर्थः । स च क्वचिदपि नायिकागृहे क्षपितरात्रिको नायकः प्रातरागत्य वियोगविसंष्ठुलाङ्गीं नायिकां पादपतनेन शनैः प्रसादयतीत्येवं रूपः । वस्तुरूप इति । समासोक्तिरूपस्याप्यस्य वस्तुत्वानपायादित्युक्तम्, अवस्तुरूप इत्येवम् अकारप्रश्लेषो वा । निरपेक्षेति नायकवृत्तान्तरूपव्यङ्ग्यनिरपेक्षेत्यर्थः, तदन्वयं विनैव वाच्य-रविकमलिनीवृत्तान्तप्रतीतेः । अनेन व्यङ्ग्यप्रतीतिसापेक्षवाच्यप्रतीतेर्वक्ष्यमाणवाच्यसिद्ध्यङ्गाद्व्यवच्छेदः कृतः । अध्यारोपेणेति रविकमलिनीवृत्तान्त एव नायक इत्येवमध्यारोपेण स्थित इत्यर्थः । रविकमलनीवृत्तान्तस्य मानिन्यां प्रदर्शनानुपयोगेन नायकवृत्तान्तारोपेणैव तदुपयुक्ततारूपः प्रकर्ष इत्यतोऽङ्गमित्यर्थः । अगूढे वाच्यतुल्यचमत्कारित्वेन अपराङ्गे तु स्वचमत्कारस्य परार्थतया वाच्यादनतिशयो बोध्यः ।

**सुधासागरः**

वाच्य एवार्थशक्तिमूलस्याङ्गभावामुदाहरति—'आगत्ये'-ति ।

वसन्ततिलकाच्छन्दः । हे तन्वङ्गि ! पश्य क्वचिदपि द्वीपान्तरे नायिकान्तरे च क्षपिताऽतिवाहिता त्रियामा रात्रिर्येन तथाभूतः सहस्ररश्मिः सूर्यः सम्प्रति प्रभाते प्रातःकाले जाते सति शनैः रहस्यभङ्गभीत्या मन्दमागत्य वियोगेन विसंष्ठुलं सङ्कुचितं मुकुलितमिति यावत् । पक्षान्तरे विपर्यन्तं कार्श्यादिना पूर्वावस्थातो विसंवादि अङ्गं यस्यास्तादृशीमम्भोजनीं पद्मिनीं नायिकाविशेषं च पादपतनेन किरणपातेन प्रणामेन च प्रसादयति विकासयति अनुनयति चेति ।

अत्र नायकेत्यादि । नायक इत्येकशेषः । अर्थशक्तिमूलो नायकनायिकावृत्तान्तो वाच्यरविकमलिनीवृत्तान्ताध्यारोपेण तदङ्गतयैव स्थित इत्यर्थः । समासोक्तौ उपोढरागेण विलोलेत्यादौ, सर्वत्र प्रतीयमानार्थापस्कृतवाच्यस्यैव प्राधान्यात्, अयं च पादपतनेनेति, श्लिष्टशब्दसद्भावेऽपि न शब्दशक्तिमूलत्वेन व्यपदेश्यः किन्त्वर्थशक्तिमूलत्वेन 'प्राधान्येन व्यपदेशः' इति न्यायात्, तद्व्यतिरेकेणाऽपि नायकनायिकावृत्तान्तव्यक्तिसम्भवाच्च । न वोपमाऽत्र व्यङ्ग्या, 'उल्लास्य कालकरवाले'-त्यादिवत् श्लेषाभावात् । न च वाच्यसिद्ध्यङ्गत्वम्, रविकमलिनीवृत्तान्तस्यैतन्नैरपेक्ष्येणैव सिद्धेरिति द्रष्टव्यम् ।

---

(३) वाच्यसिद्ध्यङ्गं यथा—

**भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम्।**
**मरणञ्च जलगभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्॥ १२६ ॥**

अत्र हालाहलं व्यङ्ग्यं भुजगरूपस्य वाच्यस्य सिद्धिकृत्।

यथा वा—

**गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते**
**किं त्वेवं विजनस्थयोर्हतजनः सम्भावयत्यन्यथा।**
**इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-**
**माश्लिष्यन्पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः॥ १२७ ॥**

अत्राच्युतादिपदव्यङ्ग्यमामन्त्रणेत्यादिवाच्यस्य। एतच्चैकत्रैकवक्तृगतत्वेन अपरत्र भिन्नवक्तृगतत्वेनेत्यनयोर्भेदः।

---

सङ्केतः

भ्रमिमिति। भ्रमिः चित्तस्यानवस्थितत्वम्। अरतिः बाह्यार्थेषु। प्रलयः इन्द्रियाणां अल्पा शक्तिः। चित्तस्य शक्तिरोधः मूर्च्छा। सत्येव चेतसि इन्द्रियाणां अशक्तिः तमः। विषं प्रस्तावात् जलम्। तच्च भ्रमितप्रभृति कार्यविशेषोत्थापनेन कालकूटमिवेति व्याख्या, अन्यथा मेघानां भुजङ्गत्वं न सिध्यतीति। अयं शब्दशक्तिमूलः पदप्रकाश्यो ध्वनिः। 'मेघानां कृष्णत्वेन भुजङ्गत्वसिद्ध्या विषस्य जलस्य गरलरूपता सिद्ध्यती'ति व्याख्याने तु उत्तमत्वमेव।

अच्युतेति। हे अच्युत! हरे! अक्षरणशील! दर्शनेन सम्भोगविकलेन। विजनस्थयोः एकान्तस्थयोः। सम्भावयति मन्यते। भवांस्तावत् अच्युतः एकान्तस्थितोऽपि उदासीनः, तत् किमिति आत्मानं वञ्चयावः? आमन्त्रणं अच्युतेतिरूपं हूतिकरणम्। वाच्यस्येति। सिद्धौ अङ्गं इति योगः। अत्र वाच्यं स्वोपस्कारकात् व्यङ्ग्यात् स्वात्मोपपत्तिं लभमानं वैदग्ध्यं प्रतिपादयत् व्यङ्ग्यमर्थं गौणयति। एतच्च व्यङ्ग्यम्। एकत्र भ्रमीत्यत्र। एको वक्ता कविः। अपरत्र गच्छामीत्यत्र। अत्र पूर्वार्धे गोपी, उत्तरार्धे तु कविः वक्ता।

## बालचित्तानुरञ्जनी

अपरस्याङ्गं सप्रपञ्चमुदाहृत्य क्रमप्राप्तं वाच्यसिद्ध्यङ्गमुदाहरति वाच्येति। जलदा एव भुजगाः सर्पाः, तत्तु विषम् उदकम्। वियोगिनां भ्रमिश्चेतसोऽनवस्थानम्। अरतिं विषयेष्वनभिलाषः अलसहृदयतां प्रलयं इन्द्रियाणां नष्टचेष्टतां, मूर्च्छा मनसो बाह्येन्द्रियैः सह शक्तिनिरोधः। तमः सत्येव चिन्तासामर्थ्ये बाह्येन्द्रियशक्तिनिरोधः शरीरकार्श्यं, मरणशब्देन प्राणत्यागसाधिका पूर्वक्रियैव पाशबन्धाद्यवसरगत्ता विवक्ष्यते। तच्च प्रसह्य बलात्कारेण कुरुते। चकार उक्तसमुच्चयार्थः।

अत्र किं व्यङ्ग्यं कथं वाच्यसिद्ध्यङ्गं तत्राह अत्रेति। जलदा एव भुजगा इति। जलदानां भुजगरूपणं वाच्यं हालाहलं वस्तु व्यङ्ग्यं विना न सिद्ध्यतीति हालाहलवाच्यस्य सिद्धिकृत् वाच्यस्य भुजगार्थस्य निर्वाहाय विषमि-तिपदप्रकाश्यशब्दशक्तिमूलो हालाहलो वाच्यसिद्ध्यङ्गम्। अत एव सापेक्ष त्वापरस्याङ्गादस्य भेदः।

अत्रैवोदाहरणान्तरमाह यथा वेति। हे अच्युत कृष्ण अक्षरणशील गच्छामि। भवतो दर्शनात् सुरतसेवा-विकलेन प्रीतिः किमुत्पद्यते ? किन्तु हतजनः एवं विजनस्थयोरावयोरन्यथा संभावयति मन्यते इत्यनेन प्रकारेणा-मन्त्रणभङ्गि अच्युतेत्यामन्त्रणप्रकारस्तेन सूचितम्। यद्वृथावस्थानं तज्जनितः खेदः। तेनालसां गोपीं श्लिष्यन् पुलकानामुत्करः समूहस्तेनाञ्चिता तनुर्यस्य स हरिः वः पातु।

अत्र किं व्यङ्ग्यमित्याकाङ्क्षायामाह अत्रेति। अच्युतेत्यामन्त्रणेन मद्विषये त्वं न चरम इति यद्व्यङ्ग्यम् तंदामन्त्रणभङ्गीत्यादिवाच्यस्य सिद्ध्यङ्गमिति शेषः। वाच्यमेवात्र वैदग्ध्यातिशयकारि तदपि वाच्यं स्वोत्पत्तौ चोपकारकं व्यङ्ग्यमपेक्षते। स्वस्यैवालाभादिति भावः। उदाहरणद्वयस्यैको भेदस्तत्राह एतच्चेति। एतद्व्यङ्ग्यं एकत्र भ्रमिमरतिमित्यादौ एक एव कविर्वक्ता, अन्यत्र गच्छाम्यच्युत इत्यादौ पूर्वार्धे गोपी वक्त्री, अपरार्धे कविर्वक्तेत्य-नयोरुदाहरणयोर्भेद इत्यर्थः।

## काव्यादर्शः

'भ्रमिः' चित्तस्यानवस्थिततत्वम्। 'अरतिः' बाह्येषु विषयेषु इत्यर्थः। 'प्रलयः' इन्द्रियाणामल्पं सामर्थ्यम्। 'मूर्च्छा' मनस इन्द्रियाणां च शक्तिनिरोधः। 'तमः' सत्येव मनसि इन्द्रियाणामशक्तिः। 'मरणम्' इति। प्राणत्याग-कर्तृतात्मिका पूर्वक्रियैव पाशबन्धाद्यवसरगता मरणशब्देनात्र विवक्षिता। प्रकरणाद् 'विषं' जलमपि। सिद्धिकृ-दिति। हालाहलं वस्तु। व्यङ्ग्यं विना जलद एव भुजग इति भुजगरूपणं न सिध्यति। ततो वाच्यस्य भुजगार्थस्य निर्वाहाय 'विषम्' इति पदप्रकाशशब्दशक्तिमूलो हालाहलार्थो व्यङ्ग्यो गुणतामेति। भ्रमिप्रभृतीनां तु मरणान्तानां साधारण एवार्थः।

'अच्युतः' विष्णुः अक्षरणश्च। 'दर्शनेन' इति सुरतसेवाविकलेन। जनस्तावदेकान्तस्थयोरन्यथा मन्यते। भवांस्तु अच्युत उदासीनः, तत् किमात्मानं वद, यावः [?]। आमन्त्रणं ज्योत्करणम् [?]। वाच्यस्येति। सिद्धौ अङ्गमिति शेषः। वाच्येनैव हि वैदग्ध्यातिशयः प्रतीयते, इति वाच्यादेव चारुत्वसंपत्। वाच्यस्य तु स्वात्मोत्पत्तिः स्वोपस्कारका व्यङ्ग्यात्। वाच्यार्थस्य प्रतिपत्तये लाभाय एतद् व्यङ्ग्यमपेक्षणीयम्, अन्यथा वाच्योऽर्थो न लभ्येत,

स्वतःसिद्धतया अवचनीय एव सोऽर्थः स्यादित्यर्थः। एतच्चेति व्यङ्ग्यम्। एकत्र भ्रमिमरतिमित्यादौ, एक एव कविर्वक्ता। अपरत्र च 'गच्छाम्यच्युत' इति पूर्वार्धं गोपी, अपरार्धे तु कविर्वक्तेत्यनयोरुदाहरणयोर्भेदः।

## विवेकः

भ्रमिमित्यादि—बहिरंन्तः संवित्तिविरहः प्रलयः। अत्र भ्रमिप्रभृतीनां मरणान्तानां साधारणधर्मपर्यालोचनया विषमिति पदं न जलमात्रमभिधाय विवर्ण- (विरन्तु) मुत्सहते, किन्तु व्यङ्ग्यमनुधावति, तं विना जलद्भुजगरूपणस्यासङ्गतार्थत्वात्, असिद्धे विप्रलम्भे च भ्रमिप्रभृतीनां निसर्ग [तोऽ] सम्भवादङ्गत्वं स्वभावसिद्धमेवेति तदुपनिबन्धो न दोषाय।

गच्छामीत्यादि—विपरीतलक्षणया 'गच्छ गछसि चेत् कान्ते'त्यादि(का. आ. २/१४१) वदेवमेकान्ते स्थितोऽप्युदासीन इत्युच्युतपदद्योत्यम्। दर्शनेन किं तृप्तिरुत्पद्यते उपभोगेनैवोत्पद्यते। हतजन इति लोकस्तावदन्यथा मन्यते तत्र किमित्यात्मानं वञ्चयावः। आमन्त्रणं ज्योक्करणम् (रु. सं. ४१)। उदाहरणद्वयप्रयोजनमाह—एतच्चेति।

## दीपिका

भ्रमिर्मुखविकारी दिग्भ्रमणमिव दर्शयन् कश्चानान्तरधर्मः। अरतिर्विषयनिवृत्तिः। प्रलयो मूर्च्छा। यलोपः। जलदभुजगजमित्यत्र मेघसर्पयोस्तादात्म्यरूपणम्। विषं जलमेव विषं गरलमिति प्रतीतिमन्तर्वहतीति शब्दशक्तिमूलालङ्कृतेर्वाच्यसिद्ध्यङ्गता।

अच्युत! अपरित्यक्तमर्य्याद! दर्शनेन तृप्तिर्नोत्पद्यते किन्तूपभोगेनैव। किन्त्विति लोकस्तावदावयोः सङ्गमुद्घोषयत्येव। तकिमित्यकीर्तिभागिनौ मिथ्यात्मानौ वञ्चयाव इति व्यङ्ग्यानि। अत्र चोदाहृतिद्वये व्यङ्ग्ययोरलङ्कृतिवस्तुमात्ररूपेण भेदो विद्यते। स च स्फुट एव।

प्रकारन्तरेणापि भेदमाह—एतच्चेति। वाच्यसिद्ध्यङ्गव्यङ्ग्यम्। एकत्र पूर्वस्यामुदाहृतौ। एकवक्तृगतत्वेनाङ्गिना साध्येन सह स्थितमिति शेषः। भिन्नेति कविनिबद्धवक्तृगतः। आमन्त्रणेत्यादि वाच्यं तु कविरूपवक्तृगतमित्यतो हेतोरनयोरुदाहृतिद्वयगतव्यङ्ग्ययोर्भेदो वैजात्यमुदाहरणद्वयप्रदर्शनबीजमित्यर्थः।

## दर्पणः

प्रलयो नष्टचेष्टता। अत्र शब्दवाच्ये जले गरलाथप्रतीतिं विना जलदभुजगयोस्तादात्म्यरूपमसङ्गतमिति शब्दशक्तिमूलालङ्कारस्य वाच्यसिद्ध्यङ्गता। गच्छामीति। अपरित्यक्तधैर्यदर्शनेन किं फलम्? किन्तूपभोगेनैव। किन्त्विति।

अत्र यद्यपि व्यङ्ग्ययोरलङ्कारवस्तुरूपतयाऽप्युदाहरणद्वयदर्शनमुक्तम्, तथापि प्रकारान्तरेण भेदमाह एकत्रेति। एकत्र अयं स रशनेत्यादौ व्यङ्ग्यं कविनिबद्धवक्तृगतम्। आमन्त्रेत्यादिवाच्यं तु कविगतम्।

## साहित्यचूडामणिः

क्रमप्राप्तं वाच्यसिद्ध्यङ्गमेवाह—वाच्येति । भ्रमिमिति । जलदभुजगजं विषमित्यत्र विषशब्देन सलिलमभिधीयते गरलं व्यज्यते । तच्च व्यङ्ग्ययं जलदं प्रति भुजगरूपणस्य सिद्धिमुत्पत्तिं करोति । ततश्च व्यङ्ग्यवस्तुसमर्पणप्रवृत्तस्य वाच्यस्य सिद्धौ प्रत्युत तद् व्यङ्ग्य प्रवर्तत इति गुणीभूतव्यङ्ग्यत्वम् । यदि च विषशब्दो हालाहलं न ध्वनेत् कथं जलदो भुजग इति रूप्येत । भ्रमिरन्तःकरणस्य वैयाकुल्यम् । अरतिरव्यवस्था । प्रलयः संज्ञानाशः । मूर्च्छा चैतन्यस्य स्तैमित्यम् । तमः शून्यकक्ष्याप्रवेशः । मरणं देहप्राणविश्लेष इति ।

गच्छामीति । तृप्तिराकाङ्क्षाशान्तिः यावज्जीवं पश्यन्त्या अपि न कश्चिदलं भावः अतो गच्छामीति । अच्युत ! अस्खलितहृदयकाठिन्य ! यस्माद् भवतो दूरतो निरीक्षणेन तृप्तिर्न संपद्यते । आमन्त्रणस्य गमनार्थं प्रयोज्यस्य वाक्यस्य भङ्गिः व्यञ्जनस्वभाववैचित्री तया सूचितो यो वृथावस्थानान्निष्फलविलम्बनात् खेदः क्लेशः तेनालसां गोपीमाश्लिष्यन्निति । अच्युततृप्त्यादीनां पदार्थानां व्यङ्ग्यम् आमन्त्रितेत्यादिवाच्यस्य सिद्धिमुत्पत्तिं करोति । यदाह—

**शब्दार्थशक्त्याक्षिप्तोऽपि व्यङ्ग्योऽर्थः कविना पुनः ।**

**यत्राविष्क्रियते स्वोक्त्या सान्यैवालङ्कृतिर्ध्वनेः ॥ ध्व० २.३१ ॥ इति ।**

उदाहरणद्वयस्य मिथो वैषम्यमुन्मेषयति—एतच्चेति । एकत्र पूर्वस्मिन्नभिन्नाभिधातृनिष्ठतया, अपरत्र प्रस्तुते पूर्वत्रार्धे गोपी उत्तरत्र कविरित्यनेकाभिधातृवर्तितया । अस्फुटमिति । पोटास्तनसन्निवेशवदनुन्मिषितरूपमपि व्यङ्ग्यं न चमत्कारायेति भावः ।

## सम्प्रदायप्रकाशिनी

एवमपराङ्गव्यङ्ग्यमसंलक्ष्यक्रमतया संलक्ष्यक्रमतया चोदाहृत्य क्रमप्राप्तमुदाहर्तुमाह—वाच्यसिद्ध्यङ्गं यथेति ।

भ्रमिमरतिमिति । भ्रमिरयथावद्दर्शिता । अरतिरनवस्था । प्रलयोऽक्षवृत्तिविलयः । मूर्छा तासामेव स्तम्भः । तमो व्यामोहः । अत्र जलदस्य भुजगत्वरूपणलक्षणं वाच्यं जलस्य भ्रम्यादिकारिहालाहलत्वप्रतीतिमन्तरेण न सिध्यतीति वाच्यसिद्ध्यङ्गता ।

गच्छामीति । भो अच्युत तव दर्शनेन तृप्तिरुत्पन्नेति न गच्छामि, अपि त्वेवं विजनस्थयोरावयोः सतोर्हतोऽयं जनोऽन्यथा सम्भावयेदिति गमनप्रश्नव्याजेन सूचितं यद् वृथावस्थानं सम्भोगमन्तरेण विफला स्थितिस्तन्निन्धनेन खेदेनालसां गोपीमाश्लिष्यन् पुलकितो हरिः अभिरक्षतु व इत्यत्राच्युतादिपदैर्यद् व्यज्यतेरिरंसालक्षणं वस्तु, तद् वृथावस्थानादिलक्षणवाच्यसिद्धावङ्गम् ।

उदाहरणद्वयस्य गूढं प्रयोजनमुद्घाटयति—एतच्चैकत्रेत्यादि । भ्रमिमरतिमित्यादावेकवक्तृगतत्वेन व्यङ्ग्यं वाच्यसिद्ध्यङ्गं, गच्छामीत्यादौ तु भिन्नवक्तृगतत्वेन ।

## मधुमती

अत्रेति । विषमेव—जलमेव विषम् । एवमेतद्रूपणेन जलदाः एव भुजगाः इति रूपकसमासः । उपमितसमासे जलप्राधान्येन तत्र हालाहलानन्वयप्रसङ्गात् । न वा सम्बन्धार्थाभिधायकत्वम् । वियोगिन्युद्देश्यकभ्रम्यादिविषावस्थाष्टकविधानस्य प्रकृतत्वात्, तस्य च रूपणं, विना असम्भवात् इति दिक् ।

स्थिरत्वं तेन निरुद्योगत्वं च व्यञ्जयता अच्युतपदेन वृथावस्थानरूपवाच्यस्य सिद्धिरित्यर्थः ।

## विस्तारिका

अपराङ्गताप्रकरणेन तद्भ्रमनिरासायाह—वाच्यसिद्ध्यङ्गं यथेति ।

भ्रमिर्मुखविकारादि भ्रमणमिव दर्शनफलं कश्चनान्तरो धर्मः । अरतिर्विषयवैराग्यम् । प्रलयो बहिरिन्द्रियचेष्टाविरहः । मूर्च्छा मनसो बहिरिन्द्रियासम्बन्धः । तमोऽन्धकारदर्शनम् ।

ननु जलदभुजगयोः साम्याप्रसिद्ध्या कथं रूपणमित्यत आह—अत्र हालाहलमित्यादि । जल इव लोकादिसिद्धसाधर्म्येण जलदभुजगयो रूपणमुपपन्नमित्याह—सिद्धिकृदिति । ननु गरलस्य रूढ्या भूरिप्रयोगाहितसंस्कारपाटवेन सत्यपि वृष्टिप्रकरणे तदपहाय नियतार्थ इव प्रागेव गरलोपस्थितावभिधाया नियन्त्रणाभावाद् व्यञ्जनाया अप्रसङ्गादिति चेत्, उच्यते—प्रसिद्ध्या गरलोपस्थितौ तत्रारोपितभुजगजन्यत्वबाधेन प्रकरणोज्वलितयाऽभिधया व्यञ्जनया च जनस्य पुनर्गरलोपस्थितिरिरिति जलाभिन्ने गरले जलदाभिन्नभुजगजन्यत्वावगमः, अभिधाया विरतत्वात् । व्यञ्जनयैव पुनर्गरलप्रत्यायनमिति न काचिदनुपपत्तिः ।

ननु जलगरलयोर्जलद्भुजगयोश्च न कथमुपमेति चेन्न, भ्रम्याद्यष्टविधकार्यस्य गरलादेवोपपत्तेः न तु तत्सदृशात् ।

अत्र मिश्राः—प्रकरणेन विषपदस्य गरलवाचकत्वे नियन्त्रिते भुजगत्वारोपो जलदभुजगयोः साम्याप्रसिद्ध्याऽनुपपद्यमानः प्रकरणमपहत्य गरलार्थोऽभिधामुज्जीवयति । ततश्चवृत्त्या गरलार्थेऽभिहिते प्रकृताप्रकृतयोरभेदारोपे रूपकनिर्वाह इत्याह—अत्रेति । हालाहलं हालाहलत्व मित्यर्थः । जले हालाहलत्वमारोप्यते । तस्य स्वतन्त्रोपस्थितये व्यञ्जनोपगम इत्याहुः तन्न; प्रकरणादपि प्रसिद्धेरेव बलवत्त्वात्, अन्यथा निहतार्थविलोपप्रसङ्गात् । प्रकरणबलात् प्रसिद्धार्थस्य प्रागुपस्थितौ दोषस्यानवकाशात् । किञ्च, प्रकरणस्य बलवत्त्वे पूर्ववत् परतोऽप्यभिधया गरलानुपस्थितिप्रसङ्गात् । अपि चावृत्त्या द्वितीयार्थ प्रत्यभिधायकत्वे शाब्दीव्यञ्जनाविलोपप्रसङ्गात् । सर्वत्रैवं युक्तिप्रसङ्गात् । अपरञ्चाश्लीलार्थान्तरस्थले तात्पर्यविषयस्य द्वितीयार्थस्य प्रतीत्यप्रसङ्गेन दोषाप्रसङ्गात् । तात्पर्यग्राहकाभावेन विरतस्य पदस्यावृत्त्यभावात् । तत्र व्यञ्जनैवेति चेत्, अत्रापि तत्प्रसरे बाधकविरहात् ।

लक्ष्यान्तरमाह—गच्छामीत्यादि । अच्युत तन्नामक अपरित्यक्तधैर्य च । किं दर्शनेन, अपि तु सम्भोगेन सम्भवतीति । अन्यथा सम्भावनमावश्यकम्, तत् किमात्मानं वञ्चयाव इत्याद्यर्था व्यङ्ग्याः, ते चामन्त्रणेत्याद्यर्थस्योपपादकाः, अन्यथा आमन्त्रणभङ्गिस्वरूपाज्ञाने इत्यर्थानिश्चयः स्यादित्याह—अत्रेति ।

उदाहरणद्वयभेदकमाह—एतच्चेति। एतद् वाच्यसिद्ध्यङ्गमेकत्र भ्रमिमित्यादावेकेन कविनैव वक्त्रा वक्तृव्यङ्ग्यवाच्ययोरङ्गाङ्गिभावापादनेन, अन्यत्र गच्छमीत्यादौ कविनिबद्धवक्तृव्यङ्ग्यस्य कविना स्वोक्तेरङ्गतापादनेनेति हेतोरनयोलक्ष्ययोर्भेदे इति योजना।

यदत्र मिश्रैरुक्तम्—"व्यङ्ग्ययोः शब्दार्थशक्तिमूलत्वेनाप्युदाहरणे भेदोऽवगन्तव्यः" इति, तन्न चारु; विषयपदवदच्युतपदस्यापि नानार्थत्वेनोभयत्र शब्दशक्तेरेव मूलत्वेन भेदकत्वाभावात्।

## सारबोधिनी

भ्रमिमिति। भ्रमिश्चेतसोऽनवस्थानम्। अरतिर्विषयेष्वनभिलाषः। प्रलयो बहिरिन्द्रियचेष्टाविरहः। मूर्च्छा मनसो बहिरिन्द्रियासंबन्धः। तमोऽन्धकारदर्शनम्। विषं जलं हलाहलश्च। अत्र हालाहलमित्यादि। तथा च जलगरलोद्गारित्वरूपसाधर्म्येण जलदभुजगयोः रूपणमुपपन्नमिति भावः।

ननु गरलस्य न व्यङ्ग्यता। सत्यपि वृष्टिप्रकरणे प्रसिद्धिवशादभिधया विषपदेन द्रागेव गरलोपस्थितेः। यतः प्रकरणात् प्रसिद्धिरेव बलवती, अन्यथा निहतार्थविलोपप्रसङ्गात्। प्रकरणबलादप्रसिद्धस्य प्रागुपस्थितौ तद्दोषस्यानवकाशादभिधया व्यञ्जनया च जलस्य पुनर्गरलस्योपस्थितिरिति जलाभिन्ने गरले जलदभिन्नभुजगे जन्यत्वावगमः अभिधाया विरतत्वात् व्यञ्जनयैव गरलप्रत्यायनञ्च। न च पुनरभिधयैव गरलप्रत्यायनमस्तु किं व्यञ्जनयेति वाच्यम्। तथा सत्यावृत्तिकल्पनापतेः। अस्मन्मते तु तेनैवभिधेयद्वारा व्यञ्जनसिद्धिरित्युक्तम्। अन्यथैवमावृत्तिकल्पने गत शाब्दीव्यञ्जनयेत्यलं बहुना। न च जलगरलयोजलदभुजगयाश्च न कथमुपमेति वाच्यम्। भ्रम्याद्यष्टविधकार्यस्य गरलादेवोपपत्तेः, न तु तत्सदृशादिति।

लक्ष्यान्तरमाह गच्छामीति। अच्युतः तन्नामकः, अपरिच्युतधैर्यश्च। किं दर्शनेन? अपि तु संभोगेन। संभावयतीत्यन्यथा संभावनमावश्यकम्। तत् किमित्यात्मानं वञ्चायाव इत्यर्था व्यङ्ग्याः।ते चामन्त्रणमाद्यर्थस्योपपादकाः। अन्यथा आमन्त्रणभङ्गिस्वरूपाज्ञानेन इत्यर्थाद्येनान्वयः स्यादित्याह एतच्चेति। एतद्वाच्यसिद्ध्यङ्गम्।

## काव्यप्रदीपः

वाच्यसिध्यङ्गं द्विधा—एकवक्तृकपदवाच्याङ्गमन्यवक्तृकपदवाच्याङ्गं च।

**'भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छा तमः शरीरसादम्।**
**मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम्॥**

अत्र हालाहलरूपो विषशब्दार्थो व्यङ्ग्यः। जलेऽभिधानियमनात्। स च जलदभुजगेति रूपणस्य वाच्यस्य सिद्धिं करोति। अन्यथोपमासंदेहसंभवात्।

यथा वा मम—

**'तादृग्भूतरसप्रसादकतकक्षोदाम्बुधारायिता**
**जीयासुः कविरत्न खान भवतस्तास्ता वचोभङ्ग्यः।**

**अर्थान्विग्रहिणः पुरातनतरान्सद्यो नवान्कुर्वती**
**याभिः कल्पमहौषधीभिरगदंकारायते भारती॥'**

अत्र रसप्रसाद इत्यत्र जलप्रसादरूपोऽर्थो व्यङ्ग्यः । स च वाच्यायाः कतकक्षोदाम्बुधारोपमाया अङ्गम् ।

अन्यवक्तृकशब्दवाच्यस्य सिद्ध्यङ्गं यथा—

**'गच्छाम्यच्युत दर्शनेन भवतः किं तृप्तिरुत्पद्यते**
**किं त्वेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा।**

**इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-**
**माश्लिष्यन्पुलकोत्काराञ्चितवपुर्गोपीं हरिः पातु वः ॥'**

अत्राच्युतेस्यनेन सोल्लुण्ठेन त्वं मद्विषये च्यवस इति व्यर्थमेवावस्थानमिति । यद्वाच्युतो धैर्याद-स्खलितस्त्वमतो व्यर्थमवस्थानमिति । दर्शनेनेत्यादिना संभोगेनैव तृप्तिरिति । किं त्वेवमित्यादिना द्वयोरकीर्तिर्जातैव तद्वृथै वात्मानं वञ्चयाव इति खेदश्च व्यज्यते । तच्च 'इत्यामन्त्रण-भङ्गिसूचितवृथावस्थानखेदालसां' इत्येतद्वाच्यस्य सिद्धिकृत् तद्व्यक्तिं विनैतद्विशेषणपदार्थस्य शरीरालाभात् ।

## काव्यप्रकाशखण्डनम्

वाच्यसिद्ध्यङ्गं यथा—

**गच्छाम्यच्युत ! दर्शनेन भवतः किं प्रीतिरुत्पद्यते**
**किं तवेवं विजनस्थयोर्हतजनः संभावयत्यन्यथा।**

**इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसा-**
**माश्लिष्यन् पुलकोत्कराञ्चिततनुर्गोपीं हरिः पातु वः ॥**

अच्युततन्नामकं अपरित्यक्तधैर्यं च। किं दर्शनेन अपि तु संभोगेन संभावयेति। अन्यथासंभावनमावश्यकं तत् किमित्यात्मानं वञ्चयाव इत्यर्था व्यङ्ग्याः । ते चामन्त्रणाद्यर्थस्योपपादकाः । अन्यथा आम [प० १९.२] न्त्रणभङ्गिस्वरूपाज्ञानेन इत्यर्थानन्वयः स्यात्, इत्याह—अच्युतादि व्यङ्ग्यं आमन्त्रणेत्यादि वाच्यस्याङ्गमिति ।

## आदर्शः

(३) वाच्यसिद्ध्यङ्गमाह—वाच्यसिद्धीति । आपाततः प्रतीतस्य वाच्यार्थस्य प्रतिसन्धीयमानानुपपत्तिनि-रासकं व्यङ्ग्यं वाच्यसिद्ध्यङ्गम । भ्रमिमिति । अपकारकत्वेन श्यामत्वेन च जलद एव भुजगः, तज्जन्यं प्राकरणिकं जलमत्र विषम्, 'विषमप्सु च' इत्यमरकोषात् । तच्च जलं वियोगिनीनां भ्रम्याद्यष्टकं करोतीत्यर्थः वृष्टिजलस्य वियोगोद्दीपकत्वात् । प्रलयं नष्टचेष्टताम् । तमः चक्षुषि तिमिरम् । अत्रेति, अनेकार्थस्य विषशब्दस्य प्रकरणेन जले वाचकत्वे नियमनात् हालाहलं व्यङ्ग्यमेव, तच्च आपाततः प्रतीयमानस्यापि जलदे भुजगरूपणस्य वाच्यस्य प्रतिसन्धीयमानानुपपत्तिनिरासकृत् । तथाहि प्राकरणिकतया विषशब्दवाच्यजले भुजगजन्यत्वबाधेन भुजगरूप-णस्य वाच्यस्य प्रतिसन्धीयमानानुपपत्तिः, जले हालाहलरूपणेन व्यङ्ग्येन तु तदनुपपत्तिनिरसनात् तत्सिद्धिः हाला-हलस्य भुजगजन्यत्वेनानुपपत्त्यभावात् । न च 'विद्वन्मानसहंसे'त्यत्र यथा मनसि मानसरोवररूपणं राज्ञि

हंसरूपणसिद्धिकृत्वेन परम्परितरूपकं तद्वदत्रापि जले हालाहलरूपणस्य भुजगरूपणसिद्धिकारित्वेन परम्परितरूपकत्वं स्यादिति वाच्यं तत्रोपायभूतरूपकस्यापि प्राकरणिकत्वेन वाच्यत्वम्, अत्र तु अप्राकरणिकत्वाद् व्यङ्ग्यत्वमिति भेदात्।

उदाहरणान्तरप्रदर्शनबीजं स्वयमेव प्रदर्शयिष्यन्नाह—यथा वेति। गच्छामीति। इत्यामन्त्रणवाक्यस्य पूर्वार्द्धरूपस्य भङ्ग्या व्यङ्ग्यार्थेन सूचितो यो वृथाऽवस्थानखेदः तेन अलसां गोपीमाश्लिष्यन् अत एव पुलकोत्कराञ्चिततनुः हरिः वः पातु। पूर्वार्द्धस्य वाच्यार्थस्तु हे अच्युतनामक अहं गच्छामि, भवतो दर्शनेन किं तृप्तिरुत्पद्यते? नैव; अपि तु स्वगार्हस्थ्योचितचेष्टयैव, प्रत्युत विजनस्थयोरावयोः अन्यथैव हतजनो दुर्जनः सम्भावयतीत्येवंरूपः। अत्र च यावद् व्यङ्ग्यार्थो न प्रतिसन्धीयते तावत् इत्यामन्त्रणेत्यादिवाक्यार्थः प्रतीयमानोऽपि प्रतिसन्धात् अनुपपद्यमानतयैव भासते, व्यङ्ग्यार्थरूपा भङ्गिस्तु प्रतीता तदनुपपत्तिनिरासकृत्। स च व्यङ्ग्यार्थो यथा—हे अच्युत मद्विधनायिकादर्शनेऽपि धैर्यच्युतिरहित, भवतो दर्शनेन किं तृप्तिरुत्पद्यते? नैव, अपि तु उपभोगेनैव। उपभोगे सति तु दुर्जनानामन्यथा सम्भावनाऽपि न दुःखाय, विदग्धजनस्य सम्भावना तु सुखायेत्येवंरूपः। उदाहरणान्तरप्रदर्शनबीजमाह—एतच्चेति। 'एकत्र' भ्रमिमरतिमित्यत्र, तत्र हि वाच्यव्यङ्ग्ययोरेकः कविर्वक्ता, 'तद्गतत्वेन' तत्सम्बन्धित्वेन, 'अपरत्र' गच्छामीत्यत्र, तत्र हि वाच्यार्थस्य वक्ता कविः व्यङ्ग्यार्थस्य तु वक्त्री गोपीति वाच्यसिद्ध्यङ्गे वाच्यसाधकत्वेन परार्थतया वाच्यादनतिशयो बोध्यः।

**सुधासागरः**

वाच्यसिद्ध्यङ्गं द्विधा—एकवक्तृपदवाच्याङ्गमन्यवक्तृकपदवाच्याङ्गं च। तत्राद्यमुदाहरति—भ्रमिमेति।

जलद एव भुजगः सर्पस्तस्माज्जातं विषं पानीयमेव विषं गरलं कर्तृ प्रसह्य बलात्कारेण वियोगिनीनां भ्रमिं चेतसोऽनवस्थामरतिं विषयेष्वरुचिमलसहृदयतामुदासीनतां प्रलयं बहिरिन्द्रियचेष्टाविरहं मूर्च्छां बहिरिन्द्रियाऽसम्बन्धं तमोऽन्धकारदर्शनं शरीरसादं देहकार्श्यं मरणं विनाशं च कुरुते इति वाक्यार्थः।

अत्र हालाहलमित्यादि। भुजगरूपस्य प्रधानीभूतभुजगरूपस्येत्यर्थः। प्राधान्यं च रूपण एव। उपमायां पूर्वपदप्राधान्याद् वाच्यस्य जलदरूपता च जलगरलोद्गरित्वरूपसाधर्म्येण जलदभुजगयोः रूपणमनुपपन्नमिति भावः। अत एव प्रदीपकारैर्व्याख्यातम्—अत्र हालाहलरूपो विषशब्दार्थो व्यङ्ग्यः, जलेऽभिधानियमात्। स च जलदभुजगेति रूपणस्य वाच्यस्य सिद्धिंकरोति अन्यथोपमासन्देहसम्भवादिति।

ननु गरलस्य न व्यङ्ग्यता, सत्यपि वृष्टिप्रकरणे प्रसिद्धिवशादभिधया विषपदेन द्रागेव गरलोपस्थितेः, यतः प्रकरणात् प्रसिद्धिरेव बलवती, अन्यथा निहतार्थविलोपप्रसङ्गात्। प्रकरणबलादप्रसिद्धस्य प्रागुपस्थितौ तद्दोषस्यानवकाशादिति चेत्, उच्यते। प्रसिद्धा गरलोपस्थितिरिति जलाभिन्ने गरले जलदाभिन्नभुजगजत्वावगमः, सर्वथा गरलप्रत्यायनन्तु व्यञ्जनयैव, अभिधाया विरतत्वात्। न च पुनरभिधयैव गरलप्रत्यायनमस्तु किं व्यञ्जनयेति वाच्यम्, तथा सत्यावृत्तिकल्पनापत्तेः। अस्मन्मते तु नैवम्, शब्देनाभिधेयप्रत्ययद्वारा व्यञ्जनसिद्धेः। अन्यथैवमावृत्तिकल्पने गतं शाब्दीव्यञ्जनया, न च दर्शनान्तराभिमानिनामिष्टमेवैतदिति वाच्यम्, व्यञ्जनातिरिक्तवृत्तेर्बाधितार्थबोधनासाम-

र्थ्यात्, व्यञ्जनायास्तु बाधितार्थबोधकतयैव धर्मिग्राहकमानसिद्धत्वादित्यलं बहुना । न च जलगरलयोर्जलदभुजगयोश्च न कथमुपमेति वाच्यम्, भ्रम्याद्यष्टविधकार्यस्य गरलादेवोपपत्तेर्न तु तत्सदृशादिति ।

अन्यवक्तृकशब्दे वाच्यसिद्ध्यङ्गमुदाहरति—'गच्छाम्ये-'ति ।

शार्दूलविक्रीडितं छन्दः । वाच्यार्थः स्पष्टः ।

अत्राच्युतेत्यनेन धैर्यादस्खलितस्त्वमतो व्यर्थमवस्थानमिति । दर्शनेनेत्यादिना सम्भोगेनैव तृप्तिरिति । किन्त्वेवमित्यादिना द्वयोरकीर्त्तिर्जातैव तद्वृथैवात्मानं वञ्चयाव इति खेदश्च व्यज्यते । तच्च इत्यामन्त्रणभङ्गिसूचितवृथावस्थानखेदालसामित्येतद्वाच्यस्य सिद्धिं करोति तद्व्यक्तिं विना एतद्विशेषणपदार्थस्य शरीरालाभात् ।

व्याख्यातञ्च श्रीवत्सलाञ्छनभट्टाचार्य्यैः—अच्युत तन्नामक अपरिच्युतधैर्य च । किं दर्शनेनाऽपि तु सम्भोगेन । सम्भावयतीति, अन्यथा सम्भावनमावश्यकं तत्किमित्यात्मानं वञ्चयाव इत्यर्था व्यङ्ग्याः, ते चामन्त्रणाद्यर्थस्योपपादका इति । तदेतत्सर्वमभिप्रेत्य श्रीवाग्देवतावतार आह—अत्राच्युतेत्यादि । उदाहरणद्वयभेदक माह—एतच्चेत्यादि ।

---

(४) अस्फुटं यथा—

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम्॥ १२८॥

अत्रादृष्टो यथा न भवसि वियोगभयं च यथा नोत्पद्यते तथा कुर्या इति क्लिष्टम्।

---

### सङ्केत

तथा कुर्याः इति। एवं रूपं यत् व्यङ्ग्यं तस्य स्फुटत्वेन न प्रतीतिः। ततश्च न तथा चमत्करोतीति क्लिष्टम्।

### बालचित्तानुरञ्जनी

वाच्यसिद्ध्यङ्गमुदाहृत्य तदुत्तरमुदाहरति अस्फुटं यथेति। काचित् प्रियं प्रत्याह। त्वयि अदृष्टे दर्शनोत्कण्ठा, दृष्टे सति परित्यज्य गमिष्यसीति दर्शनविच्छेदभीरुता। अतः अदृष्टेन भवता कृत्वा मया सुखं न लभ्यते। दृष्टेन कृत्वापि सुखं न लभ्यते। अत्र किं व्यङ्ग्यमस्फुटमित्याकाङ्क्षायामाह अत्रेति। तथा कुर्या इति व्यङ्ग्यमस्फुटत्वेन प्रतीयत इति न तथा चमत्कारकारीति क्लिष्टम्। युक्तं शब्दार्थशक्त्या प्रकाशमानं व्यङ्ग्यमितरदस्फुटमिति विवेकः।

### काव्यादर्शः

अस्फुटमिति। द्विविधं हि व्यङ्ग्यर्थं स्फुटं चास्फुटं च। तत्र यदेव स्फुटं शब्दार्थशक्त्या प्रकाशमानं तदेव ध्वनेर्मार्गः। इतरत्तु गुणीभूतम्। अतिस्फुटत्वेन च प्रकाशमानमगूढमुक्तम्।

### विवेकः

अदृष्ट इत्यादि, अत्र वक्तृभिप्रायरूपस्यास्य व्यङ्ग्यस्य वाच्येन सह क्षीरजलवल्लोलीभावो न तु स्फुटतया पृथक्प्राधान्यमतोऽस्फुटत्वमित्याह—अत्र व्यङ्ग्यं क्लिष्टमिति।

### दीपिका

म्लिष्टं व्युत्पन्नैरपि झटित्यसंवेद्यम्, अत एव प्रतीतिमान्यथर्यान्नात्यन्तचारुतावहमित्यर्थः। वक्त्रभिप्रायरूपस्य व्यङ्ग्यस्य वाच्येन सह क्षीरजलवत् क्रोडीभावः, न तु स्फुटतया पृथक्प्राधान्यम्। अतोऽस्फुटमिति वदन् सान्धिविग्रहिकः स्वभवनोत्सवाय तदेव विक्रीतवान्। पृथक्प्राधान्याभावे सन्दिग्धप्राधान्यं वाच्याङ्गत्वं वा स्यात्, न

तु भिदाऽन्तरम् । न चैवमत्रानुभूयते, किन्तु वाच्यप्रतीतितो विलम्बेन पर्य्यालोचनया व्यङ्ग्यप्रतीतिरिति यथोक्तमेव श्रेयः ।

### दर्पणः

अदृष्ट इति । अत्रार्थप्रतीत्यनन्तरं विपर्यालोचनैव प्रतीतिविषयत्वात् । व्यङ्ग्यं क्लिष्टं सहृदयानामप्यगोचरम् । संदेह इति । वाच्यव्यङ्ग्ययोर्द्वयोरपि प्रधानप्रत्यासत्तिविशेषात् ।

### साहित्यचूडामणिः

अदृष्ट इति । नायकस्य सौभाग्यम् अस्थैर्य च प्रकटयन्त्याः कस्याश्चिदुक्तिः । म्लिष्टमस्पष्टम् । यदाह—

**यत्र प्रतीयमानोऽर्थः प्रम्लिष्टत्वेन भासते ।**
**वाच्यस्याङ्गतया वापि नास्यासौ गोचरो ध्वनेः ॥ ध्व. २.३१ ॥**

**सर्वेष्वेव प्रभेदेषु स्फुटत्वेनावभासनम् ।**
**यद्व्यङ्ग्यस्याङ्गिभूतस्य तत्पूर्णं ध्वनिलक्षणम् ॥ ध्व. २.३३ ॥ इति ।**

नह्यत्र कविसंरम्भः शुद्धं व्यञ्जनमलम्ब्य विजृम्भते । किं तर्हि, नादृष्टेन न दृष्टेनेत्यादिवाच्यापेक्षया मसृणध्वन्यर्थानुकूलामभिधामुद्दिश्य, यत्र पर्यायोक्तस्यौचित्यम् ।

### सम्प्रदायप्रकाशिनी

अथास्फुटप्रस्तावः—अदृष्टं दर्शनेति । अत्र ह्युत्कण्ठोदयान्नादृष्टेन सुखं, विच्छेदभयसम्भवान्न दृष्टेन च त्वया सुखमित्युभयथापि दुःखहेतुरसीति स्फुटं प्रतीयते ।

विवक्षितोऽर्थः पुनरस्फुट एवेति दर्शयति—अत्रादृष्टो यथेत्यादि । म्लिष्टं कष्टमस्फुटमित्यर्थः ।

### मधुमती

इति क्लिष्टमिति । व्युत्पन्नमपि सहृदयैः झटित्यसंवेद्यमिति अस्य वाच्यपर्यवसायित्वमेवेत्यर्थः । 'म्लिष्ट'मिति पाठे 'अथ म्लिष्टमविस्पष्टम्' इत्यमरः स्मर्तव्यः । तदिह प्रकृतपद्येन दर्शनादर्शनपर्यवसन्नमेव । अदृष्टो यथा न भवसि इत्यनेन अदर्शनम्, वियोगभयं च नोत्पद्यते इत्यनेन वियोगं च प्रतिक्षिपता दर्शनादर्शनयोः प्रतिपादनात् । उक्तौ परं भेदः इति ध्येयम् । अत एव अत्र पर्यायोक्तालङ्कारोऽपि । अत एव वाच्यपर्यवसायित्वोक्त्यनन्तराभिधीयमानव्यङ्ग्यत्वलक्षणोपाधिभेदात् द्वयोः साङ्कर्येऽपि न दोषः ।

### विस्तारिका

अदृष्ट इत्यादि । अदृष्टदृष्टयोर्भवदर्थ एव विशेष्यः । भवतेति हेतौ तृतीया । क्लिष्टः, व्युत्पन्नैरपि झटित्यसंवेद्यः । क्लिष्टमिति पाठेऽपि स एवार्थः ।

उत्कण्ठाहेतुदर्शनेन प्रतियोगित्वेन भयहेतुविच्छेदप्रतियोगित्वेन च सम्बोध्यस्य प्रेमास्पदत्वं वाक्यार्थः, तदपेक्षया चोक्तव्यङ्ग्यं न चारु। तेन च सामान्यलक्षणसमन्वयः। चारुत्वाचारुत्वयोस्तु झटिति संवेदनासंवेदने सहृदयस्यैव बीजे इति तन्मूलको भेदः।

**सारबोधिनी**

अदृष्ट इति। अदृष्टयोर्भवदर्थ एव विशेष्यः। भवतेति हेतौ तृतीया। क्लिष्टं व्युत्पन्नैरपि झटित्यसंवेद्यम्।

**काव्यप्रदीपः**

अस्फुटं यथा—

**'अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता।**
**नादृष्टेन न दृष्टेन भवता लभ्यते सुखम्॥'**

अत्रादृष्टो यथा न भवति वियोगदुःखं च यथा नोत्पद्यते तथा कुर्या इति व्यङ्ग्यं सहृदयस्यापि न स्फुटमवभासते।

**काव्यप्रकाशखण्डनम्**

अस्फुटं यथा—

**अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता।**
**नादृष्टेन न दृष्टेन भवता लभ्यते सुखम्॥**

अत्रादृष्टो यथा न भवसि वियोगभयं च नोपपद्यते तथा कुर्याः—इति व्यङ्ग्यं झटिति सहृदयैरपि न प्रतीयते। नवीनास्तु अयं भेदः स्वबुद्धिमात्रकल्पित एव। इदं व्यङ्ग्यं व्यङ्ग्यान्तरवत् सहृदयैर्विलम्बेन प्रतीयते इत्यस्य शपथैरेव प्रत्यायितुं शक्यत्वात्।

**आदर्शः**

(४) अस्फुटमिति विदग्धैरपि क्लेशगम्यत्वं तत्त्वम्। अदृष्ट इति। अत्र भवता सुखमेव न लभ्यते इत्येव व्यङ्ग्यमक्लेशगम्यम्, दर्शितं तु विवक्षितं व्यङ्ग्यं विदग्धैरपि क्लेशगम्यमेव। क्लिष्टं शिलष्टमिति पुस्तकभेदेन पाठविकल्पः, क्लेशगम्यमित्येव तु सर्वस्यार्थः। 'चित्रकाव्यस्यास्फुटाख्यगुणीभूतव्यङ्ग्यस्य च अस्फुटव्यङ्ग्यत्वाविशेषेऽपि चित्रे स्फुटालङ्कारवत्त्वम्, अस्फुटे तु गुणीभूतव्यङ्ग्ये न तथेति भेदः। न च तर्हि चित्रं कथं गुणीभूतरूपादितोऽधर्म प्रागुक्तं सङ्गच्छते इति वाच्यम्, अत्रास्फुटस्यापि व्यङ्ग्यस्य चमत्काराधिक्यम्, चित्रे तु स्फुटालङ्कारवशादेव व्यङ्ग्यस्य चमत्कारतिरोधानादधमत्वमित्यभिप्रायात् क्लेशगम्यत्वादेवात्र वाच्यादनतिशयो बोध्यः।

**सुधासागरः**

अस्फुटमुदाहरति—'अदृष्ट' इति। वाच्योऽर्थः स्पष्टः।

अत्रादृष्टो यथेत्याद्युक्तं व्यङ्ग्यं क्लिष्टम्, सहृदयैरपि झटित्यसंवेद्यमित्यर्थः।

(५) सन्दिग्धप्राधान्यं यथा—

**हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।**
**उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥ १२९ ॥**

अत्र परिचुम्बितुमैच्छदिति किं प्रतीयमानम् किं वा विलोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः ।

---

### सङ्केतः

उमेति । बिम्बफलं अधरयतो बिम्बफलाधरौ, तादृशौ ओष्ठौ यत्र मुखे तत् तथा । यद्वा—त्रयाणां लोचनानां मुखे अधरे ओष्ठे चेति स्थानत्रये व्यापारणं सचमत्कारम् । अत एव विलोचनानीति बहुवचनोक्तिः युक्तिमेति । यदि वा—अधरश्चासौ ओष्ठश्च स तथा । बिम्बफलाकारः अधरोष्ठः यत्र तत् तथा । सर्वैः नेत्रैः मुखावलोकने मुखस्य सौन्दर्यातिशयः प्रतीयते । सन्देह इति । प्रतीयमानवाच्ययोः द्वयोरपि चमत्कारकारित्वात् एकस्यापि निर्धारणं कर्तुं न पार्यते इति ।

### बालचित्तानुरञ्जनी

क्रमप्राप्तं सन्दिग्धप्राधान्यमुदाहरति सन्दिग्धेति । चन्द्रोदयारम्भे अम्बुराशिरिव किञ्चित् परिवृत्तधैर्यो हरस्तु किञ्चित् फलमधरयतः बिम्बफलाधरौ ओष्ठौ यस्य, तस्मिन् मुखे विलोचनानि व्यापारयामास । ओष्ठद्वयं मुखं चेति स्थानत्रये व्यापारणार्थं विलोचनानीति बहुवचनम् । अत एवैतत्सचमत्कारम् । अत्र संदिग्धप्राधान्यं कथमित्यत आह अत्रेति । चुम्बितुमैच्छदिति प्रतीयमानं प्रधानं किं वा विलोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः । उभयोश्चमत्कारकारित्वादित्यर्थः ।

### काव्यादर्शः

संदेह इति । प्रतीयमानवाच्ययोर्द्वयोरप्यतिचमत्कारकारित्वादाधिक्यम् । तत एकतरस्य प्राधान्यं निर्धारयितुं न शक्यत इति संदिग्धम् ।

### विवेकः

हरिस्त्वित्यादि—अत्र वाच्यव्यङ्ग्ययोरेकतरचारुत्वानध्यवसायात् सन्देहसङ्करवत् सन्दिग्धप्राधान्यम् ।

### दीपिका

सन्देह इति । अत्र हि विलोचनव्यापारेण दर्शनचुम्बनाभिलाषौ तुल्यमिव प्रतीयमानौ प्रधानप्रत्यासत्या-विशेषेण द्वावपि सुन्दरतरौ नान्योन्यं विशेषयतः । पृथक्विश्रामाभावाच्च प्राधान्यं न तुल्यम् किन्तु संशयतिमिति भावकानामपरोक्ष एवायमर्थः ।

### साहित्यचूडामणिः

[सन्दिग्धेति] सन्दिग्धप्राधान्यं तुल्यप्राधान्यं चेति-द्वे । तत्राद्यं यथेत्यर्थः ।

हरस्त्विति । समुद्रस्य संक्षोभश्चन्द्रोदये कल्पान्ते चाविर्भवति । तत्र पूर्वौचित्येन परिवृत्तं धैर्यं यस्या सन्देह इति । व्यापारयामास विलोचनानीत्यत्र बिम्बफलाधरोष्ठमुमामुखमुद्दिश्याभिधीयमानत्वादर्थशक्तिमूलं परिचुम्बितुमैच्छदिति किं प्रतीयमानं प्रधानम्, उत लौकिकपुरुषवैलक्षण्येन विलोचनानां त्रयाणामपि यद्व्यापारणं वाच्यभूतं तदेव प्रधानमिति संशयः । एतदेव प्रमाणं वाच्यस्य व्यङ्ग्येन सह प्राधान्यसन्देहे यत् 'कोपं प्रभो संहरे संहरे' त्यादिक्रमेण येनैव भगवानिक्षुधन्वानं धक्ष्यति तेनैव नेत्रेण पार्वतीमुखावलोकनमहोत्सवं सम्भावयामासेति ।

### सम्प्रदायप्रकाशिनी

अथ सन्दिग्धप्राधान्यं—हरस्त्विति । अत्र बिम्बफलाधरत्वादिवाच्यमहिम्ना किं विलोचनव्यापारेण चुम्ब-नेच्छा व्यज्यते, आहोस्विद् विलोचनव्यापारलक्षणो वाच्य एव रत्यनुभाव उपनिबद्ध इति साधकबाधकाभावात् सन्देहः । अतो व्यङ्ग्यं सन्दिग्धप्राधान्यम् ।

### मधुमती

अत्रेति । बिम्बफलाधरोष्ठे इति पदं परिचुम्बने च प्राधान्येन अव्यञ्जकम् । परमेश्वरीरूपनिरूपणेच्छया च ध्यानस्तिमिताक्षितया उन्मीलनं च वाच्यम् ।

### विस्तारिका

हरस्त्वित्यादि । अत्रेति । प्रतीयमानमधरसौन्दर्यावगतलौल्यत्वं गम्यम् प्रधानं चमत्कारप्रयोजकम् ।न च चुम्बनेच्छायाः सम्भोगसामग्र्या दर्शनाख्यसंयोगापेक्षया हीनबलत्वेन न प्राधान्यसन्देह इति वाच्यम्, अन्तरङ्गसाम-ग्रीत्वेन तस्या अपि बलवत्त्वात् । चुम्बनापेक्षया दर्शनस्यासन्निकृष्टत्वेन बहिरङ्गत्वात् ।

### सारबोधिनी

हरस्त्विति । विलोचनानीति बहुवचनेनोत्कण्ठातिशयो व्यज्यते । तेन रागातिशयपूर्वकदर्शनस्य संभो-गान्तरङ्गस्य सामग्र्या चुम्बनेच्छयापि प्राधान्यम् । प्रधानं चमत्कारप्रयोजकम् ।

### काव्यप्रदीपः

संदिग्धप्राधान्यं यथा—

'हरस्तु किंचित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥'

अत्र चुम्बितुमैच्छदिति व्यङ्ग्यम् । युगपल्लोचनत्रयव्यापारणं वाच्यम् । तयोश्च प्राधान्ये साधकबाधकमानाभावेन संदेहः । वाच्यस्याप्यलौकिकत्वेन चमत्कारकारित्वादुत्कण्ठातिशयव्यञ्जकत्वाच्च ।

### काव्यप्रकाशखण्डनम्

सन्दिग्धप्राधान्यं यथा–

हरस्तु किञ्चित् परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि ॥

अत्र परिचुम्बितुमैच्छदिति व्यङ्ग्यम् ?, किं वा विलोचनव्यापारणं वाच्यं प्रधानमिति सन्देहः ।

### आदर्शः

(५) सन्दिग्धेति । प्राधान्यमत्र रसादिव्यञ्जकत्वेन । तथाच प्रतीतस्य रसादेर्व्यञ्जकं किं वाच्यं व्यङ्ग्यं वेति औत्तरकालिकसन्देहविषयत्वं तत्त्वम् । हरस्त्विति । कुमारसम्भवे आकालिके वसन्ते जाते सर्वेषामेव कामभावोद्गमे हरस्यापि किञ्चित् तथात्ववर्णनमिदम् । चन्द्रोदयस्य आरम्भे उत्पत्तिदशायाम् । अत्रेति, महेशशृङ्गारव्यञ्जकत्वात् प्रधानम् । न च द्वयमेव तद्व्यञ्जकत्वात् प्रधानमित्यतस्तुल्यप्राधान्यमेव अस्त्विति वाच्यम्, धैर्यपरिवृत्तेः किञ्चित्वेन चुम्बनेच्छापर्यन्तायास्तस्या निश्चेतुमशक्यत्वात्, दर्शनादेव विरतिसम्भवात् । तथाच व्यङ्ग्यसंशयाधीन एव तत्प्राधान्यसंशय इति बोध्यम् । अत्र वाच्यव्यङ्ग्ययोर्द्वयोरपि प्राधान्यस्य संशयितत्वाद् वाच्यादनतिशयः ।

### सुधासागरः

संन्दिग्धप्राधान्यमुदाहरति—'हरस्त्व'-ति ।

स्पष्टम् । उपजातिश्छन्दः 'अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ताः' इति लक्षणात् । अनन्तरोदीरितमिन्द्रवज्रोपेन्द्रवज्रालक्षणम् । अत्राधरमित्यादि । अधरं परिचुम्बतुमैच्छदिति व्यङ्ग्यं युगपल्लोचनत्रयव्यापरणं वाच्यम्, तयोश्च प्राधान्ये साधकबाधकमानाभावेन सन्देहः, वाच्यस्याऽप्यलौकिकत्वेन चमत्कारकारित्वात्, उत्कण्ठातिशयव्यञ्जकत्वाच्चेति भावः ।

---

(६) तुल्यप्राधान्यं यथा—

ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते॥ १३०॥

अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसां क्षणात्क्षयं करिष्यतीति व्यङ्ग्यस्य वाच्यस्य च समं प्राधान्यम्।

---

### सङ्केतः

ब्राह्मणेति। 'द्विजावज्ञात्यागे भवतां भूतिः, अहं च मित्रम्' इति एकोपक्रमे कार्यद्वयं सिध्यतीति महाचमत्कारकारीत्यर्थः। इयं च रावणपुरुषं प्रति भार्गवोक्तिः। वाच्यस्य दौर्मनस्यरूपस्य।

### बालचित्तानुरञ्जनी

तुल्यप्राधान्यमुदाहरति तुल्येति। जामदग्न्यो रावणस्य प्रधानपुरुषं प्रत्याह। ब्राह्मणावज्ञातिक्रमो भवद्भिश्च क्रियते तर्हि सा भवतां भूतय एव। तथा जामग्न्योऽहं मित्रम्। अन्यथा जामदग्न्योऽयं दुर्मनायते। व्यङ्ग्यकथनपूर्वकं प्राधान्यमाह अत्रेति। वाच्यस्य दौर्मनस्यलक्षणस्य रक्षःक्षयलक्षणस्य व्यङ्ग्यस्य च समकाल प्रतीत्या तुल्यं प्राधान्यमित्यर्थः।

### काव्यादर्शः

तुल्यप्राधान्ये यथा 'ब्राह्मणे' ति। जामदग्न्यो रावणप्रधानपुरुषं प्रत्याह—'द्विजावज्ञात्यागश्चेत् क्रियते भवद्भिस्तदा भवतां भूतिरेवाहं च मित्रम्'। वाच्यस्य चेति, दौर्मनस्यलक्षणस्य।

### विवेकः

ब्राह्मणेत्यादि—इदं हि रावणं प्रति परशुराम दूतवाक्यम्। अत्र साम वाच्यं, दण्डश्च व्यङ्ग्यः, अनयोश्चाप्रस्तुतप्रशंसायामिव समं प्राधान्यं, द्वयोरपि परस्परनैरपेक्ष्येण चमत्कारस्पदत्वात्।

### दीपिका

रावणं प्रति भार्गवदूतवाक्यम्—ब्राह्मणेति भवता सर्वेषामेव रक्षसाम्। जामदग्न्यो महान् ब्राह्मणः। मित्रं जन्मप्रभृति निखिलरहस्यवेदी। क्षत्राणामिति। जामदग्न्यपदेन जमदग्निनिमित्तक्षयस्य किञ्चिद्विषयीकृतत्वात्। समं प्राधान्यमिति। अत्र हि साम्ना दण्डेन वा रावणो वैरं त्याज्यः तयोश्च परस्परनिरपेक्षयोरेव वैरमोचने पर्याप्तिरिति पृथग् पृथग् विश्रामः।

## दर्पणः

ब्राह्मणेत्यादि। रावणं प्रति परशुरामस्य वाक्यमिदम्। भवतां रक्षसां मित्रं जन्मप्रभृति अखिलरहस्यवेदी। अत्र वाच्यव्यङ्ग्यो सामदण्डयोस्त्वल्पतयैव। वैरिमोचनपर्यन्ते त्वप्रस्तुतप्रशंसावत् परस्परानपेक्षया चमत्कारास्पदत्वात् द्वयोरपि समप्राधान्यम्। पूर्ववत् सन्देहालङ्कारवत्। वाच्यस्य निषेधस्य सहभावे समकालमेव झटित्यर्थप्रतिभासात्। अत एवात्र विद्यमानानेव मुख्यार्थबाधात् रससंबन्धानपश्यतां केषाञ्चित् लक्षणावृत्त्यङ्गीकारः।

## साहित्यचूडामणिः

अथ समप्राधान्यमुदाहरति—ब्राह्मणेति। पौलस्त्यं प्रति भार्गवस्यायं सन्देशः।

सममिति। व्याख्यातरूपस्य व्यङ्ग्यस्य वाच्यस्य च प्राधान्यं तुलाधृतवदवतिष्ठते, चमत्कारकारितायामविशेषात्। ब्राह्मणानां परिभवस्य प्रस्तुतस्य यस्त्यागः परिवर्जनं स भवतां रक्षसामेव संपत्तये। अन्यथेति ब्राह्मणातिक्रमस्य कर्तव्यतापक्षे युष्माकं मित्रं भवन्नयं जनो दुर्मनायते इति यद् वाच्यवैचित्र्यं तद् व्यङ्ग्येन सह समशीर्षिकामारोहति। व्यङ्ग्यापेक्षिणः कवेरविचित्रेणः कवेरविचित्रेण केवलं व्यञ्जनप्रवीणेन वाच्येन भवितव्यम्, तदपराधाधीनोऽयं गुणीभाव इत्युपनिषत्। प्राधान्यस्य सन्देहसादृश्ययोः सहृदया एव प्रमाणं व्युत्थितैरन्यथापि वक्तुं शक्यत्वात्।

## सम्प्रदायप्रकाशिनी

तुल्यप्राधान्यं दर्शयति—ब्राह्मणेति। अत्र रावणचरं प्रति भार्गवोक्तावुत्तरार्धे यद् रक्षःक्षयसूचनलक्षणं व्यङ्ग्यं, यश्च प्रथमार्धवाक्यार्थरूपो ब्राह्मणानुसरणं श्रेयस इत्येवंरूपो वाच्योऽर्थः, द्वयोरप्यनयोर्हि प्राधान्यं तुलया वर्तते।

## मधुमती

तदत्र—व्यञ्जनसहकारिणः अन्यसान्निध्यादेः वाच्यव्यङ्ग्योभयसाधारण्येन चमत्कारकारितयां सन्देहः। चत्कारित्वमेव च प्राधान्यमिव। परस्परं क्षत्रिययोरिव वाच्येन साकं व्यङ्ग्यस्य विग्रहः इति, उभयोः चमत्कारित्वाविशेषात् समप्राधान्यमित्यर्थः।

## विस्तारिका

ब्राह्मणेत्यादि। अतिक्रमोऽवमाननम्। भवतामिति बहुवचनं सकलगोष्ठीपरिग्राहकम्। जामदग्न्यो जमदग्निपुत्रः, तदवमन्तृक्षत्रकुलनाशकृत्। तथा ब्राह्मणः। अन्यथा अवमाननेन दुर्मनायते, अवमाननकृतदौर्मनस्येनावमन्तुः क्षत्रिदस्येव रक्षसोऽपि कुलक्षयः करिष्यत इति दण्डो व्यङ्ग्यः, 'इत्युपदेशो मित्रत्वाभिधानं च प्रियाभिधानं साम वाच्यम्, उभयमप्यनर्थनिवारकत्वेन तुल्यबलमित्याह—जामदग्न्यः सर्वेषामिति। वाच्यस्य सामरूपस्य।

## सारबोधिनी

ब्राह्मणेति। अत्र भूत्युपदेशमित्राभिधानं सामं वाच्यम्। उक्तरूपश्च दण्डो व्यङ्ग्यः। तथा चोभयोरपि अनर्थनिबन्धकत्वेन तुल्यता।

## काव्यप्रदीपः

तुल्यप्राधान्यं यथा—

**'ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।**

**जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते॥'**

अत्र जामदग्न्यः क्षत्राणामिव रक्षसामपि क्षयं करिष्यतीति व्यङ्ग्यमेव वाच्यमपि प्रधानमिव। दुर्मनायत इति गम्भीरोक्त्या चमत्कारित्वात्, विग्रहवत्संधेरपि विवक्षितत्वाच्च।

## काव्यप्रकाशखण्डनम्

तुल्यप्राधान्यं यथा—

**ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।**
**जामदग्न्यस्तथा मित्रमन्यथा दुर्मनायते॥**

अत्र जामदग्न्यः सर्वेषां क्षत्रियाणामिव रक्षसां क्षयं करिष्यतीति व्यङ्ग्यस्य दण्डस्य, वाच्यस्य च सामरूपस्य समं प्राधान्यम्। तथा हि—भूत्युपदेशमित्रत्वाभिधानं सामवाच्यम्, उक्तरूपश्च व्यङ्ग्यो दण्डः। उभयोरप्यनर्थनिवारकत्वे तुल्यता।

## आदर्शः

(६) तुल्यप्राधान्यमिति। अत्रापि रसादिव्यञ्जकतयैव प्राधान्यम्। ब्राह्मणेत्यादि। दिग्विजये परशुरामं जिगीषुं रावणं प्रति तत्रासजनकं मन्त्रिवाक्यमिदम्। भवतामेव भूतये, न तु स्वार्थं ब्रवीमीत्यर्थः। तथेति ब्राह्मण इत्यर्थः। मित्रश्चेति चार्थोऽत्र बोध्यः। अन्यथेति अतिक्रम इत्यर्थः। दुर्मनायते इति भविष्यत् सामीप्ये वर्त्तमाना। अत्रेति, वाच्यस्य मित्रब्राह्मणदौर्मनस्यस्य। समं प्राधान्यमिति द्वयोरपि असंशयितत्वेन त्रासरूपव्यभिचारिभावव्यञ्जने द्वयोः साम्यात्, शापपापोत्पादकत्वेन हि वाच्यात् त्रासः, दर्शितव्यङ्ग्यात्तु साक्षात् त्रासः, स च व्यञ्जनया सामाजिक बोध्यः। अत्र प्राधान्यसाम्यादेव वाच्यादनतिशयः।

## सुधासागरः

तुल्यप्राधान्यमुदाहरति—'ब्राह्मणे'-ति।

परशुरामदूतस्य रावणं प्रति वचनम्। अत्र जामदग्न्य इत्यादि दुर्मनायते इति गम्भीरोक्त्या वाच्यस्याऽपि चमत्कारित्वात्, विग्रहवत् सन्धेरपि विवक्षितत्वाच्चेति भावः। अत एव वाच्यं साम, व्यङ्ग्यस्तु विग्रह इत्युभयोश्चमत्कारकारित्वाविशेषात् समप्राधान्यमित्यर्थ इति मधुमतीकारा व्याचख्युः।

(७) काक्वाक्षिप्तं यथा—

**मथ्नामि कौरवशतं समरे न कोपाद्**
**दुःशासनस्य रुधिरं न पिबाम्युरस्तः।**
**सञ्चूर्णयामि गदया न सुयोधनोरू**
**सन्धिं करोतु भवतां नृपतिः पणेन॥ १३१ ॥**

अत्र मथ्नाम्येवेत्यादिव्यङ्ग्यं वाच्यनिषेधसहभावेन स्थितम्।

---

### सङ्केतः

व्यङ्ग्यमिति। काक्वाक्षिप्तमिति सम्बन्धः। वाच्येति। वाच्यश्चासौ निषेधश्च, तत्सहभावेन। अयं भावः—पूर्वं निषेधस्य प्रतीतिः, ततः अप्राधान्येन व्यङ्ग्यस्य इति नास्ति। किन्तु द्वयस्यापि सममेव प्रतीतिः। न चात्र विपरीतलक्षणा। यतः उच्चारणकाल एव न कोपात् इति दीप्ततारगद्‌गदसाकाङ्क्षकाकुबलात् निषेधस्य निषेध्यमानतयैव युधिष्ठिरेष्टसन्धेः अक्षमारूपत्वाभिप्रायेण प्रतीतिः इति, मुख्यार्थबाधाद्यभावात्।

### बालचित्तानुरञ्जनी

क्रमप्राप्तं काक्वाक्षिप्तमुदाहरति काक्वाक्षिप्तमिति। भीमवचनम्। समरे कोपात् कौरवाणां शतं न मथ्नामि ? दुःशासनस्य उरस्तः रुधिरं न पिबामि ? सुयोधनस्योरू गदया न सञ्चूर्णयामि ? नृपतिः युधिष्ठिरः पणेन भवतां संधिं करोतु। अत्र किं व्यङ्ग्यम्, तस्य वा कथं गुणभावस्तदाह अत्रेति। वाच्याश्चासौ निषेधश्च, तेन भेदे न वाच्यप्रतीत्यनन्तरं प्राधान्यम्। अत्र तु शक्तिरेव स्वासिद्धेराक्षिप्तकाकुसहाया सती अर्थविशेषप्रतिपत्तिहेतुर्न तु काकुमात्रमिति उभयोर्वाच्यव्यङ्ग्ययोर्युगपत् प्रतीतत्वाद् गुणीभूतव्यङ्ग्यत्वमित्यर्थः। न चात्र विपरीतलक्षणास्तीति वाच्यम्। उच्चारणकाल एव कोपात् गद्‌गदस्वरादिसाकाङ्क्षकाकुबलात् निषेधस्य निषिध्यमानतयैव युधिष्ठिराभिमतसंधिमार्गाक्षमारूपत्वाभिप्रायेण प्रतीतिरिति मुख्यार्थबाधाद्यभवात्।

### काव्यादर्शः

काक्वाक्षिप्तं यथा 'मथ्नामि' इति। वाच्यनिषेधेति। वाच्यश्चासौ निषेधश्च तत्सहभावेन। शब्दशक्तिरेव हि स्वाभिधेयाक्षिप्तकाकुसहाया सत्यर्थविशेषप्रतिपत्तिहेतुर्न काकुमात्रमिति गुणीभूतव्यङ्ग्यत्वम्। न चात्र विपरीतलक्षणा, यत उच्चारणकाल एव न कोपादिति दीप्ततारगद्गदसाकाङ्क्षकाकुबलाद् निषेध्यमानतयैव युधिष्ठिराभिमतसंधिमार्गाक्षमारूपस्त्वाभिप्रायेण प्रतीतिरिति मुख्यार्थ बाधाद्यभावात्।

## विवेकः

मथ्नामीत्यादि—भवतामिति स्वपक्षीयान् प्रति । पणेन देयभागेन । अत्र न कोपादित्युच्चारणकाल एव दीप्तता, न गद्गदसाकाङ्क्षकाकुबलाक्षिप्त्वान्निषेधस्य निषिध्यमानतयैव युधिष्ठिराभिमतसन्धिमार्गक्षमारूपत्वाभिप्रायेण प्रतीतिरित्याक्षेपोक्तिरेव ध्वनिसम्भावनापरिहारिणी । 'आक्षेपालङ्कारोऽत्र एवात्र लक्षणेति य आहुस्ते न सम्यक् परामृष्टवन्तः, उक्तक्रमेण मुख्यार्थबाधादिसामग्रीविरहेण लक्षणाया अनवकाशात् ।'

## दीपिका

भवतां सन्धिं करोतु, मम पुनरयं सन्धिः न किञ्चिद्विरुणद्धीत्यर्थः । वाच्यस्य निषेधस्य सहभावेन वाच्यप्रतीतिसमकालमेव दीप्तता । व्यङ्ग्यसमा काकुवलेन प्रतीतिरिति वाच्यमाभातमात्रम् व्यङ्ग्यमेव हठादाकृष्यमाणं वाक्यायमानम् । अत एवात्र लक्षणप्रवेशः प्राचीनैर्नाङ्गीकृतः, मुख्यार्थबोधाद्यनुसरण ( ?)—विघ्नाभावादिति वृद्धाः । सन्नपि मुख्यार्थबाधो झटित्यर्थपर्य्यवसानान्नानुसन्धीयत इत्यधुनातनाः ।

## साहित्यचूडामणिः

काक्वेति । शब्दशक्तिरेव स्वाभिधेयसामर्थ्याक्षिप्तकाकुसहाया सती विशेषार्थप्रतिपत्तिहेतुः, न काकुमात्रं, विषयान्तरे स्वेच्छाकृतकाकुमात्रेण तथाविधार्थप्रतीत्यभावात् । स चार्थो नित्यमर्थसामर्थ्यलभ्यो व्यङ्ग्योऽपि काकुविशेषसहायशब्दव्यापारोपारूढ इति गुणीभूत एव । उन्मीलितं चैतत् तृतीयोल्लासे । यदाह—

**अर्थान्तरगतिः काक्वा या चैषा परिदृश्यते ।**
**सा व्यङ्ग्यस्य गुणीभावे प्रकारमिममाश्रिता ।। ध्व. ३.३८ ।। इति ।**

मथ्नामीति । अत्र प्रतिनकारं काकुः । तथा च वाचकशक्त्यनुप्रविष्टया मथ्नाम्येवेति संरम्भाडम्बरबहुलं व्यङ्ग्यमुत्थाप्यते, न स्वतन्त्रया व्यञ्जनशक्त्या, यतो गुणीभावो विशेषः वाच्यातिक्रमणसामर्थ्याभावात् ।

वाच्येति । न मथ्नामीति वाच्यलक्षणो यो निषेधस्तेन सहभावः सहावस्थानं तदतिक्रमणासामर्थ्यं तेन रूपेण स्थित इति । प्रश्नमात्रेण काकुविश्रान्तौ न गुणीभावौचित्यमिति ग्रन्थकारस्याकूतम् । तथा च न्यदर्शि 'गुरुः खेदं खिन्ने मयि भजती'त्यत्र । एतेन काक्वाक्षिप्तस्य वाच्यसिद्ध्यङ्गत्वानुप्रवेशः किञ्चिद् वैलक्षण्यं च व्याख्यातम् ।

## सम्प्रदायप्रकाशिनी

काक्वाक्षिप्तव्यङ्ग्यमुदाहरति—मथ्नामि कौरवेत्यादि ।

वाच्यनिषेधसहभावेनेति काक्वाक्षिप्तता दर्शिता । निषेधकाकुर्हीयम् । काक्वैव वाच्यनिषेध आक्षिप्यते ।

## मधुमती

काक्वाक्षिप्तमिति । काकुव्यङ्ग्यत्वे सति वाच्यसिद्धिसम्बन्धित्वमित्यर्थः । अत्र—'गुरुः खेदं खिन्ने' इत्यादौ उत्तमकाव्ये पूर्वं प्रतीकम्, वाच्यसिद्ध्यङ्गे उत्तरं प्रतीकं च अतिव्याप्तमिति उभयोपादानम् । एवं च

'काकुव्यङ्ग्यत्वे सति वाच्यसिद्ध्यङ्गत्वम्' इति पितृचरणलेखनस्यापि अत्रैव तात्पर्यम्। तेन—'काकोरेव वाच्यसिद्ध्यङ्गत्वम्, न तु तद्व्यङ्ग्यस्य, तस्य वाच्यसिद्ध्यविषयत्वात्' इति दूषणं अलग्नकं वेदितव्यम्। तदङ्गत्वाभावेऽपि तत्सम्बन्धित्वात्। तच्च—वाच्यसिद्ध्यङ्गे जनकतया, अत्र तु विषयतया इति अन्यदेतत्। अत्रेति। मथनायोगव्यवच्छेदप्रतीत्या वाच्यस्य मथनाभावस्यापि प्रतीतेश्चेति निषेधो विधिर्वा यत् वाच्यं तन्निषिध्यैव काक्वा व्यञ्जनात्। एवं च वाच्यनिषेधशिरस्कैवात्र व्यङ्ग्यप्रतीतिरिति ध्येयम्। तेन—'न पुनस्तस्याधामस्यान्तिकम्' 'नाद्यापि कुरुषु' इत्यादौ नातिप्रसङ्गः। तदन्तिकागमन—कुरुविषयकखेदाभजनयोः व्यञ्जकीभूतवाच्ययोः व्यञ्जनातः अप्रतीतेः। किन्तु तद्विरुद्धयोः गमनभजनयोः ततः प्रत्ययात्। यदि च—'न पुनस्तस्याधमस्यान्तिकम्' इत्यत्रापि काकुः क्रियते, तदा मध्यमत्वमेव। एवं 'यदि मे वल्लभा दूती' इत्यादावपि, सत्यां काकौ मध्यमत्वमेव। एवं च गुणीभूतव्यङ्ग्ये वाक्यादिभ्योऽधिका काकुरपि व्यञ्जिकेति स्मर्तव्यम्।

## विस्तारिका

मथ्नामीत्यादि। प्रतिज्ञातकुरुकुलक्षयस्य भीमसेनस्योक्तिरियम्। 'उरस्तः उरसि। क्रोधातिशयेन क्रियाणां वर्तमानताऽभिधानाद् वर्तमानतोक्तिः। भवतां नृपतिः न तु प्रजानाम, प्रभुत्वविरहात्। न वा संधिममृष्यतो मम स सन्धिं करोतु। तेन मम नास्ति क्षतिः, न वोपचितिः। पणो निष्क्रयः। पणः संख्याविशेष एव।

अत्रेति। प्रतिज्ञातविरुद्धनिषेधाभिधायिषु न काकुर्निषेधान्तराक्षेपिका। अभावाभावश्चावधारणमेवेत्याह—मथ्नाम्येवेत्यादि। अवधारणस्य चमत्कारित्वे कथं गुणीभाव इत्यत आह—वाच्येत्यादि। सहभावेन समकालं प्रतीयमानत्वेन व्यङ्ग्यकृतचारुत्वस्य वाच्यानिर्वाह्यत्वग्रहान्न ध्वनित्वमित्यर्थः। अत एवाक्षिप्तपदम्। आक्षिप्तं झटिति प्रत्यायितम्। यत्र काकुतोऽपि बिलम्बेन प्रतीति, तत्र ध्वनित्वमेव यथोदाहृते 'गुरुः खेदं खिन्ने' इत्यत्र। अत एव काकुव्यङ्ग्यस्य पदार्थस्थानीयत्वेन बाधानवतारीद् न लक्षणा।

## सारबोधिनी

मथ्नामीत्यादि। सन्धिश्रवणकुपितस्य भीमसेनस्योक्तिरियम्। मथ्नामीति। न मथ्नामीति। तेन तत्कृतसंधाने नास्माकं संधिः। अत्रेति। प्रतिज्ञातस्य विरुद्धनिषेधाभिधायिषु नञ्सु काकुर्निषेधान्तराक्षेपिका अभावाभावश्चावधारणमेवेत्याह मथ्नाम्येवेत्यादि। नन्ववधारणस्य चमत्कारित्वे ध्वनित्वे संभवति कथं गुणीभाव इत्यत आह वाच्येति। सहभावेन समकालं प्रतीयमानत्वेन तेन व्यङ्ग्यकृतचारुत्वस्य वाच्यनिर्वाहकत्वाग्रहान्न ध्वनित्वम्, किन्तु गुणीभूतत्वमेवेति भावः। अत एव काकुव्यङ्ग्यस्य पदार्थस्थानीयत्वेनाक्षिप्तपदं झटिति प्रत्यायितमित्येतत्परम्। यत्र काकुतोऽपि विलम्बेन प्रतीतिस्तत्र ध्वनित्वमेव। यथोदाहृते "गुरुः खेदं खिन्न" इत्यत्र।

## काव्यप्रदीपः

काक्वाक्षिप्तं यथा—

**'मथ्नामि कौरवशतं समरे न कोपा-**
**दुःशासनस्य रुधिरं न पिबाम्युरस्तः।**

**संचूर्णयामि गदया न सुयोधनोरू**
**संधिं करोतु भवतां नृपतिः पणेन ॥'**

अत्र मथ्नामीति व्यङ्ग्यम्। तच्च वाच्यस्य निषेधस्य सहभावेनैव व्यवस्थितम्। तादृशकाकुं विना वाच्यस्य बाधितत्वेनाप्रादुर्भावात्। हठेनैव तदाक्षेपाद्वेत्युक्तं प्राक्।

## काव्यप्रकाशखण्डनम्

काक्वाक्षिप्तं यथा—

**मथ्नामि कौरवशतं समरे न कोपाद्**
**दुःशासनस्य रुधिरं न पिबाम्युरस्तः।**
**संचूर्णयामि गदया न सुयोधनोरुं**
**सन्धिं करोतु भवतां नृपतिः पणेन ॥**

सन्धिश्रवणकुपितस्य भीमसेनस्योक्तिरियम्। भवतामिति न ममापि। तेन तत्कृतसन्धाने नास्माकं सन्धिरिति प्रतिज्ञा विरुद्धनिषेधाभिधायिषु नञ्षु काकुर्निषेधान्तराक्षेपिका। अभावाभावश्चावधारणमेवेत्याह—मथ्नाम्येवेति व्यङ्ग्यं गुणीभूतं तदयुक्तम्। तथा हि—मथ्नाम्येवेति व्यङ्ग्यस्य भीमसेनगतक्रोधोत्कर्षकत्वेन रौद्ररसोपोद्वलनद्वारा वाच्यात् सातिशयचमत्कारित्वेन ध्वनित्वे [प. २०.१] संभवति कुतो गुणीभूतव्यङ्ग्यत्वम्।

## आदर्शः

(७) काक्वेति। आक्षित्वं सहसा बोधत्वम्। तथाच शाब्दबोधतः प्रागेव पदार्थविधया उपस्थितिः। मथ्नामीति। सहदेवं प्रति सन्धिकरणासहिष्णोर्भीमस्योक्तिरियम्। मथ्नामीत्यादौ सर्वत्र भविष्यत्सामीप्ये वर्त्तमाना, मथिष्यामीत्यादयोऽर्थाः। उरस्तः हृदयात्। सुयोधन इति दुर्योधनस्य अपरं नाम। भवतां नृपतिरित्यनेन स्वानभीष्टसन्धिकरणात् स्वनृपतित्वाभावसूचनम्। अत्र कृतकौरवशतबधादिप्रतिज्ञस्य भीमस्य न मथिष्यामीत्युक्तिर्बाधितार्था, अतोऽत्र शिरश्चालनसहकृता काकुः प्रतीयते, तया च 'न न मथिष्यामी'त्यादिरीत्या अपरनमर्थ आक्षिप्यते। तथाच नञर्थद्वयेन एवकारार्थः पर्यवस्यतीत्याह—अत्रेति। मथ्नाम्येवेत्यादिति, मथ्नाम्येवेत्यादिरेकदेश एकनञर्थ एव व्यङ्ग्यो बोध्यः, एकनञर्थस्य वाच्यत्वेन नञ्द्वयार्थात्मकस्य एवकारार्थस्य व्यङ्ग्यत्वाभावात्। अत्र 'व्यङ्ग्यस्यापि नञर्थस्य वाच्यनञर्थसहभावेनैव उपस्थित्या शाब्दबोधजननाद् वाच्यतुल्यत्वेन वाच्यादनतिशयो बोध्यः।

## सुधासागरः

काक्वाक्षिप्तमुदाहरति—'मथ्नामी'-ति।

सन्धिश्रवणकुपितस्य भीमसेनस्योक्तिरियम्। स्पष्टम्। सन्धिश्रवणकुपितस्य विरुद्धनिषेधाभिधायिवाक्येषु नञ्काकुर्निषेधान्तराक्षेपिका। अभावाभावश्चावधारणमेवेत्याह—मथ्नाम्येवेत्यादि।

नन्ववधारणस्य चमत्कारित्वे ध्वनित्वे सम्भवति कथं गुणीभाव इत्यत आह—वाच्येति। सहभावेन समकालं प्रतीयमानत्वेन। तेन व्यङ्ग्यकृतचारुत्वस्य वच्यानिर्वाह्यत्वग्रहान्न ध्वनित्वं किन्तु गुणीभूतव्यङ्ग्यत्वमेवेति भावः। अत एवाकाकुव्यङ्ग्यस्य पदार्थस्थानीयत्वेन सूत्रे आक्षिप्तपदं झटिति प्रत्यायितमित्येतत्परम्। यत्र काकुतोऽपि विलम्बेन प्रतीतिस्तत्र ध्वनित्वमेव। यथोदाहृतं 'गुरुः खेदं खिन्ने' इत्यत्रेति द्रष्टव्यम्, अत एव प्रदीपकारै र्व्याख्यातम्—अत्र मथ्नामीति व्यङ्ग्यम्। तच्च वाच्यनिषेधस्य सहभावेनैव व्यवस्थितम्, तादृशकाकुं विना वाच्यस्य बाधितत्वेनाप्रादुर्भावात् हठेनैव तदाक्षेपाद् वेत्युक्तं प्रागिति।

---

(८) असुन्दरं यथा—

वाणीरकुडंगुड्डीणसउणिकोलाहलं सुणंतीए।
घरकम्मवावडाए बहुए सीअन्ति अङ्गाइं॥ १३२॥

अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यात् सीदन्त्यङ्गानीति वाच्यं सचमत्कारम्।

---

**सङ्केतः**

वाणीरेति। गृहकर्मव्यापृतायाः अन्यकर्मरतायाः अपि वध्वाः सातिशयलज्जापरवशायाः अपि। अङ्गानि इति बहुवचनेन एकमपि न तादृशं अङ्गम्, यत् आत्मानं संवरीतुं शक्नोति। सीदन्ति—आस्तां गृहकर्म, स्वमपि नालं धर्तुम्। गृहकर्मयोगे च स्फुटं तथा अलक्ष्यमाणानीति। अस्मात् वाच्यादेव स्मरपारवश्यप्रतीतेः चमत्कारः। वाच्यं स्वात्मानं उन्मज्ज्य व्यङ्ग्यं निमज्जयतीत्यर्थः।

**सङ्केतः (रुय्यकः)**

वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥

वानीरो वेतसवृक्षः, कुञ्जं लतागहनम्। हर्षशोकादीनामिति—ते हि वाक्यार्थप्रतिपत्त्या क्रियन्ते, न च ज्ञापकस्य शब्दस्य कारकत्वं भवति।

**बालचित्तानुरञ्जनी**

असुन्दरमुदाहरति असुन्दरेति। वाणीरकुञ्जुडीणसउणिकोलाहलं वानीरा वेतसाः कुञ्जलताः, गहनवाणीरकुञ्जोडीनशकुनिकोलाहलं, सुणंतीए शृण्वन्त्याः, घरकम्मवडए गृहकर्मव्यापृतायाः, बहुए वध्वाः अंगाइ अङ्गानि, सीअन्ति सीदन्ति। अत्रापि अङ्गानीति बहुवचनेन एकमपि न तादृगङ्गं यदात्मानं सञ्चारयितुं शक्नोति। एवं शकुनिकोलाहलश्रवणमात्रेण अङ्गःसादोऽभूदिति वाच्यस्य स्मरणस्य प्रतीतिहेतुत्वेन चमत्कारकारित्वेनासुंदरत्वाद्व्यङ्ग्यमसुन्दरमित्यर्थः।

**काव्यादर्शः**

असुन्दरमपि व्यङ्ग्यं गुणीभूतमेव, यथा 'वाणार' इति। 'वानीरा' वेतसवृक्षाः। 'कुडङ्गं' लतागहनम्। वाच्यं सचमत्कारमिति। वाच्यस्यैव स्वात्मोन्मज्जनया निमज्जितव्यङ्ग्यजातस्य सुन्दरत्वेनावभासात्। तथा हि गृहकर्म व्यापृताया इत्यन्यपराया अपि वध्वा इति सातिशयलज्जापारतन्त्र्यबद्धाया अपि। अङ्गानीति। एकमपि न

तादृग् अङ्गं यद् गम्भीर्यावहित्थवशेन संवरीतुं पारितम्। सीदन्तीति। आस्तां गृहकर्मसंपादनं, स्वात्मानमपि धर्तुं न प्रभर्तुन्ति गृहकर्मयोगे च स्फुटं तथा अलक्ष्यमाणवनीति। अस्माद् वाच्यादेव स्मरपारवश्यप्रतीतेश्चमत्कार इत्यर्थः।

### विवेकः

(ध्व. आ. लो. ३/३९ वृ:) वानीरकुडङ्गोड्डीनशकुनिकोलाहलं शृण्वन्त्याः। गृहकर्म्मव्यापृताया अपि वध्वाः सीदन्त्यङ्गानि॥ वानीरो वेतसवृक्षः, कुडङ्गं लतागृहम्। तदिह सुन्दरत्वं सीदन्त्यङ्गानीत्यनेन पदेन। तदित्थमगूढताऽऽदिवशाद् गुणीभावे सति यस्माद्ध्वनिर्ध्वनिनैव ध्वंस्यते तत एवास्य वक्ष्यमाणलक्षणसमासोक्तिद्विधाऽऽक्षेपानुक्तनिमित्तविशेषोक्तिपर्यायोक्ताप्रस्तुतप्रशंसाऽऽदौ वस्तुमात्रस्य रूपकदीपकापह्नुतितुल्ययोगितासन्देहादावुपमाद्यलङ्कारस्य व्यङ्ग्यस्यापि वाच्यस्योपकारकतया गुणीभावादलङ्कारसंहतावन्तर्भावो भामहादिभिश्चिरन्तनालङ्कारकारैभ्युपगतोऽपि निर्भर्त्सित एवेति। एतच्चालङ्कारप्रस्तावे यथास्थानं निगदिष्यते। रसवदादौ तु रसादीनां गुणीभावाः प्रतिपादित एव।

### दीपिका

कुडङ्गो लतागृहम्। वावडा व्याकुला। अत्र वाच्या[द]नुभावभूतादौत्सुक्यावेगसंवलितानुरागेद्रेककृतमदनपरवशताप्रतीतिः। व्यङ्ग्यं तु तटस्थप्रायमेव। एतच्च स्वविषये वाच्यसिद्ध्यङ्गत्वादिसर्वापवादरूपं द्रष्टव्यम्, तेषु व्यङ्ग्यस्यापि चारुत्वसम्भवात्। अयञ्च गहनो मार्गः सहृदयैरविहितैर्भावनीय इति सर्वं सुस्थम्।

### दर्पणः

**वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।**
**गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥**

अत्रौत्सुक्यावेगसंवलितसत्त्वभावभूतं वाच्यमेव तन्मन्मथोन्मादं प्रत्याययति। दत्तसंकेत इत्यादि तु तटस्थप्रायमेवेति भावः। एतच्च वाच्यसिद्ध्यङ्गतादेरपवादभूतत्वाद्भिन्नम्। तेषु हि व्यङ्ग्यास्यापि चारुत्वं संभावितम्।

### साहित्यचूडामणिः

वाणीरेति।

**वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वत्याः।**
**गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥**

वाच्यं सचमत्कारं, तस्मान्न सौन्दर्यमस्य। यदाह—

**प्रकारोऽन्यो गुणीभूतव्यङ्ग्यः काव्यस्य दृश्यते।**
**यत्र व्यङ्ग्यान्वये वाच्ये चारुत्वं स्यात् प्रकर्षवत्॥ ध्व. ३.३८.॥ इति।**

इक्षुखण्डकल्पं हि काव्यं कल्पनीयम्। तत्र रसनिष्यन्दस्थानीयं व्यङ्ग्यम् ऋजीषप्रायं च वाच्यमिति वाच्यादपि व्यङ्ग्यस्य चमत्कारार्पणप्रावीण्येन भवितव्यम्। अत्र तु प्रत्युत व्यङ्ग्यादपि वाच्यस्य चारुत्वम्। तथाहि—शकुनिकोलाहलं शृण्वत्या इति हेतौ शता यस्मादस्या अङ्गानि सीदन्ति किंकर्तव्यतया विमुह्यन्ति यदेषा गृहकर्मणि व्याप्रियत इति वाच्यावस्थैवात्र सचेतसां चर्वणीया। ततश्च व्यङ्ग्यस्यासौन्दर्यं नाम वाच्यवर्त्तिनः प्राधान्यस्याधिक्यं तुल्यत्वसंशयविलक्षणम्। यद्यप्यत्र पर्यन्ते रसध्वनिरस्ति तथापि मध्यमकक्ष्यानिविष्टोऽसौ स्वातन्त्र्येण न रसोन्मुखी भवति, अपितु वाच्यमेवार्थमुपकर्तुं धावतीति सर्वमप्यनाकुलम्।

### सम्प्रदायप्रकाशिनी

अथासुन्दरं—वाणीरेति।

**वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।**
**गृहकर्मव्यापृताया वध्वाः सीदन्त्यत्यङ्गानि॥**

अत्रापि 'ग्रामतरुणमि'तिवद् व्यङ्ग्यस्यासुन्दरतेत्याह—अत्र दत्तसङ्केतः कश्चिदिति। त एते शुद्धा भेदाः। अनेन प्रायशः सप्रभेदस्य सर्वस्यैव ध्वनेर्गुणीभावो दर्शितः। तथा हि—अगूढप्रस्तावे लक्षणामूलावुभावर्थशक्तिमूलो वस्तुध्वनिश्चोपलक्षणत्वेन प्रदर्शितौ। अथापराङ्गव्यङ्ग्यप्रस्तावे रसादिको रसाद्यङ्गत्वेन, अनुरणनरूपं च वाच्याङ्गत्वेन सावान्तरवैचित्र्यप्रपञ्चमुदाहृतम्। तथा हि—रसो रसस्य, रसो भावस्य, भावो भावस्याङ्गत्वेनोदाहृतः। भावस्य रसाङ्गत्वं स्फुटमिति नोदाहृतम्। अथ भावस्य रसाभासभावाभासौ चेति रसवदाद्यलङ्कारत्वेन त एते दर्शितः। भावप्रशमादयोऽपि पृथगलङ्कारत्वेन। अथ वाच्याङ्गव्यङ्ग्यादिषु वस्तुमूलालङ्कारध्वनिव्यतिरिक्ताः सर्व एवानुरणनरूपाः प्रदर्शिता इति।

### मधुमती

अत्रेति। उक्तव्यङ्ग्यं विनाऽपि शकुनिकोलाहलश्रवणरूपोद्दीपनविभावस्य अङ्गसादरूपानुभावस्य तदाक्षिप्तानां आलम्बनविभावव्यभिचारिभावानां च संवलनादेव साक्षात् रसव्यञ्जनया चमत्कारोदयात्, व्यङ्ग्येन तु वाच्यद्वारा विलम्बेन रसव्यञ्जनात् वाच्यापेक्षया व्यङ्ग्यस्य निकर्षशालितेति भावः।

### विस्तारिका

**वानीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्या।**
**गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥**

शृण्वन्त्या इति वर्तमानोपदेशात् कार्यकारणपौर्वापयव्यत्यासः।

अत्रेति। वाच्योऽङ्गावसादः। स च 'विप्रलम्भानुभावो झटिति संपद्यमानस्तस्योत्कर्षः। व्यङ्ग्यस्तु सङ्केतभङ्गः, तन्मुखप्रेक्षित्वेन न स्वतस्तदुपकार इति चमत्काराप्रत्यासन्नत्वेन व्यङ्ग्यस्यासुन्दरता।

### सारबोधिनी

वाणीरेति।

**वानीरकुञ्जोड्डीनाशकुनिकोलाहलं शृण्वन्त्या।**
**गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥**

अत्रौत्सुक्यावेगसंवलितमनुभावभूतमङ्गावसादरूपं वाच्यमेव मन्मथोन्मादं प्रत्याययति। दत्तसङ्केत इत्यादिव्यङ्ग्यं तु तन्मुखप्रेक्षित्वादसुन्दरमिति।

### काव्यप्रदीपः

असुन्दरं यथा—

**'वाणीरकुडङ्गुड्डीणसउणिकोलाहलं सुणन्तीए।**
**घरकम्मवावडाए बहुए सीअन्ति अङ्गाइं॥'**

अत्र दत्तसंकेतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यम्। तस्माद्वाच्यं चमत्कारकारि। शब्दश्रवणसमकालमेव सर्वाङ्गवसादसंतन्यमानतारूपस्य तस्यातिसौन्दर्यादुत्कण्ठातिशयपर्यवसन्नत्वात्।

### काव्यप्रकाशखण्डनम्

असुन्दरं तद् यत्र व्यङ्ग्यं चमत्कारित्वे वाच्यमुखनिरीक्षकम्। यथा—

**ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरी सनाथकरम्।**
**पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया॥**

अत्र दत्तसङ्केता नागतेति व्यङ्ग्यापेक्षया वाच्यस्यैव चमत्कारित्वात्॥

**इति पादसाह-श्रीअकब्बरसूर्यसहस्रनामाध्यापक-श्रीशत्रुञ्जयतीर्थकरमोचनाद्यनेकसुकृतविधापक महोपाध्याय-श्रीभानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपादसाह-श्रीअकब्बरप्रदत्त-खुस्फहमापराभिधाना महोपाध्याय-श्रीसिद्धिचन्द्रगणिविरचिते काव्यप्रकाशखण्डने पञ्चम उल्लासः॥**

### आदर्शः

(८) असुन्दरमिति। रसादिबोधजनने वाच्यसापेक्षव्यङ्ग्यत्वं तत्त्वम्। अत एवास्य वाच्यमुखनिरीक्षकत्वेन वाच्यादनतिशयो बोध्यः। एतदुदाहरणं ग्रामतरुणमित्याद्येव दर्शितम्। सौलभ्यात्तु तत्तुल्यमन्यदाह—वाणीरेति।

**वाणीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।**
**गृहकर्मव्यापृताया बध्वाः सीदन्त्यङ्गानि॥ इति संस्कृतम्।**

अत्रेति। इति व्यङ्ग्यादित्यत्र इत्यादिव्यङ्ग्यादित्यर्थः। तथाच 'वधूश्च तत्र न गता' इत्येतत्पर्यन्ताद् व्यङ्ग्यादित्यर्थः। अयं भावः—बध्वा अगमनमात्रं न तदीयविप्रलम्भव्यञ्जकम् अगमनस्य तस्या अकार्यत्यागेन गृहकर्मसमापनानन्तरं जिगमिषयाऽपि या सम्भवात्, किन्तु शकुनिकोलाहलश्रवणेन सीददङ्ग्या वध्वा अगमनमेव तद्व्यञ्जकमिति वाच्याङ्गावसादसहकारेणैव रसव्यञ्जने वाच्यमुखनिरीक्षकत्वात् अस्वातन्त्र्येण वाच्यन्यूनचमत्कारीति। वाच्य उक्तहेतुकोऽङ्गावसादस्तु उक्तव्यङ्ग्यनिरपेक्ष एव रसव्यञ्जक इति सोऽधिकचमत्कारी, शकुनिकोलाहलस्योद्दीपकत्वेन तदधीनाङ्गावसादस्यैव व्यङ्ग्यनिरपेक्षस्य यथोक्तव्यङ्ग्यं विनाऽपि विप्रलम्भव्यञ्जकत्वात्।

**सुधासागरः**

असुन्दरमुदाहरति—'वाणी रे'ति।

**वानीरकुञ्जोड्डीनिशकुनिकोलाहलं शृण्वत्याः।**
**गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥**

इति संस्कृतम्। स्पष्टम्। अत्र दत्तसङ्केतः कश्चिल्लतागहनं प्रविष्ट इति व्यङ्ग्यं तस्माद् वाच्यं चमत्कारकारि: शब्दश्रवणसमकालमेव सर्वाङ्गावसादसन्तन्यमानतारूपस्य तस्यातिसौन्दर्यात्, उत्कण्ठातिशयपर्यवसन्नत्वात्। तदेतद् वृत्तिकृदाह—अत्र दत्तसङ्केत इत्यादि।

---

**(सू० ६७) एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत्। ४६ ॥**

**यथायोगमिति।**

**'व्यज्यन्ते वस्तुमात्रेण यदाऽलङ्कृतयस्तदा।**
**ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्।**

इति ध्वनिकारोक्तदिशा वस्तुमात्रेण यत्रालङ्कारो व्यज्यते न तत्र गुणीभूत-व्यङ्ग्यत्वम्।

---

**सङ्केतः**

एषां भेदाः इति। यावन्तो भेदाः शुद्धध्वनेः, तावन्तः गुणीभूतव्यङ्ग्यस्यापि भवन्तीत्यर्थः। ध्वन्यङ्गतेति। व्यञ्जकत्वेन व्यङ्ग्यत्वेन च द्विधा ध्वन्यङ्गता। तत्र इह प्रस्तावत् ध्वन्यङ्गता व्यङ्ग्यत्वेन ग्राह्या। ध्वनिरूपतेत्यर्थः। तदाश्रयादिति। यतः अलङ्कारेषु काव्यवृत्तिः विश्राम्यति, तेषां च गुणीभूततायां काव्यं वाक्यमात्रं भवेत्। न च वाक्ये वस्तुमात्रे काव्यव्यवहारः।

**बालचित्तानुरञ्जनी**

अगूढादीनामन्योन्ययोजने सङ्करसंसृष्टी च [इति] पूर्ववदेव द्रष्टव्यमित्याह एषामिति। एषामगूढादीनां भेदाः शुद्धध्वनिवत् द्रष्टव्याः। यावन्तः शुद्धध्वनिभेदाः तावन्तः सर्वेऽपि मध्यमकाव्यस्यापि किं सन्ति? नेत्याह यथायोगमिति। यथासंभवमित्यर्थः। यथायोगशब्दार्थं ध्वनिकारवदनसंवादपूर्वकमाह यथेति। यदा वस्तुमात्रेण केवलवस्तुना अलङ्कृतयः अलङ्काराः व्यज्यन्ते तदा तासामलङ्कृतीनां ध्रुवं निश्चयेन ध्वन्यङ्गता। ध्वनिः शब्दार्थौ [?] अङ्गतां व्यञ्जकत्वेन यासां तासां भावस्तत्ता। अत्र हेतुमाह काव्यवृत्तेस्तदाश्रयादिति। व्यङ्ग्यालङ्कारपरत्वात् अलङ्काराणां व्यङ्ग्यानां प्राधान्यात् तत्र काव्ये न गुणीभूतव्यङ्ग्यम्। यदि तत्र व्यङ्ग्योऽर्थो मुख्यो न भवेत् तदा वस्त्वेव मुख्यं स्यात्। न च वस्तुमात्रे काव्यशब्दप्रवृत्तिः। शब्दचित्रत्वेन जघन्यत्वात्।

**काव्यादर्शः**

एषां भेदा इति। शुद्धध्वनिभेदवद् गुणीभूतव्यङ्ग्येऽपि भेदा इत्यर्थः। किं तु वस्तुना यत्रालंकारो व्यज्यते, न तत्र गुणीभूतत्वम्, यतस्तथाविधव्यङ्ग्यालंकारपरत्वेनैव काव्यं प्रवृत्तम्, अन्यथा तु वाक्यमात्रमेव स्यात्। 'ध्वन्यङ्गता' इति। ध्वन्यङ्गता चोभाभ्यां प्रकाराभ्यां व्यञ्जकत्वेन व्यङ्ग्यत्वेन च तत्रेह प्रकरणाद् व्यङ्ग्यत्वेन ज्ञेया। ततो ध्वन्यङ्गताध्वनिभेदत्वमित्यर्थः। यतः काव्यस्य कविव्यापारस्यै वृत्तिस्तदाश्रयलंकारप्रवणालंकारस्य व्यङ्ग्यस्य प्राधान्याद् गुणीभूतव्यङ्ग्यता शङ्क्या।

## विवेकः

एवमिति (एषामिति) गुणीभूतव्यङ्ग्यस्य प्रकाराणाम् । पूर्ववदिति ध्वनिप्रकारवत् । एवं तावद्रूपता प्रसक्तेत्यत आह यथायोगमिति । अङ्गित्वेन व्यङ्ग्यतासङ्गोऽपि (सङ्गेऽपि) हि अलङ्काराणां द्वयी गतिः । कदाचिदङ्गभूतवाच्यालङ्काररहितेन केवलवस्तुमात्रेण व्यज्यते यथा—**लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन् स्मेरेऽधुना तव मुखे तरलायताक्षि। क्षोभं यदेति न मनागपि तेन मन्ये सुव्यक्तमेव जलराशिरयं पयोधिः ॥** इति । अत्र केवलवस्तुमात्रेण चन्द्रस्तन्वीवदनमिति रूपकाभिव्यक्तिः । कदाचिद् वाच्यालङ्कारेण यथा—**स वक्तुमखिलाञ्छक्तो हयग्रीवाश्रितान् गुणान्। योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः ॥** यो वियन्महीतलव्यापिनो महोदधेः कुम्भैः परिच्छेदं कर्तुं शक्त इत्यतिशयोक्तयाऽऽक्षिप्तः समुद्रस्य कुम्भ (कुम्भैः) मानासम्भवादभीष्टवर्णनप्रतिषेधरूपो हयग्रीवगुणबाहुल्यरूपव्यङ्ग्यविशेषाभिधित्सयाऽऽक्षेपः प्रतीयमानो गुणीभूत इति । अत्र वस्त्वपेक्षया सर्वत्रालङ्कारस्य चारुत्वात् प्राधान्यमिति (ध्व. आ. २/२८ वृ. द्र.) । आद्यस्य स्वरूपमाह—व्यज्यन्त इत्यादि । अतोऽत्र गुणीभावः सर्वथैव नास्तीत्याह ध्रुवमिति । तासामित्यलङ्कृतीनाम् । अत्रैव हेतुमाह काव्येति—काव्यस्य कपिव्यापारस्य वृत्तिः प्रवृत्तिस्तदाश्रयात्तथाविधव्यङ्ग्यालङ्कारप्रवणायत (प्रवणतया) । ध्वन्यङ्गतेति—अङ्गता च यद्यपि व्यङ्ग्यत्वेन व्यञ्जकत्वेन च सम्भवति तथापीह प्रकरण(णे) व्यङ्ग्येन मन्तव्या । तेन ध्वन्यङ्गता ध्वनिभेदत्वमित्यर्थः । ध्वनिकारोक्तदृशा ज्ञानेनेति ।

## दीपिका

एषामष्टानां गुणीभूतव्यङ्ग्यानाम् । लक्ष्यप्रसिद्धिपर्यालोचनया पूर्ववद् अर्थान्तरसंक्रमितवाच्यत्वादिना । वस्तुमात्रेणेति । अलङ्कारे तु व्यञ्जकेऽलङ्कृतानां द्वयी गतिः, प्राधान्यमप्राधान्यञ्च । आद्यं यथा मम—

**स्मेरं वक्त्रसरोरुहं मधुमदक्षीबालसे लोचने**
**लावण्यामृतपूर्णकुम्भसुभगं वक्षोजयोर्गुग्मकम्।**
**पर्य्याप्तं नवनीलनीरजदृशः स्वैरङ्गकैर्मण्डनं**
**कर्मव्यग्रसखीजनोपकरणैर्मङ्गः परं न स्थितेः ॥**

अत्र सुभगमित्युपमाव्यङ्ग्यस्यासम्भवसम्भावनरूपस्योत्प्रेक्षणस्य ।

द्वितीयं यथा ममैव—

**नैसर्गगुणविनीतं जनयति कपिञ्जलो वंशः।**
**आजन्मनो ह्यपूर्वे सूते रत्नाकरो रत्नम् ॥**

अत्र वाच्यालङ्कृतेर्व्यङ्ग्यस्फुटतरीपमिते ध्वन्यङ्गता काव्यस्य ध्वनिरूपतायामुपाधित्वम् ।

अत्र हेतुः—काव्यस्य वृत्तेः प्रवृत्तेस्तदाश्रयात् तदभिसन्धानपूर्वकत्वात् । न [तत्र] गुणीभूतव्यङ्ग्यत्वमिति वाच्याङ्गभावादिकं न कदापि प्रसज्यतीत्यर्थः । गुणीभात्रस्तत्र सर्वथैव नास्तीति वदन्तस्तु मूर्खप्राया एव, अगूढत्वेन क्वचन गुणीभावसम्भवात् । अत्र चालङ्कारध्वनिप्रकरणे लोचनकृतोक्तम्—

**ज्योत्स्नापूरप्रसरधवले सैकतेऽस्मिन् सरय्वा**
**वादद्यूतं सुचिरमभवत्सिद्धयूनोः कयोश्चित्।**
**एकः प्राह प्रथमनिहतं केशिनं कंसमन्यः**
**स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम्॥**

इत्युदाहरणं यदत्र केचित्पठन्ति, तन्न युक्तम्, भवतेत्यनेन राज्ञः कृष्णतारूपणस्य स्फुटीकृतत्वात्।

### दर्पणः

एषां समनन्तरोक्तगुणीभूतव्यङ्ग्यप्रकाराणां यथायोगं यथासंभवम्। पूर्ववत् ध्वनिप्रकारवत्। ध्वन्यङ्गेति। अङ्गता उपाधिता। तेनोपाधिना काव्यस्य ध्वनित्वमेव न तु गुणीभूतव्यङ्ग्यत्वमिति भावः। काव्यवृत्तेस्तदाश्रयात्। तदभिवादनपूर्वकं ता एताश्च प्राचीनानुसारेणोक्तम्।

**ज्योत्स्नापूरप्रसवधवले सैकतेऽस्मिन् सरय्वा**
**वादद्यूतं सुचिरमभवत् सिद्धयूनोः कयोश्चित्।**
**एकः प्राह प्रथमनिहतं केशिनं कंसमन्यः**
**स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम्॥**

इत्युदाहरणं ये केचिद् ध्वनो पठन्ति तदयुक्तम्। भवतेत्यनेन कृष्णतारूपणस्य स्फुटीकृतत्वादिति लोचनकारोक्तदिशाऽगूढाख्यगुणीभूतव्यङ्ग्यभेदस्य वाच्याङ्गतादर्शनात्। वाच्यालङ्कारस्य पुनर्गुणीभूतालङ्कारस्य व्यञ्जकत्वम्॰। यथा 'साहित्यपाथोधिसुधारसज्ञः कापिञ्जलः कश्चिदपीह लोके' इत्यादिषु वाच्यानां दृष्टान्तप्रतिवस्तूपमादीनां गुणीभूतोपमाव्यञ्जकता।

### साहित्यचूडामणिः

अथ ध्वनिवद् गुणीभूतव्यङ्ग्यस्यापि संसृष्टिसंकरौ योज्यावित्याह—एषामिति। चकारो भिन्नक्रमः। व्यज्यन्त इति। यदा वस्तुमात्रेणालङ्कृतय उपमादयो ध्वन्यन्ते तदा तासां निश्चितो ध्वनिकक्ष्याप्रवेशः, यतो वाच्यकक्ष्यायामपि प्रायेण काव्यवृत्तिरलङ्कृत्याश्रयेति कारिकार्थः। एतदुक्तं भवति—

**अलंकारान्तरस्यापि प्रतीतौ यत्र भासते।**
**तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः॥ ध्व. २.२७॥**

**अलङ्कारान्तरव्यङ्ग्यभावे ध्वन्यङ्गता भवेत्।**
**चारुत्वोत्कर्षतो व्यङ्ग्यप्राधान्यं यदि लक्ष्यते॥ ध्व. २.३०॥**

व्यङ्ग्यत्वेऽप्यलङ्काराणां प्राधान्यविवक्षायामेव सत्यां ध्वनावन्तःपातः, इतरथा गुणीभूतव्यङ्ग्यतैवेति ध्वनितद्वृत्तियुक्त्या वस्तुमात्रव्यङ्ग्यानामप्यलब्धप्राधान्यानामलङ्काराणां ध्वनित्वनिषेध इति कस्यचित् प्रतिभासेत, तन्निरासार्थोऽयं [व्यज्यन्ते वस्तुमात्रेणेति कारिकया] प्रतिप्रसवः।

## सम्प्रदायप्रकाशिनी

एषां संकरसंसृष्टी प्राग्वदेवेत्याह—एषां भेदा इति ।

ननु यथायोगमित्युच्यते, का योग्यतेति शङ्कित्वा योग्यतां ध्वनिकारसंवादं पुरस्कृत्य विवेचयति—व्यज्यन्ते वस्तुमात्रेणेत्यादिना । वस्तुमात्रेण शब्दशक्तिमूलतयार्थशक्तिमूलतया वा वस्तुमात्रेण व्यज्यमानानामलङ्कृतीनां ध्वन्यङ्गतामन्तरेण काव्यतैव न स्यादिति ध्वनिकारनिरूपितनीत्या तेषु भेदेषु गुणीभूतव्यङ्ग्यता न संभवतीति तदपोहनाय यथायोगमित्युक्तमिति यावत् ।

## मधुमती

ननु किमेतावन्त एव गुणीभूतव्यङ्ग्यभेदाः ? नेत्याह—एषामिति । पूर्ववदिति । अर्थान्तरसङ्क्रमितवाच्यत्वादिरूपाः भेदाः ध्वनिवत् अत्रापि द्रष्टव्याः । य एव ध्वनयः त एव तत्तदुपाधियोगात् गुणीभूतव्यङ्ग्याः । निरुक्तास्तु तत्प्रयोजकाः उपाधयः इति भावः ।

तत्किं यत्र वस्तुना अलङ्कारव्यञ्जनं तत्रापि गुणीभूतव्यङ्ग्यत्वम् ? तथा च विरोधः इत्यत आह—यथायोगमितीति । यथसम्भवमित्यर्थः । तेन यत्रैव उक्तोपाधियोगः तत्रैव गुणीभूतव्यङ्ग्यत्वम् । अत्र तु तदभावात् न तथात्वमित्यर्थः । अत्रैव ध्वनिकारसंमतिमाह—व्यज्यन्ते इति । काव्यवृत्तेरिति । तदलङ्कारमुखेनैव तत्काव्यस्य चमत्कारकारित्वात् ।

तददमर्थः—चित्रेण चित्रव्यञ्जने, चित्रेण अचित्रव्यञ्जने च ध्वनित्वं गुणीभूतव्यङ्ग्यत्वं च विवक्षाभेदात् । द्वयं हीह चमत्कारप्रयोजकम्—चित्रत्वम् व्यङ्ग्यत्व चेति । चित्रतायामपि प्रतीयमान एवार्थः मूलम् । एवं च—अलङ्कारेण वस्तुध्वनौ व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽपि, चित्रत्वविवक्षया उभयोः तुल्यप्राधान्यात् गुणीभूतव्यङ्ग्यत्वमपि । एवं वस्तुना वस्तुध्वनौ व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽपि उभयोरपि चित्रत्वविवक्षया तुल्यप्राधान्यात् गुणीभावोऽपि । तथा अलङ्कारेण अलङ्कारध्वनावपि व्यञ्जकस्य चित्रत्वात् व्यङ्ग्यस्यापि चित्रत्वात् तुल्यप्राधान्यविवक्षया ध्वनित्वं गुणीभूतत्वं च । प्रकृते वस्तुना अलङ्कारध्वनौ तु—व्यञ्जकस्य अचित्रत्वात् अव्यङ्ग्यत्वाच्च तुल्यप्राधान्यविवक्षा न सम्भवतीति ध्वनित्वमेव । तेन तैर्हीन एवायं प्रस्तारितः । अतः पञ्चचत्वारिंशदेव एतद्भेदाः इति द्रष्टव्यम् । यच्च पितृचरणैरुक्तम्—वस्तुमात्रेणेत्युपलक्षणम् । 'अलङ्कारेणे' त्यपि द्रष्टव्यमिति । तत् रूपकालङ्कारमभिप्रेत्य, तेन अन्यालङ्कारवत्, रूपकादिनैव चमत्काराधानात् । अत एव अयुक्तं गुणीभूतत्वमपि नेति दिक् ।

## विस्तारिका

शुद्धभेदानाह—एषामित्यादि । यथायोगं यथासम्भवम्, पूर्ववद् ध्वनिभेदवत्; अर्थान्तरसंक्रमितवाच्यात्वादिना । व्यज्यन्त इत्यादि । वस्तुमात्रेण वाच्यालङ्कारशून्येन । ध्वन्यङ्गता ध्वनिव्यवहारहेतुता । काव्यवृत्तेस्तदाश्रयात्-तदुद्देश्येनैव कविना काव्यनिर्वहणानत् तत्कृतचारुत्वेनैव शब्दार्थयोः काव्यत्वलाभादित्यर्थः । न तत्रेत्यादि । न गुणीभूतव्यङ्ग्यत्वम्, अपि तु ध्वनित्वमेव ।

अयमर्थः—अलङ्कारे व्यङ्ग्ये रसाद्यभावात् तत्परत्वेनैव काव्यत्वम्। स च व्यङ्ग्योऽलङ्कारः। सत्येव वाच्यालङ्कारे तदङ्गत्वेन गुणीभावात्। तद्भावे च स्वस्मिन्नेव विश्रामाद् ध्वनित्वमेवेति। तदुक्तम्—ध्रुवं ध्वन्यङ्गतेति। यथा—

**ज्योत्स्नापूरप्रसरधवले सैकतेऽस्मिन् सरय्वा**
**वादः पूर्वं सुचिरमभवत् सिद्धयूनोः कयोश्चित्।**
**एकः प्राह प्रथमनिहतं केशिनं कंसमन्यः**
**स त्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम्॥ इति।**

अत्र राजनि कृष्णतादात्म्यारोपो वस्तुमात्रव्यङ्ग्यो ध्वनिरेव। न च भवतेत्यनेन स्फुटीकरणादगूढतैवेति वाच्यम्, प्रकरणानुसन्धानेनैव भवत्पदान्नृपतिप्रतीतौ तादात्म्यस्य विलम्बितप्रतीतिकत्वेनागूढताविरहात्।

अलङ्कारव्यङ्ग्ये अलङ्कारे तु प्राधान्यमप्राधान्यञ्च। आद्यं यथा—"गाढकान्तदशनक्षत०"—इत्यादौ वाच्यविरोधालङ्कारव्यङ्ग्यायां तुल्ययोगितायाम्।

द्वितीयं यथा—

**नैसर्गगुणविनीतं जनयति कापिञ्जलो वंशः।**
**आजन्मनो ह्यपूर्वं सूते रत्नाकरो रत्नम्॥**

इत्यत्र प्रतिवस्तूपमाव्यङ्ग्यायामगूढायामुपमायाम्।

## सारबोधिनी

एषामिति। एषां समनन्तरमेवोक्तप्रकाराणाम्। यथायोगं यथासंभवम्। पूर्ववत् ध्वनिभेदवत् अर्थान्तरसङ्क्रमितवाच्यत्वादिना। यत्तु अष्टानामेवैषां गुणीभूतव्यङ्ग्यभेदानां परस्परयोगातिदेशकमिदमिति तन्न तथा सति वस्तुनाऽलङ्कारव्यक्तौ यथायोगमित्यनेन गुणीभूतत्वव्यवच्छेदानौचित्यात्प्रसङ्गाभावात्। तदेवाह व्यज्यन्ते वस्तुमात्रेणेति। वस्तुमात्रेण वाच्यालङ्कारशून्येन। तद्वत्त्वे तु विशेषो व्यज्यते। ध्वन्यङ्गता ध्वनिविशेषहेतुता। काव्यवृत्तेस्तदाश्रयात्, तदुद्देशेनैव कविना काव्यनिर्वाहात्। तत्कृतचारुत्वेनैव शब्दार्थयोः काव्यत्वलाभादित्यर्थः। न तत्रेति। न गुणीभूतव्यङ्ग्यत्वमपि तु ध्वनित्वमेव। तथा च तैर्भेदैर्न्यूनोऽत्रप्रकारः।

इदमत्राकूतम्। अलङ्काराः कदाचिदङ्गभूतवाच्यालङ्काररहितेन वस्तुमात्रेण व्यज्यन्ते कदाचिद्वाच्यालङ्कारसहितेन वस्तुना। तत्राद्ये वस्तुमात्रापेक्षयाऽलङ्कारस्याधिकं चारुत्वमिति तत्र सर्वत्र ध्वनित्वमेव। उत्तरत्रापि यत्र वाच्यालङ्कारापेक्षया व्यङ्ग्यालङ्कारस्याधिकं चारुत्वं तत्र गुणीभूतत्वम्। यथा—

**नैसर्गगुणविनीतं जनयति कापिञ्जलो वंशः।**
**आजन्मनो ह्यपूर्वं सूते रत्नाकरो रत्नम्॥**

इत्यत्र प्रतिवस्तूपमाव्यङ्ग्यायामगूढायामुपमायाम्। यत्र च व्यङ्ग्यालङ्कारस्याधिकं चारुत्वं तत्र ध्वनित्वमेव। यथा'गाढकान्तदशनक्षतव्यथे'त्यादौ विरोधव्यङ्ग्यायां तुल्ययोगितायाम्।

## काव्यप्रदीपः

**एषां भेदा यथायोगं वेदितव्याश्च पूर्ववत्॥ २॥**

पूर्ववत्ध्वनेरिव। चकारो भिन्नक्रमः। पूर्ववच्चेत्यर्थः। यथायोगं यथासंभवम्।

अयमर्थः—न केवलमेत एव गुणीभूतव्यङ्ग्यस्य भेदाः किं त्वर्थान्तरसंक्रमितवाच्यत्वादिभिर्यथा ध्वनेर्भेदास्तथा असंभविनो विहायास्यापि तैरुपाधिभिः शुद्धभेदाः। संकरसंसृष्टिभ्यां योजने च तेषामेषां च संकीर्णभेदा अपि बोद्धव्याः असंभविनश्च वस्तुमात्रेणालंकारव्यक्तिनिबन्धनाः। तदुक्तं ध्वनिकृता—

**'व्यज्यन्ते वस्तुमात्रेण यदालंकृतयस्तदा।**
**ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्॥'इति।**

अत्र ध्वन्यङ्गता व्यङ्ग्यतया। ध्रुवं ध्वन्यङ्गता ध्वनिनैव ता व्यज्यन्ते। तद्व्यञ्जकस्य ध्वनित्वमेवेत्यर्थः। कुतः, काव्यवृत्तेस्तदाश्रयात्काव्यवृत्तेस्तदभिसंधानपूर्वकत्वात्। वस्तुमात्रापेक्षयालंकारस्य चारुतानियमादित्यर्थः। ननु यद्यलंकारापेक्षया वस्तुमात्रस्य नातिशयनियमस्तदा कथमलंकारेण वस्तुमात्रव्यञ्जने ध्वनित्वमिति चेत्, उच्यते—स एवार्थो वाच्यः सन्न तथा चमत्करोति यथा व्यङ्ग्यतापन्न इत्यनुभवसिद्धम्। अतो वाच्यता अपकर्षहेतुः, व्यङ्ग्यता तूत्कर्षायेति स्थितम्। यत्र चालंकारेण वस्तुमात्रं व्यङ्ग्यं तत्रालंकारस्य वाच्यत्वेन किंचिदपकर्षात्। वस्तुमात्रस्य च व्यङ्ग्यत्वेन किंचिदुत्कर्षाद्युज्यत एव ध्वनित्वम्। यत्र तु वस्तुनालंकारो व्यज्यते तत्र वस्त्वलंकारयोर्वाच्यत्वव्यङ्ग्यत्वाभ्यामतिशयेनैवोत्कर्षापकर्षाविति कुतो गुणीभूतव्यङ्ग्यत्वावकाशः। इदं तु चिन्त्यम्। एवं चारुत्वाभावनिबन्धनं गुणीभूतत्वं मा भूत्। अगूढत्वादिनिबन्धने तु तस्मिन्को वारयितेति। यत्पुनरष्टानामेव भेदानां संकीर्णत्वमात्रातिदेशिकमिदं सूत्रमिति व्याख्यानं तदबोधात्। तथासति हि यथायोगमित्यनेन वस्तुव्यङ्ग्यालंकाररूपभेदपर्युदासवैयर्थ्यम्। संकरादीनां तथाप्यव्याहतेः।

## आदर्शः

एषामिति उक्ताष्टविधव्यङ्ग्यानामित्यर्थः। 'भेदाः' प्रभेदाः। पूर्ववदिति, ध्वनेर्यथा लक्षणादिमूलकत्वादिभेदेन एकपञ्चशादिभेदेन एकपञ्चशाद्विधत्वम्, तथा एषामपि प्रत्येकमेकपञ्चाशाद्विधत्वेन अष्टाधिकचतुःशतरूपत्वमित्यर्थः। तत्रैव कश्चिद् भेदो गुणीभूतो न सम्भवतीत्याह—यथायोगमिति, यथासम्भवमित्यर्थः। असम्भवस्थलं दर्शयति—व्यज्यन्त इति। 'ध्वन्यङ्गता' काव्यस्य ध्वनित्वनिर्वाहकता। 'काव्यवृत्तेः' तादृशकाव्यप्रवृत्तेः। 'तदाश्रयात्' ध्वनित्वाश्रयणात्। ननु किमत्र बीजमिति चेत् काव्यस्य चमत्कारस्तावत् व्यङ्ग्यस्य व्यङ्ग्यत्वेन अलङ्कृतित्वेन च, तत्र व्यङ्ग्यत्वेन चमत्कारस्य अगूढत्वादिना गुणीभावेऽपि अलङ्कृतित्वेन चमत्कारस्य अगुणीभाव एवेति बीजम्। न चैवं शब्दशक्त्या अलङ्कारेण वा व्यङ्ग्यास्यालङ्कारस्यापि तथात्वेन वस्तुमात्रेणेति मात्रपदेन कथं 'व्यञ्जकालङ्कारवच्छेदः कृत इति वाच्यं तत्र व्यञ्जकेन शब्दश्लेषालङ्कारेण वाच्यार्थालङ्कारेण च काव्यस्य चमत्कृतत्वात् व्यङ्ग्यालङ्कारस्य वाच्यतुल्यचमत्कृतिप्रयोजकत्वेन वाच्यादनतिशयाद् गुणीभवात्।

## सुधासागरः

पूर्ववत्-ध्वनेरिव । चकारो भिन्नक्रमः पूर्ववच्चेत्यर्थः । यथायोगमिति । यथासम्भवमित्यादि । अयमर्थः । न केवलमेत एव गुणीभूतव्यङ्ग्यभेदाः किन्त्वर्थान्तरसङ्क्रमितवाच्यत्वादिभिर्यथा ध्वनेर्भेदास्तथाऽसम्भविनो विहायाऽस्यापि तैरुपाधिभिः शुद्धभेदाः । सङ्करसंसृष्टिभ्यां योजने च तेषामेषां च सङ्कीर्णभेदा अपि बोद्धव्याः । असम्भविनश्च वस्तुमात्रेणाऽलङ्कारव्यक्तिनिबन्धनाः । तदुक्तं ध्वनिकृता—

**व्यज्यन्ते वस्तुमात्रेण यदाऽलङ्कृतयस्तदा ।**
**ध्रुवं ध्वन्यङ्गतां तासां काव्यवृत्तेस्तदाश्रयात् ॥ [ध्व. २.२९] इति ।**

अत्र ध्वन्यङ्गता व्यङ्ग्यतया । ध्रुवं ध्वन्यङ्गता—ध्वनिनैव ता व्यज्यन्ते तद्व्यञ्जकस्य ध्वनित्वमेवेत्यर्थः । कुतः ? काव्यवृत्तेस्तदाश्रयात्—काव्यवृत्तेस्तदभिसन्धानपूर्वकत्वात्, वस्तुमात्रापेक्षयाऽलङ्कारस्य चारुतानियमादित्यर्थः । इदं त्ववधेयम् । वस्त्वलङ्कारयोर्व्यङ्ग्यव्यञ्जकभावोऽत्र क्रमव्युत्क्रमाभ्यां द्विविधोऽपि विवक्षित इति षड्भेदैर्हीनः प्रस्तारः । तथा च गुणीभूतव्यङ्ग्यस्य पञ्चचत्वारिंशद् भेदाः शुद्धा द्रष्टव्याः ।

ननु यद्यलङ्कारापेक्षया वस्तुमात्रस्य नातिशयनियमस्तदा कथमलङ्कारेण वस्तुमात्रव्यञ्जने ध्वनित्वमिति चेत् । उच्यते । स एवार्थो वाच्यः सन् न तथा चमत्करोति यथा व्यङ्ग्यतापन्न इत्यनुभवसिद्धम् । अतो वाच्यताऽपकर्षहेतुः व्यङ्ग्यता तूत्कर्षायेति स्थितम् । यत्र चालङ्कारेण वस्तुमात्रं व्यङ्ग्यं तत्रालङ्कारस्य वाच्यत्वेन किञ्चिदपकर्षात्, वस्तुमात्रस्य च व्यङ्ग्यत्वेन किञ्चिदुत्कर्षाद्यज्यत एव ध्वनित्वम् । यत्र तु वस्तुनाऽलङ्कारो व्यज्यते, तत्र वस्त्वलङ्कारयोर्वाच्यत्वव्यङ्ग्यत्वाभ्यामतिशयेनैवोत्कर्षापकर्षाविति कुतो गुणीभूतव्यङ्ग्यत्वावकाशः ।

अत्र प्रदीपकाराः—इदं तु चिन्त्यम् । एवं चारुत्वाभावनिबन्धनं गुणीभूतत्वं मा भूत्, अगूढत्वादिनिबन्धने तु तस्मिन् को वारयितेत्याहुः ।

अत्र ब्रूमः—चारुत्वाभावमात्रनिबनधनमेव हि गुणीभूतव्यङ्ग्यत्वम्, अगूढत्वादिकं तु चारुत्वाभावप्रयोजकभेदकं न तु मध्यमकाव्यताप्रयोजकम् । उक्तञ्च सूत्रकारैः—'अतादृशि गुणीभूतव्यङ्ग्यं व्यङ्ग्ये तु मध्यमम्' इति दिक् । यत्पुनराष्टानामेव भेदानां सङ्कीर्णत्वमात्रातिदेशिकमिदं सूत्रमिति केचिद् वदन्ति, तदबोधात् । तथा सति हि यथायोगमित्यनेन वस्तुव्यङ्ग्यालङ्काररूपभेदपर्युदासवैयर्थ्यम् । सङ्करादीनां यथायोगपदाभावेऽप्यव्याहतेः ।

**(सू० ६८) सालङ्कारैर्ध्वनेस्तैश्च योगः संसृष्टिसङ्करैः ।**

**सालङ्कारैरिति । तैरेवालङ्कारैः अलङ्कारयुक्तैश्च तैः । तदुक्तं ध्वनिकृता—**

**'स गुणीभूतव्यङ्ग्यैः सालङ्कारैः सह प्रभेदैः स्वैः ।**
**सङ्करसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा ।।' इति ।।**

---

**सङ्केतः**

तैरेवेति । गुणीभूतव्यङ्ग्यैरेवेत्यर्थः । अयं भावः—अत्र पक्षत्रयी—शुद्धध्वनेः केवलालङ्कारयोगः इत्येकः पक्षः, केवलैः गुणीभूतव्यङ्ग्यैर्योगः इति द्वितीयः, तृतीयस्तु अलङ्कारयुक्तैः गुणीभूतव्यङ्ग्यैर्योगः इति । तैः गुणीभूतव्यङ्ग्यैः ।

स इति । सः ध्वनिः स्वैः प्रभेदैः संसृष्टिसङ्कराभ्यां कृत्वा बहुधा स्यात् इत्यर्थः । एकस्मिन्नेव वृत्ते ध्वनिः गुणीभूतव्यङ्ग्यं च अलङ्कारश्च स्यात् इति भावः ।

ध्वनिगुणीभूतव्यङ्ग्योः संसृष्टिः यथा—

**षट्तर्कीललनाललामनि गते यस्मिन् मुनिस्वामिनि**
**स्वर्गं, वाग्जननी शुचां परवशा काश्मीरमाशिश्रियत् ।**
**तत्रापि स्फुरितारतिः भगवती जाने हिमाद्रिं गता,**
**तापं तादृशपुत्ररत्नविरहे सोढुं न शक्ताऽन्यथा ।।**

स्वमेतत् । अत्र 'ललनाललामनि' इति अविवक्षितवाच्यो ध्वनिः । 'जाने' 'तादृश' इति पदे गुणीभूतव्यङ्ग्ये । 'जाने' इतिपदेन उत्प्रेक्ष्यमाणानन्तधर्म व्यञ्जकेनापि वाच्यमेव उत्प्रेक्षणरूपं वाक्यार्थीक्रियते । 'तादृश' इतिपदेन असामान्यगुणौघः व्यक्तोऽपि गौणः; स्मृतिरूपस्य वाच्यस्य प्राधान्येन चारुत्वहेतुत्वात् ।

तयोः सङ्करो यथा—

**'न्यक्कारो ह्ययमेव मे यदरयः, तत्राप्यसौ तापसः,**
**सोऽप्यत्रैव निहन्ति राक्षसकुलं, जीवत्यहो ! रावणः ।**
**धिक् धिक् शक्रजितं ! प्रबोधितवता किं कुम्भकर्णेन वा ?**
**स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः ? ।।**

इति । अत्र रौद्ररसध्वनिः वाक्यार्थीभूतः । तस्य व्यङ्ग्यविशिष्टवाच्यवाचिभिः पदैः सङ्करः । विभावादिरूपतया 'मे अरयः' इत्यादिकं रौद्रमेव पुष्णाति । वाच्यस्यैव क्रोधोद्दीपकत्वात् गुणीभूतव्यङ्ग्यता । ध्वनेः वाच्यालङ्कारसंसृष्टिसङ्करविषयदृष्टान्ताः सुलभत्वात् नोक्ताः । ते च सरसालङ्कारकाव्येषु स्वयमूह्याः ।

**बालचित्तानुरञ्जनी**

सालङ्कारैरिति। सालङ्कारैरित्यनेन शुद्धस्य ध्वनेः केवलैरलङ्कारैर्योगः। अलङ्कारयुक्तैश्च तैरित्यनेन अलङ्कारयुक्तैर्गुणीभूतव्यङ्ग्यैर्योगश्चेति पक्षद्वयमुक्तम्। तैश्चेत्यनेन गुणीभूतव्यङ्ग्यैः केवलैर्योग इति तृतीयः पक्षः। एवं त्रयः पक्षा इत्यर्थः। उक्तेऽर्थे संमतिमाह तदुक्तमिति। गुणीभूतव्यङ्ग्यैः अलङ्कारैश्च सह ये वर्तन्ते तैः सङ्कीर्णतया संसृष्ट्या वा स्वभेदसङ्कीर्णः स्वप्रभेदसंसृष्टो गुणीभूतव्यङ्ग्यसङ्कीर्णो गुणीभूतव्यङ्ग्यसंसृष्टो वाच्यालङ्कारान्तरसङ्कीर्णो वाच्यालङ्कारान्तरसंसृष्टः संसृष्ट्यालङ्कारान्तरसङ्कीर्णः संसृष्ट्यालङ्कारान्तरसंसृष्टश्चेति अनन्तप्रकारो ध्वनिरिति भावः। तत्र ध्वनिगुणीभूतव्यङ्ग्ययोः संसृष्टत्वं यथा—

**तेषां गोपवधूविलाससुहृदां राधारहःसाक्षिणां**
**क्षेमं भद्र! कलिन्दशैलतनयातीरे लतावेश्मनाम्।**
**विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना**
**ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः॥**

मय्यनास्मिने का स्मरतल्पकल्पनेति भावः। अत एवान्योन्यानुरागनिश्चयगर्भमेवाह जाने इति। वाक्यार्थस्यात्र कर्मत्वमधुना जरठीभवन्ति मयि तु संनिहिते अनवरतोक्तोपयोगान्न ते जराजीर्णतामापुरित्यर्थः। विगलन्नीला त्विट् येषाम्, अनेन चिरकालप्रोषितस्याप्यौत्सुक्यं ध्वनितम्। अत्र तु सुशब्दे साक्षिशब्देऽविवक्षितवाच्यो ध्वनिभेदः। ते जाने इत्येते च पदे गुणीभूतव्यङ्ग्ये। रूपभेद इति पदेनासाधारणगुणगणोऽभिव्यक्तोऽपि गुणत्वमवगते वाच्यस्यैव स्मरणस्य प्राधान्येन चारुत्वहेतुत्वात् जाने इत्यनेनोत्प्रेक्षमाणा तत्र धर्मव्यञ्जकेनापि वाच्यमेवोत्प्रेक्षणरूपतया प्रधानीक्रियते **[???]**।

तयोः सङ्करो यथा—

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापस" इत्यत्रालक्ष्यक्रमव्यङ्ग्यस्य रौद्रस्य वाक्यार्थीभूतस्य व्यङ्ग्यविशिष्टवाच्याभिधायिपदैः सङ्करः। यदरयः इत्यादिभिः विभावादिरूपतया रौद्र एवानुगृह्यते वाच्यस्यैव क्रोधोद्दीपकत्वात् गुणीभूतव्यङ्ग्यता।

वाच्यालङ्कारसंसृष्टत्वं च पदापेक्षया यथा—

**दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां**
**प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः।**
**यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः**
**शिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः॥**

कूजितान्दोलितशिप्रातरङ्गजमधुरशब्दमिश्रं भवतीति दीर्घत्वम् विकसितकुसुमामो देन या मैत्री। अभ्यासाङ्गवियोगान्योन्यानुकूल्यलाभः, तेन कषायः उपरक्तः मकरन्देन कषायः कषायीकृतः। प्रार्थनार्थं चाटूनि कारयति प्रियोऽपि संभोगार्थं चाटूनि करोति। अङ्गेषु चातुः षष्ठिकप्रयोगेष्वनुकूलः। अत्र मैत्रीपदं ह्यविवक्षितवाच्यो ध्वनिः। पदान्तरे चोत्प्रेक्षादिवाच्यालङ्कारसङ्कीर्णत्वं वा लक्ष्यक्रमव्यङ्ग्यापेक्षया रसवति सालङ्कारे काव्ये सर्वत्रैव द्रष्टव्यम्।

न त्वत्र ध्वनेर्भेदादिभिः संसृष्टिसङ्करौ, किन्तु तेषामन्योन्ययोजनयापि तौ स्यातामित्याह अन्योन्ययोगादिति। सूत्रं व्याकरोति एवमिति।

### काव्यादर्शः

सालंकारैरिति। शुद्धस्य ध्वनेर्गुणीभूतव्यङ्ग्यैः केवलैर्योगोऽलंकारैश्च केवलैरलंकारयुक्तैश्च गुणीभूत-व्यङ्ग्यैरिति त्रयः पक्षा इत्याह—तैरेवालंकारैरिति। सगुणीभूतव्यङ्ग्यैरिति। सह गुणीभूतव्यङ्ग्येन सहालंकारैर्ये वर्तन्ते स्वे ध्वनेः प्रभेदास्तैः संसृष्ट्या वानन्तप्रकारो ध्वनिरिति तात्पर्यम्।

तत्र गुणीभूतव्यङ्ग्ययोः संसृष्टत्वं यथा—

**तेषां गोपवधूविलाससुहृदां राधारहःसाक्षिणां**
**क्षेमं भद्रकलिन्दशैलतनयातीरे लतावेश्मनाम्॥**
**विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना**
**ते जाने जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः॥**

'ये ममैव चित्तस्था ये गोपीनां च नर्मसचिवाः। प्रच्छनानुरागिणीनां हि नान्यो नर्मसुहृद् भवति, राधा च नितरां प्रेमस्थानम्' इत्याह—'राधासंभोगानां ये साक्षाद् द्रष्टारस्तेषां यमुनातीरे लतागृहाणां कुशलम्' इति काक्वा प्रश्नः। एवं तं दृष्ट्वा गोपदर्शनप्रबुद्धसंस्कार आलम्बनोद्दीपनविभावस्मरणात् प्रबुद्धरतिभावो द्वारकागतः कृष्णः स्वगतमौत्सुक्यगर्भमाह—'स्मरतल्पे'ति। 'स्मरशय्याकल्पनार्थं मृदु सुकुमारं कृत्वा यश्छेदस्त्रोटनं स एव साफल्यं तस्मिन् विच्छिन्ने मयि अनासीने का स्मरतल्पकल्पना' इति भावः। अत एवान्योन्यानुरागनिश्चयगर्भमेवाह—'जाने' इति। वाक्यार्थस्यात्र कर्मत्वम्। 'अधुवा जरठीभवन्ति, मयि तु संनिहितेऽनवरतोक्तोपयोगाद् न इमां जराजीर्णतामापुरित्यर्थः। विगलन्ती नीला त्विड् येषाम्। अनेन अचिरकालपोषितस्याप्यौत्सुक्यंध्वनितम्। अत्र सुहृच्छब्दे साक्षिशब्दे च अविवक्षितवाक्योर्ध्वनिभेदः। 'ते' 'जाने' इत्येते च पदे गुणीभूतव्यङ्ग्यरूपे। 'ते' इति पदेनासाधारणगुणगणोऽभिव्यक्तोऽपि गुणत्वमवलम्बते, वाच्यस्यैव स्मरणस्य प्राधान्येन चारुत्वहेतुत्वात्। 'जाने' इत्यनेनोत्प्रेक्ष्यमाणानन्तधर्मव्यञ्जकेनापि वाच्यमेव उत्प्रेक्षणरूपं प्रधानीक्रियते।

तयोः संकरो यथा 'न्यकारो ह्यमेव' इति। अत्र अलक्ष्यक्रमव्यङ्ग्यस्य रौद्रस्य वाक्यार्थीभूतस्य व्यङ्ग्यवि-शिष्टवाच्याभिधायिभिः पदैः संकरः। 'मेऽरयः' इत्यादिभिर्हि विभावादिरूपतया रौद्र एवानुगृह्यतो वाच्यस्यैव क्रोधोद्दीपकत्वाद् गुणीभूतव्यङ्ग्यता॥

वाच्यालंकारसंसृष्टत्वं च पदापेक्षया, यथा—

**'दीर्घीकुर्वन् पटु मदकलं कूजितं सारसानां**
**प्रत्यूषेषु स्फुटितकमलामोदमैत्रीकषायः।**
**यत्र स्त्रीणां हरति सुरतग्लानिमङ्गानुकूलः**
**सिप्रावातः प्रियतम इव प्रार्थनाचाटुकारः॥'**

कूजितं च वातान्दोलितसिप्रातरङ्गजमधुरशब्दमिश्रं भवतीति दीर्घत्वम्। विकसितपद्मामोदेन या मैत्री। अत्यासङ्गवियोगोऽन्योन्यानुकूल्यलाभस्तेन कषाय उपरक्तो मकरन्देन कषायवर्णीकृतः प्रार्थनार्थं चाटुनि कारयति, प्रियोऽपि संभोगप्रार्थनार्थं चाटूनि करोति। अङ्गेषु चातुःषष्टिकप्रयोगेष्वनुकूलः। अत्र मैत्रीपदं ह्यविवक्षितवाच्यो ध्वनिः, पदान्तरेषु चोत्प्रेक्षादिः। वाच्यालंकारसंकीर्णस्वं चालक्षक्रमव्यङ्ग्यापेक्षया रसवति सालंकारे काव्ये सर्वत्रैव।

## विवेकः

एतेऽप्यष्टौ गुणीभूतव्यङ्ग्यस्य भेदाः पूर्ववत्सङ्कलितक्रमेण सजातीयैः सह षट्त्रिंशत् (३६) संख्यकाः। शुद्धभेदाष्टकयोजनेन च भेदोच्चयाः स्युश्चतुश्चत्वारिंशत् (४४)। एवं व्यङ्ग्यस्य प्राधान्याप्राधान्याभ्यां द्विधा व्यवस्थितेः काव्ये ध्वनिगुणीभूतव्यङ्ग्ययोः परस्परसम्पर्कैबहुप्रकारत्वं दर्शयति—सालङ्कारैरिति, अतएव ध्वनिनिर्मातुः सम्मतिं कथयति—तदुक्तमित्यादि। तस्य ध्वनेः प्रभेदैर्गुणीभूतव्यङ्ग्येन वाच्यालङ्कारैश्च सङ्करसंसृष्टिव्यवस्थायां क्रियमाणायां स्वप्रभेदसङ्कीर्णः स्वप्रभेदसंसृष्टो गुणीभूतव्यङ्ग्यसङ्कीर्णो वाच्यालङ्कारसङ्कीर्णो वाच्यालङ्कारसंसृष्टः संसृष्टालङ्कारसङ्कीर्णः संसृष्टालङ्कारसंसृष्टश्चेति बहुधा ध्वनिः प्रकाशते। तत्र स्वभेदं प्रति गुणीभूतव्यङ्ग्यं च प्रति संकरसंसृष्टी प्रागुदाहृते एव।

## दीपिका

ध्वनेः पूर्वोक्तभेदवतः। तैर्गुणीभूतव्यङ्ग्यैः शुद्धैः सजातीयमिश्रीभूतैश्च सहेत्यर्थः। सजातीयसंसृष्टौ चाष्टानां ध्वनिवद्गणनोपनीतसङ्करे शतमष्टोत्तरम् (१०८)। समुदाये शुद्धैः सह वेद्यबाणेन्दवः (१५२)। संसृष्टिसङ्करैः सम्बन्धैर्योगो व्यवच्छेदाभावः तैरेवालङ्कारैरिति। वाच्यालङ्कृतिव्यङ्ग्यत्वादिस्थले। अलङ्कारयुक्तैश्चेत्यत्र प्रथमं वाच्येति शेषः। तदुक्तमित्युच्छास्त्रतापरिहारः। उद्द्योतत इत्यत्र ध्वनिरित्यनुषङ्गः। अवान्तरभेदा ध्वनित्वसाक्षाद्व्याप्यधर्मोपहिताः प्रभेदास्तद्विशेषाः।

## दर्पणः

सालङ्कारैरिति। ध्वनेरुक्तभेदवतः तैर्गुणीभूतव्यङ्ग्यैः अर्थादष्टानामप्येषां ध्वनिभेदसंख्यानामित्याह। सजातीयसंसृष्टौ षट्त्रिंशत्क्रमः, सङ्करे तु शतमष्टोत्तरमिति। ततश्चत्वारिंशदधिकशुद्धभेदाष्टकेन सह चैवंविधसंख्याकभेदवद्भिः। संसृष्टीति। एकया संसृष्ट्या त्रिभिश्च सङ्करैर्योगः संबन्धः। तैरेवालङ्कारैरिति। वाच्यालङ्कारव्यङ्ग्यैः। अलङ्कारयुक्तैरिति वाच्यालङ्कारयुक्तैः। उद्योतते प्रकाशते। ध्वनिरित्यनुषङ्गः। भेदानां विशेषाणां गुणने शुद्धजातीयसङ्कीर्णसंसृष्टतया शृङ्गारस्य विवक्षितान्यपरवाच्यविशेषासंलक्ष्यक्रमविशेषरसविशेषस्य संख्यानन्त्यं पूर्वोक्तरीत्या शुद्धसङ्कीर्णसंसृष्टताभिन्नानां ध्वनिगुणीभूतव्यङ्ग्यानाम्। संप्रति व्यञ्जनावृत्तिसद्भावे विप्रतिपत्तिनिरासादिभिराभासमानस्य प्रकारस्य प्रकरणस्य संप्रतिपत्तये संक्षिप्य ध्वनिगुणीभूतव्यङ्ग्यभेदमहासङ्कलनेन सङ्क्षेपेण ध्वनेः, ध्वननव्यापारोपहितस्य। तेन ध्वनेर्गुणीभूतव्यङ्ग्यस्यापीत्यर्थः। त्रीणि स्वरूपाणि वस्त्वलङ्काररसादिलक्षणविचित्रं वक्रोक्तिरूपं अलङ्काररूपम्। अलङ्कार्यत्वेऽपि वक्रोक्तिरूपतया अलङ्कारपदवाच्यम्। एतदेवाह अत्रापीति। लक्ष्यते ज्ञायतेऽनेनेति लक्षणं नाम यस्य रसभावादेरित्यर्थः।

## साहित्यचूडामणिः

एवं च ध्वनिगुणीभूतव्यङ्ग्ययोरसङ्कीर्णलक्षणयोः सङ्करसंसृष्टी पृथगुपपाद्य संप्रत्यन्योन्यमाह—सालङ्कारैरिति।

योगो व्यतिकरः।

तुल्ययोगिलक्षणे सम्बन्धिविशेषे सहशब्दस्य समास इत्याह—तैरिवेति। ध्वनिस्कन्धस्य पृथगनन्तरनिरूपितैर्गुणीभूतव्यङ्ग्यैर्दशमे समर्थयिष्यमाणैरुपमादिभिश्च सह संसृष्टिः सङ्करश्च। अथ सम्बन्धमात्रे समास इत्याह—अलङ्कारयुक्तैरिति। प्रथमं गुणीभूतव्यङ्ग्यानामलङ्काराणां च संसृष्टिसङ्करौ संपाद्य पश्चादमीभिर्ध्वनिस्कन्धस्य चतुर्गुणनमिति।

## सम्प्रदायप्रकाशिनी

तदितरेषां तु गुणीभूतव्यङ्ग्यप्रभेदानां सङ्करसंसृष्टिभ्यां भेदप्रपञ्च उन्मीलनीय इत्याह—सालङ्कारैरिति।

सालङ्कारतां द्विधोपदर्शयति—तैरिवालङ्कारैरलङ्कारयुक्तैश्च तैरिति। अत्रायमाशयः—य एते गुणीभूतव्यङ्ग्यास्तेषां शुद्धैः सङ्करसंसृष्टिरूपैश्च प्रभेदैर्ध्वनिभेदानां शुद्धानां सङ्करसंसृष्टिरूपाणां च सङ्करसंसृष्टिरूपाभ्यां च योगः। यथा च गुणीभूतव्यङ्ग्यैस्तथालङ्कारैपि, अलङ्कारसंकीर्णैस्तत्संसृष्टैर्वा गुणीभूतव्यङ्ग्यैश्च ध्वनेर्योगोऽनुसर्तव्य इति।

अत्र संवादः—सगुणीभूतव्यङ्ग्यैरिति। उद्द्योतत इति। अत्र ध्वनिभेदः कर्ता।

## विस्तारिका

ध्वनिगुणीभूतव्यङ्ग्यमिश्रणमाह—सालङ्कारैरित्यादि। तैर्गुणीभूतव्यङ्ग्यैः शुद्धैः सजातीयमिश्रीभूतैश्च सहेत्यर्थः। ध्वनेर्योगो मिश्रणं संसृष्ट्यैकया संकरैस्त्रिभिस्तैरेवालङ्कारैरिति समासोक्तिस्थले। तत्र 'आगत्य संप्रति वियोगविसंष्ठुलाङ्गीम्' इत्यादौ व्यङ्ग्यस्य नायकवृत्तान्तस्य रविकमलिनीवृत्तान्तोत्कर्षकतां प्राप्य समासोक्त्यलङ्कारताप्राप्तेः। अलङ्कारयुक्तैरिति, वाच्यालङ्कारसहितैरित्यर्थः।

स्वोक्तौ प्रामाणिकसम्मतिमाह—तदुक्तमिति। प्रभेदैरर्थान्तरसंक्रमितवाच्यादिभिर्वाच्यालङ्कारसहितैः, स ध्वनिः।

अतिप्रभूततरा, शुद्धसजातीयविजातीयसंमिश्रणभेदेन निर्वक्तुमशक्येत्यर्थः। शृङ्गारस्यध्वनिभेदा लक्ष्यक्रमभेदरसरूपभेदस्य भेदप्रभेदाः सर्वे मिश्रणप्रकारा इति भावः। सर्वेषां ध्वनिगुणीभूतव्यङ्ग्यानाम्।

## सारबोधिनी

ध्वनिगुणीभूतव्यङ्ग्यमिश्रणमाह सालङ्कारैरित्यादि। ध्वनेर्योगो मिश्रणम्। तैरेवालङ्कारैरिति। समासोक्तिस्थले—'आगत्य संप्रति वियोगे'त्यादौ व्यङ्ग्यस्य गायकवृत्तान्तस्य रविकमलिनीवृत्तान्तोत्कर्षतां प्राप्य समासोक्त्यलङ्कारता प्राप्तैः अलङ्कारयुक्तैरित्यर्थः। स्वोक्ते प्रामाणिकसंमतिमाह तदुक्तमिति। सः ध्वनिः प्रभेदैः

अर्थान्तरसङ्क्रमितवाच्यादिभिः । सालङ्कारैर्वाच्यालङ्कारसहितैः । भेदेति । प्रभेदोऽवान्तरभेदः ।

**काव्यप्रदीपः**

पूर्वं सजातीययोगो ध्वनेरुक्तः । इदानीं विजातीययोगमाह—

**सालंकारैर्ध्वनेस्तैश्च योगः संसृष्टिसंकरैः ।**

सालंकारैरिति विभिन्नार्थैकरूपनानाशब्दैकशेषः । एकत्रालंकारपदस्य भावप्रधानत्वात् । तथा च तैरेवा-'लंकारैरलंकारसहितैश्च तैरित्यर्थः । तेन ध्वनिना गुणीभूतव्यङ्ग्येन वाच्यालंकारेण च ध्वनेर्योग इति पूर्वपराभ्यामुक्तं भवति । तदुक्तं ध्वनिकृता—

**'सगुणीभूतव्यङ्ग्यैः सालंकारैः सह प्रभेदैः स्वैः ।**
**संकरसंसृष्टिभ्यां पुनरप्युद्योतते बहुधा ॥' इति ।**

स ध्वनिः सालंकारैर्गुणीभूतव्यङ्ग्यैः स्वैः प्रभेदैः सह संकरसंसृष्टिभ्यां बहुधा पुनरप्युद्योतत इत्यन्वयः ।

**आदर्शः**

सालङ्कारैरिति, 'तैः' 'गुणीभूतव्यङ्ग्यप्रभेदैः, 'सालङ्कारैः' चकारात् निरलङ्कारैश्च 'ध्वनेः' सङ्करादिचतुर्विधैः 'योग' इत्यर्थः । तेषां सालङ्कारेणापि प्रभेदवृक्षिप्रदर्शनार्थं सालङ्कारैरित्युक्तम् । सालङ्कारता च स्फुटालङ्कारवत्ता, तेन निरलङ्कारताऽस्फुटालङ्कारवत्तैव, अलङ्कारमात्राभावे सालङ्कारत्वघटितकाव्यलक्षणानुपपत्तेः । स्फुटालङ्कारवत्वमपि अस्फुटप्रख्यं (टाख्यं ?) प्रभेदं विहायैव बोध्यम्, तस्य स्फुटालङ्कारवत्वे चित्रकाव्यत्वापत्तेः । अयमेव हि चित्रास्फु-टयोर्भेदः प्राग् दर्शितः । अलङ्कारयुक्तैरिति, इयं 'सालङ्कारै'रित्यस्य व्याख्या । 'अलङ्कारै'रिति तु अर्थवशलभ्यं व्याख्यातम्, अपराङ्गस्य रसवदाद्यलङ्काररूपत्वात्, स गुणीति । स ध्वनिः स्वैः प्रभेदैः गुणीभूतव्यङ्ग्यैश्च सहेत्यर्थः ।

**सुधासागरः**

पूर्वं सजातीययोगो ध्वनेरुक्तः, इदानीं विजातीययोगमाह—

सालङ्कारैरितीत्यादि । भिन्नार्थैकरूपनानाशब्दैकशेषः । एकत्रालङ्कारपदस्य भावप्रधानत्वात् । तथा च तैरेवालङ्कारैरलङ्कारसहितैश्च तैरित्यर्थः । तैरेवालङ्कारैरित्यस्यायमाशयः—गुणीभूतव्यङ्ग्यैरेवालङ्कारात्मतां प्राप्तैः । आगत्य सम्प्रतीत्यादौ गुणीभूतव्यङ्ग्यस्य नायकनायिकावृत्तान्तस्य वाच्यरविकमलिनीवृत्तान्तोत्कर्षकस्य समासो-क्त्यलङ्काररूपत्वादिति । तेन ध्वनिना गुणीभूतव्यङ्ग्येन वाच्यालङ्कारेण च ध्वनेर्योग इति पूर्वापराभ्यामुक्तं भवति । तदुक्तं ध्वनिकृता स गुणीभूतेत्यादि । स ध्वनिः सालङ्कारैर्गुणीभूतव्यङ्ग्यैः प्रभेदैश्च सह सङ्करसंसृष्टिभ्यां बहुधा द्योतत इत्यर्थः ।

---

(सू० ६९) अन्योन्ययोगादेवं स्याद्भेदसंख्यातिभूयसो ॥ ४७ ॥

एवमनेन प्रकारेण अवान्तरभेदगणनेऽतिप्रभूततरा गणना, तथा हि शृङ्गारस्यैव भेदप्रभेदगणनायामानन्त्यम्, का गणना तु सर्वेषाम्।

सङ्कलनेन पुनरस्य ध्वनेस्त्रयो भेदाः व्यङ्ग्यस्य त्रिरूपत्वात्। तथाहि—किञ्चिद्वाच्यतां सहते किञ्चित्त्वन्यथा। तत्र वाच्यतासहमविचित्रं विचित्रं चेति। अविचित्रं वस्तुमात्रम् विचित्रं त्वलङ्काररूपम्। यद्यपि प्राधान्येन तदलङ्कार्यम्, तथापि ब्राह्मणश्रमणान्येन तथोच्यते। रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः। स हि रसादिशब्देन शृङ्गारादिशब्देन वाभिधीयेत। न चाभिधीयते। तत्प्रयोगेऽपि विभावाद्यप्रयोगे तस्याप्रतिपत्तेस्तदप्रयोगेऽपि विभावादिप्रयोगे तस्य प्रतिपत्तेश्चेत्यन्वयव्यतिरेकाभ्यां विभावाद्यभिधानद्वारेणैव प्रतीयते इति निश्चीयते, तेनाऽसौ व्यङ्ग्यं एव मुख्यार्थबाधाद्यभावान्न पुनर्लक्षणीयः।

---

सङ्केतः

अन्योन्येति। न केवलं ध्वनेः स्वप्रभेदादिभिः संकरसंसृष्टी, यावत् तेषामपि मिथो योगात् ते स्याताम्।

किञ्चित् व्यङ्ग्यं रसादिरूपम् अयं भावः—वस्त्वलङ्काररसादितया त्रिधा व्यङ्ग्यम्। तत्र वस्त्वलङ्काररूपस्य वाच्यतायोग्यताऽस्ति। न तु यदैव व्यङ्ग्यता तदैव वाच्यता इति। अन्यथेति। रसादि कदाचनापि वाच्यतां न सहते इत्यर्थः। वस्तुमात्रमिति। मात्रशब्दात् एतदुच्यते—यत्—विधिनिषेधतदुभयात्मतारूपेण वस्तुनो ध्वनिः संक्षिप्तः, न तु अलङ्काराणाम्; बहुत्वात्। तथोच्यते—ध्वनिरपि अलङ्कारतया निर्दिश्यते।

रसादीति। रसादेः वाच्यतायोग्यताऽपि नेति भावः। रसादिः केवलं व्यञ्जनव्यापारेण आस्वाद्यमानजीवतया भाति, न तु व्यापारान्तरेणेत्याह—स हीति। तत्प्रयोगेऽपि रसादिशृङ्गारादिशब्दप्रयोगेऽपि।

प्रतीयते प्रतीतिविषयो भवति।

मुख्यार्थेति। न हि विभावानुभावादौ मुख्येऽर्थे बाधा अस्ति, येन लक्षणा स्यात् इति भावः।

**बालचित्तानुरञ्जनी**

गणनाया: प्रभूततरत्वमेवोपपादयति तथाहीति। एकस्यैव शृङ्गारस्य भेदप्रभेदगणनायामानन्त्यम्, किं वक्तव्यं सर्वेषाम्। तद्गणनायामानन्त्यं स्यादित्यर्थ:। यद्येवमानन्त्यं स्याद्भेदानां भेदगणनमेव दुर्घटमित्यत आह सङ्कलनेनेत्यादि। सङ्कलनं सङ्ग्राहकेणाप्युपाधिना एकीकरणमित्यर्थ:। तत्र हेतुमाह व्यङ्ग्यस्येति। त्रिरूपत्वाद्व-स्त्वलङ्काररसरूपत्वादित्यर्थ:। तदेव विशदयति तथाहीति। किञ्चित् रसादिरूपम्। अन्यथा वाच्यतां न सहते। वाच्यत्वस्य स्पर्शाक्षमत्वमित्यर्थ:। तयोर्मध्ये वाच्यतासहस्य द्वैविध्यमाह तत्रेति। तयो: स्वरूपमाह अविचित्र-मिति। मात्रग्रहणेन एतदाह। यथा विधिनिषेधादुभयात्मतया वस्तुध्वनि: सङ्क्षेपेण सुवच: न तथालङ्कारध्वनि:, अलङ्काराणां भूयस्त्वादिति। ननु यदालङ्कारो व्यङ्ग्य: तदा तस्यालङ्कार्यत्वात् कथमलङ्कारध्वनिरित्याह यद्यपीति। तथेत्यलङ्कारध्वनि:। तुशब्देन रसादे: वस्त्वलङ्काराभ्यां विशेषं दर्शयन् आह रसादीति। आदिशब्देन भावतदाभा-सतत्प्रशमा उच्यन्ते। रसादय: केवलं व्यापारेण जीवतया भवन्ति। व्यापारान्तरेणेत्याह स हीति। यदि स रसादिर्वाच्य: स्यात् तदा अयं रस:, अयं शृङ्गार:, अयं वीर: इत्यादिशब्दैरभिधेयेत। तदाभिर्धेयविभावादि प्रयोगा-द्यन्वयव्यतिरेकित्वादित्यर्थ:। अन्यथा व्यतिरेकानुविधायित्वमेवाह तत्प्रयोगेऽपीति। रसादिशृङ्गारादिशब्दप्र-योगेऽपीत्यर्थ:। प्रतीयत इति। प्रतीति विषय इत्यर्थ:। रसभावादिशब्दसहिते "शृङ्गारी गिरिजानन" इत्यादौ केवलशृङ्गारहास्यकरुणादिशब्दमात्रभाजि विभावादिप्रतिपादनरहिते मनागपि न रसप्रतीति:। रसशृङ्गाराद्यभिधानं विनापि केवलेभ्यो विभावादिभ्य: प्रतीतिश्चेत्यन्वयव्यतिरेकाभ्यां न कथञ्चिदभिधेयत्वं रसादीनामिति भाव:। एतेन स्वसंवेदनासिद्धत्वमुक्तमिति द्रष्टव्यं तर्हि रसादिर्लक्ष्य एवास्तु नेत्याह मुख्यार्थेति। मुख्यार्थे विभावानुभावादौ लक्षणामूलबाधाद्यभावान्न लक्षणा काव्यात्मकशब्दनिपीडनेन रसचर्वणादर्शनात्। अत एवालक्ष्यक्रमो रसादिरि-त्युक्तमिति भाव:।

ननु द्वितीयोल्लासे व्यङ्ग्यविचार: कृत: पुन: किमिति क्रियत इत्याशङ्क्यात्र लक्षणमूलध्वेन र्व्यङ्ग्यत्वमुपपादितमित्यहाप्रतिपादितं विस्तरेणेति शेष:। तर्हि किमवशिष्टमित्याशङ्क्य अर्थान्तरेति। अभिधामूलस्य ध्वनेर्व्यङ्ग्यत्वं पूर्वं नोपपादितभिति तत्प्रतिपादनायाह शब्दशक्तीति।

**काव्यादर्श:**

न केवलं ध्वने: स्वप्रभेदादिभि: संसृष्टिसंकरौ यावत्तेषामन्योन्यमपीत्याह—अन्योन्ययोगादिति। त्रिरू-पत्वादिति। वस्त्वलंकाररसादिरूपत्वात्। किंचिदिति व्यङ्ग्यम्। अन्यथेति। वाच्यतां न सहते। वाच्यत्वस्पर्शा-क्षमो रसादि:। वाच्यतासहमिति। अविचित्रविचित्रात्मतया द्विधा। द्वयमपि शब्दार्थाभिधान योग्यम्। वस्त्वलंकारयोर्वाच्यतायां योग्यतास्तीत्यर्थ:, केवलं वाच्यत्वात्। व्यङ्ग्यमत्यन्तं भिन्नम्। वस्तुमात्रमिति। मात्रग्र-हणेनैतदाह 'यथा विधिनिषेधतदुभयात्मतारूपेण वस्तुध्वनि: संक्षेपेण सुवचस्तथा न अलंकारध्वनिरलंकाराणां भूयस्त्वात्।'

ननु यदालंकारो व्यङ्ग्यस्तदा तस्यालंकारर्थत्वात् कथमलंकारध्वनिरित्याशङ्क्याह—यद्यपीति। तथेति अलंकारध्वनि:। रसादिलक्षणस्त्विति। तु शब्दो व्यतिरेके। वस्त्वलंकारौ तावच्छब्दाभिधेयत्वमध्यासाते। रस-भावतदाभासतत्प्रशमा: पुनर्न कदाचिद् अभिधीयन्ते, अथ चास्वाद्यमानप्राणतया भान्ति। तत्र ध्वननव्यापाराद् ऋते

नास्ति नास्ति कल्पनान्तरम्। एतदेव स्फुटयन्नाह—सहीति। रसाभावादिशब्दसहिते वा काव्ये 'शृङ्गारी गिरिजानने' इत्यादौ केवलशृङ्गारहास्यादिशब्दमात्रभाजि वा विभावादिप्रतिपादनरहिते न मनागपि रसत्वप्रतीतिः। यतश्च स्वाभिधानमात्रात् केवलाद् रसादेरप्रतीतिः, रसशृङ्गाराद्यभिधानं विनापि केवलेभ्यो विभावादिभ्यः प्रतीतिश्चेत्यन्वयव्यतिरेकाभ्यां न कथंचिद् अभिधेयत्वं रसादीनामिति। तृतीयोऽपि भेदो वाच्याद् दूरं भिन्नः। प्रतीयत इति। प्रतीतिविषय इत्यर्थः। एतेन संवेदनसिद्धत्वमुक्तम्। तर्हि रसादिर्लक्ष्य एवास्त्वित्याह—मुख्यार्थेति।

## विवेकः

अधुनाऽलङ्कारगते ते प्रदर्श्यते। तत्र व्यङ्ग्यत्वे सत्यलङ्काराणामुदाहृतभेदाष्टक एवान्तर्भाव इत्यभिप्रेत्य वाच्यालङ्कारापेक्षयोच्यते। तत्र वाच्यालङ्कारसङ्कीर्णत्वमलक्ष्यक्रमव्यङ्ग्यस्यापेक्षया रसवति सालङ्कारे वाच्ये सर्वत्रैव सुव्यवस्थितम्—'यथा 'चलापाङ्गा'-(अभि. श. १/२०) मित्यादौ। अत्र रूपकव्यतिरेकस्य शृङ्गारानुग्राहकत्वं स्वभावोक्तेः शृङ्गार एवानुप्रवेशः' ॥ (ध्व. आ. लो. २/२० वृ:) **उप्पहजाआए असोहिणीए फलकुसुमपत्तरहिआए। वोरीए वइं देन्तो पामर हो ओहसिज्जिहसि॥** उत्पथजाताया इति न तथा कुलोद्भूतायाः। अशोभनाया इति लावण्यरहितायाः। फलकुसुमपत्ररहिताया इति पत्रादिरहितायाः। [इत्येवंभूताऽपि काचित् पुत्रिणी वा भ्रात्रादिपक्षपरिपूर्ण तया संबन्धिवर्गपोषिता वा परिरक्ष्यते।] वदर्या वृत्तिं ददत् पामर भो हसिष्यसे सकललोकैरिति (ध्व. आ. लो. २१९ पृ.)। तदिह पामरस्वभावोक्तिर्वा ध्वनिर्वेति प्रकरणाद्यभाव एकतरग्राहकं प्रमाणं नास्ति। यद्यप्यलङ्कारोऽवश्यमेव रसमनुगृह्णातीति प्रतिपादितं तथापि यत्रोपक्रान्तस्यालङ्कारस्य निर्वाह एव रसाभिव्यक्तिहेतुस्तत्र सङ्करभावात् संसृष्टत्वम्। एतावदेव 'विवक्षा तत्परत्वे'नेत्यादिना 'नातिनिर्वहणैषिते'त्यन्तेन (ध्व. आ. २/१९) ध्वनिकृता प्रतिपादितम्। यथा—**कोपात् कोमललोलबाहुलतिकापाशेन बद्ध्वा दृढं नीत्वा वासनिकेतनं दयितया सायं सखीनां पुरः। भूयो नैवमिति स्खलत्कलगिरा संसूच्य दुश्चेष्टितं धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन्॥** (अ. श) अत्र हि यथा बाहुलतिकायाः पाशेन रूपणं तथा यदि वासभवनादीनामपि कारागृहादिभिः स्यात्तदानीमेवौ चित्यमिति रूपकस्यानिर्वाह एव रसपरिपोषाय जायते। एवं वाच्यालङ्कारैः सह संसृष्टिः पदाश्रयेणैव न तु वाक्याश्रयेण यथा दीर्घीत्यादे (मे. दू. पू. ३१)। अत्र 'मैत्री' पदे सुहृत्तो विलक्षणार्थविवक्षया झगित्येव मित्रत्वलक्षण व्यङ्ग्यार्थप्रतीतेरविवक्षितवाच्यो ध्वनिः। अत्र गुणवृत्तिसमाश्रयत्वात् पूर्वोक्तन्यायेन पदार्था[न्त]रेष्वनुप्रासोपमास्वभावोक्तिलक्षणान्यलङ्काराः [न्तरा] णीति। संकरालङ्कारसंकीर्णो ध्वनिर्यथा—दन्तैः क्षतानि करजैश्च विपाटितानीत्यादि (ध्व. आ. ३/४४ वृ:)। अत्र रक्तचित्तादि- तत्समानविशेषणेन नायिकारूपान्यार्थप्रतीतिलक्षणया समासोक्त्या सङ्कीर्णः कथं मुनीनां दन्तक्षतादिस्पृहेति विरोधो यस्तेन वाक्यार्थीभूतस्य दयावीरस्य सङ्कीर्णत्वम्। संसृष्टालङ्कारसंसृष्टो वाक्यार्थध्वनिर्यथा—(ध्व. आ. ३/४४ वृ:) **अहिणअपओअरसिएसु पहिअसामाइएसु दिअहेसु। सोहइ पसारिअगिवाण णच्चिअं मोरवन्दाणं॥** (गा. स: (६/६०) अत्राभिनवपयोदरसितेषु पथिकश्यामायितेषु पथिकानां प्रियावियुक्तानां मोहकारित्वेन निशायितेषु दिवसेषु शोभते प्रसृत (प्रसारित) ग्रीवाणां नृत्यं मयूरवृन्दानाम् इति वाच्ये विश्रान्ते 'पहिअ'-'सामाइअ'-शब्दशक्त्याऽऽक्षिप्ता अभिनवेषु प्रयोगरसिकेषु पथिकसामाजिकेषु नृत्यं नटानां यथेति श्लेषः प्रतीयमानोऽनुरणनेन। पथिकश्यामायितेष्वत्यत्र श्यामा इवावरन्तीत्युपमा पथिकसामाजिकेष्वित्यत्र पथिका एव सामाजिका इति रूपकसाम्यादुपमारूपकीभ्यां

शब्दशक्त्युद्भवानुरणनरूपस्य व्यङ्ग्यस्य ध्वनेः संसृष्टत्वम्। शृङ्गारादिरसानामानन्त्यञ्च प्रागेव प्रतिपादितम्। तदित्थं ध्वनेर्गुणीभूतस्य यदानन्त्यं तेनैषामन्यतमेनापि प्रकारेण भूषिता भारती पुरातनकविनिबद्धार्थसंस्पर्शवत्यपि नवत्वमायातीति कविप्रतिभाऽऽनन्त्यं निरन्तरकाव्यस्यानन्त्यमप्यस्य प्रयोजन-(ध्व. आ. ४/२ द्र:) मिति दर्शितं भवति। तथाच ध्वनि-कारः—ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्याध्वा प्रदर्शितः। अनेनान्त्यमायाति कवीनां प्रतिभा-गुणः॥ (ध्व. आ. ४/१) इति।

एवञ्चाजानिकं यद्यपि ध्वनेरानन्त्यं तथापि सङ्कलनाद्यात्मोपाधिकं भेदमाश्रित्याह संकलनेनेति। वस्तु-मात्रालङ्काररसाद्यात्मकतया हि व्यङ्ग्यस्त्रिधा। अविचित्रमिति यत् पूर्वमपि न क्वापि वाक्यार्थेऽलङ्कारभावमन्वभू-दिति तद्रूपाभावेनोपलक्षितं विधिनिषेधाद्यनेकप्रकारं वस्तुमात्रमुच्यते। एतद्विपरीतन्तु विचित्रमिति। व्यङ्ग्यत्वादलङ्कार्यत्वेऽलङ्कारव्यपदेशो न विरुध्यत इति प्रतिपादयितुं सोपपत्ति दृष्टान्तमाह ब्राह्मणेति। रसादिल-क्षणस्त्विति तु शब्दो व्यतिरेके। वस्त्वलङ्कारौ स्वशब्दाभिधेयत्वमपि कदाचिदध्यासाते, अतो वाच्यव्यङ्ग्यरूपतया तौ द्विप्रकारौ। रसादिरूपस्त्वर्थो न कदाचिद्वाच्यः किन्तु वाच्यसामर्थ्याक्षिप्त एव प्रकाशत इत्यन्वयव्यतिरेकाभ्यां दर्शयति स हीत्यादि। तथाचोक्तम्—**रसोद्देशपरः श्लोको रसाध्याये मुनेश्च यः। पूर्णो नवरसास्वादात् स एव स्यात्तु नाटकम्**॥ इति॥ (का. कौ. अभि. भा. १४आ:) केवलविभावादिवर्णने त्वस्ति रसादिप्रतीतिर्यथा (कु. स. ३/६८) विवृण्वती शैलसुताऽपि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः। साचीकृता चारुतरेण तस्थौ मुखेन पूर्णेन्दुवि-लोचनेन॥ इत्यादौ। अत्रहि अनुरागजन्यावस्थाविशेषानुभाववद्गिरिजालक्षणविभाववर्णनामात्रादेव रसप्रतीतिः। यत्रापि हि 'पुटपाकप्रतीकाशो रामस्य करुणो रसः' (उ. रा. च. ३/१) इत्यादौ रसादिशब्दः श्रूयते तत्रापि विशिष्टवि-भावादिप्रतिपादनमुखेनैव रसादिप्रतिपत्तिः, स्वशब्देन सा केवलमनूद्यते (ध्व. १/४ वृ:)। आदिशब्दात् स्थायिभा-वादयः। एवं हि वाच्यत्वेऽभिनयादिरूपं लिङ्गमकिञ्चित्करं स्यात्, इतिहासादिसमत्वञ्च काव्यस्य प्राप्नोति—तस्मात् स्थितमेतद्व्यङ्ग्य एव रसादिरिति। नापि लक्ष्यस्तत्सामग्रीविरहात्।

## दीपिका

प्रभूततरेति। शुद्धा ध्वनिगुणीभूतव्यङ्ग्यभेदाः सजातीयविजातीयवाच्यालङ्कृतिभिः शुद्धसजातीयवि-जातीयसङ्कीर्णसंसृष्टाश्चेत्यानन्त्यम्। एषाञ्चोदाहृतयो दर्शितप्राया एवेति पृथङ्नोपन्यासः। शृङ्गारस्य असंलक्ष्य-क्रमध्वनिविशेषस्येत्यर्थः। सर्वेषां निखिलध्वनिगुणीभूतव्यङ्ग्यभेदानां तत्तद्व्याख्यानभङ्गिभिर्विभक्तानामित्यर्थः।

सम्प्रति विषयान्तरविप्रतिपत्तिनिराकरणद्वारैकत्वघटनेन प्रचुरसिद्धान्ततत्त्वप्रटनाय उक्तानुक्तसमुच्चयनेन वृत्तिकृद्वितततवितत प्रकरणमारभते—सङ्कलनेनेति। संक्षेपेणेत्यर्थः। ध्वनेः।

इदमुपलक्षणं गुणीभूतव्यङ्ग्यस्यापि बोद्धव्यम्। त्रिरूपत्वाद् वस्तुमात्रालङ्कृतिरसादिरूपेण। वैचित्र्य-मुपमाऽद्यलङ्कृतिसाजात्यम्, तद्रहितमविचित्रमिति हेतोर्वस्तुमात्रविचित्रमुच्यते। अलङ्काररूपमलङ्कारसगोत्रम्।

रसादिलक्षण इति। लक्ष्यते ज्ञायतेऽनेनेति लक्षणं नाम, रसादिः शब्दो लक्षणमस्येति रसादिलक्षणो भवादिरर्थः। तु वस्त्वलङ्कृतिव्यतिरेके। एतदेवान्वयव्यतिरेकाभ्यामुपपादयति—स हीति। तत्प्रयोगे रसादिशृ-ङ्गारादिपदप्रयोगे। तदुक्तम्—

**रसोद्देशपरः श्लोको रसाध्याये मुनेस्तु यः।**
**पूर्णः सर्वरसास्वादात् स (?) एव स्याच्च नाटकम्॥ इति।**

तदप्रयोगेऽपीति। यथा ममैव—

**शोच्यां तेऽङ्ग (शोच्यामग्नि) मुखक्षिप्तक्षीरधारामिव प्रियाम्।**
**तां विना मृगशावाक्षीं किं फलं जीवितेन मे॥**

अत्र हि रसादिपदमृतेऽप्यविभक्त आस्वादः सहृदयहृदयसाक्षिकः संवलितविभावादिमूल एवावसीयते। विभावाद्यभिधानद्वारेण अभिहितविभावादिद्वारेण। प्रतीयत इति। प्रतीतिरेव भगवती स्वाभिन्ने तस्मिन् प्रमाणमित्युक्तयुक्तिसचिवसमृद्धिबलेनाभिधादिविलक्षणां वृत्तिमाक्षिपतीति भावः। निश्चीयत इति। ततश्च यत्र क्वचन विवादे रसादिपदस्य च साहित्यं विभावादिरेव यत्र प्रतीतिबीजम्, रसादिपदं त्वकिञ्चित्करमेव।

अत एव तत् प्रत्युत दोषतया वक्ष्यते। उपसंहरति—तेनेति।

ननु विभावादिवाचकपदानां तावद्रसास्वादशक्तिर्भवताऽपि स्वीक्रियते। सा च सङ्केतानपेक्षित्वादभिधाविलक्षणा लक्षणारूपाऽस्तु, अभिधालग्नशरीरत्वात्। एवञ्च शब्दशक्तिमात्रेणैव रसादिप्रतीतौ निर्व्यूढायामभिहिताविभावादौ शक्त्यन्तरमनङ्गीकार्यमिति चेत्? तत्राह—मुख्येति। संवलितविभावादिविज्ञानानन्तरमेव हि रसाद्यास्वादोऽनुभूयते। न च विभावादिपदानां लाक्षणिकत्वाङ्गीकारे विभावादिसंवलनज्ञानमात्मानमासादयितुमीष्टे, लक्षणायां मुख्यार्थान्वयाभावात्।

तस्माद्रसादौ शब्दस्यावापोद्वापदृष्टिसिद्धान्वयव्यतिरेकानुविधानस्याभिधालक्षणाऽतिरिक्ता विभावादेश्व व्याप्त्यादिविरहेणानुमानादिविलक्षणां काञ्चन शक्तिं खण्डपण्डितानां शिरसि वामपादविन्यासपूर्वकमखिलामेव त्रिलोकीमध्यापयामः।

## दर्पणः

स्वप्नेऽपीति। सर्वथेत्यर्थः। तस्यावाच्यत्वे हेतुमाह स हीति। हि यस्मात्। तस्य रसादिपदस्य शृङ्गारादिपदस्य वा प्रयोगे। तदप्रयोगेऽपीति। "शून्यं वासगृहमि"त्यादौ विभावादिसामग्र्या। एवं च "शृङ्गारः सखि मूर्तिमानिव मधौ मुग्धे हरिः क्रीडती"त्यादौ विभावादिसामग्र्या एव तद्व्यञ्जकत्वम्। न च शृङ्गारादिपदस्य प्रधानरसस्य स्वशब्दवाच्यत्वे दोष इति वक्ष्यते।

अर्थान्तरेति। वाच्यपदस्य प्रत्येकमन्वयः। प्राक् लक्षणानिरूपणप्रस्तावे। शब्देति। "भद्रात्मन" इत्यादौ नियन्त्रणेनाशक्यान्तरस्याभिधाने निर्विवादमिति तत्रैवास्मद्व्याख्यारीत्या। अर्थेति। विशेषे संसृष्टकरेणायुज्यते न शक्यते, अनन्तदोषादित्यर्थः।

## साहित्यचूडामणिः

अत्र ध्वनिग्रन्थं संवादयति—सगुणीभूतेति। यद् व्याख्यातं वृत्तौ 'स्वप्रभेदसंकीर्णः स्वप्रभेदसंसृष्टो गुणीभूतव्यङ्ग्यसङ्कीर्णो गुणीभूतव्यङ्ग्यसंसृष्टो वाच्यालङ्कारसङ्कीर्णो वाच्यालङ्कारसंसृष्ट' इत्यादि।

सर्वेषां सङ्कलन इति । लोष्टसञ्चारक्रमेण गुणने कृते । यदाह—

**ध्वनेरित्थं गुणीभूतव्यङ्ग्यस्य च समाश्रयात् ।**
**न काव्यार्थविरामोऽस्ति यदि स्यात् प्रतिभागुणः ॥ ध्व. ४.६ ॥**

इति । यच्चोक्तं विषमबाणलीलायां—

**ण अ ताण घडई ओही ण अ ते दीसन्ति कहवि पुनरुत्ता ।**
**जे विब्भमा पिआणं अत्था वा सुकविवाणीणं ॥ इति ।**

एतदशेषोदाहरणं विरिञ्चेनापि दुष्प्रपञ्चम् ।

**अयं विदग्धैरुपलालनीयो ध्वनिर्गुणीभावतिरोहितोऽपि ।**
**पदातिसाधारणवेषधर्मा क्रीडन् विनोदादिव सार्वभौमः ॥**

नन्वित्थमस्तु ध्वनीनामानन्त्यं, तत् कथलङ्कारमस्य विभागव्यवहारकौतूहलमित्यत्राह—'किं पुनरिति । किन्त्वित्यर्थः । त्रयो भेदा इति । संक्षेपतो विभाग इति यावत् । ननु कोऽयं ध्वनिर्नाम । नैष चारुत्वस्थानं, शब्दार्थ—रूपत्वाभावात् । नापि चारुत्वहेतुः, गुणालङ्कारव्यतिरिक्तत्वात् । न चासौ नृत्तगीतादिवत् काव्यस्योपयोगी । कवनीयं हि काव्यं, न च नृत्तगीतादि कवनीयमिति स्वरूपमेव ध्वनेर्निर्णेतव्यमिति किमुत त्रैविध्यमिति चेद् । उच्यते । न तावद् विप्रतिपत्तिस्थानमसदेव, प्रत्युत सिद्धे धर्मिणि धर्ममात्रकृता विप्रतिपत्तिः । अन्यथा साधनदूषणानां निरधिष्ठानत्वप्रसङ्ग इत्यस्ति तावद् ध्वनिः । स एव मुख्यं चारुत्वस्थानम् । उपचारात् तु शब्दार्थौ । तत एवायं चारुत्वहेतुः । न खलु शवकलेवरस्य किञ्चिदलङ्कारौचित्यम् । तस्मादयमेव कवनीयो यदर्थो व्यतिरिक्तः प्रयासः । अलङ्कारग्रन्थेष्वप्रसिद्धिर्विरुद्धो हेतुः, तत एव प्रयत्नेन लक्षणीयत्वात् । तदयमत्र प्रयोगः 'प्रसिद्धं वाच्यं धर्मि तद्व्यतिरिक्तेन प्रतीयमानेन तद्वत् सदाभासमानत्वात् लावण्योपेताङ्गनाङ्गवत् । लावण्यं चाङ्गनावयवसंस्थानाभिव्यङ्ग्यमवयवव्यतिरिक्तं च धर्मान्तरम् । यदाह—

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।**
**यत्तत् प्रसिद्धावयवातिरिक्तमाभाति लावण्यमिवाङ्गनासु ॥ ध्व. १.४ ॥ इति ।**

अलमुद्ग्रन्थाटोपपाटवेन । त्रैविध्यस्य हेतुमाह—व्यङ्ग्यस्येति । यथा व्यञ्जकवैचित्र्याद् ध्वनिवैचित्र्यम्, एवं व्यङ्ग्यवैचित्र्यादपि । उक्तं च वार्तिके—

**ध्वननं ध्वन्यते तद्व व्युत्पत्त्या ध्वनतीत्यपि ।**
**व्यञ्जनाख्या परा शक्तिः क्रमेणार्थो रसादिकः ॥**

**वाच्यादिरर्थः शब्दश्च वाचकप्रभृतिर्ध्वनिः ।**
**एषां चतुर्णां संसृष्टिः प्रबन्धोऽपि महाध्वनिः ॥**

**स च त्रैविध्यमास्थाय काव्यालोकोक्तशिक्षया ।**
**वस्तुमात्रमलङ्कारो रस इत्यपि भिद्यते ॥ इति ।**

त्रैविध्यं समर्थयितुं द्वैविध्यं तावदाह—

किञ्चिदिति। व्यङ्ग्यं वस्तु वाच्यतां सहते न पुनरतिशेते। अन्यथेति। वाच्यतां न सहते अतिशेते वाच्यत्वगन्धमपि नानुमन्यते। प्रथमस्य भेदस्य पुनर्द्वैविध्यमाह—वाच्यतेति। अवैचित्र्यं चित्रत्वं च व्याचष्टे वस्तुमात्रमिति। मात्रग्रहणेन वैचित्र्यरूपं रूपान्तरं निरस्यते। चित्रम् अलङ्काररूपं, तद्विपर्यये वाक्यार्थमात्रं यदविचित्रमुच्यते। तत्र प्रतिपादितपूर्वौ शङ्कापरिहारौ प्रतिपत्तिसौकर्याय भूयः स्मारयति यद्यपीति। अथ किञ्चित् त्वन्यथेति यदुक्तं तत् प्रपञ्चयति—रसादीति। रसभावादिस्वभावं वस्तु वाच्यतावार्तामपि न वेदितुमर्हति। यदुक्तं—"तृतीयस्तु स्वप्नेऽपि न स्वशब्दवाच्यः, न लौकिकव्यवहारपतितः, किन्तु शब्दसमर्प्यमाणहृदयसंवादसुन्दरविभावानुभावसमुचितप्राग्विनिविष्टरत्यादिवासनानुरागसुकुमारस्वसंविदानन्दचर्वणाव्यापाररसनीयरूपः। स एव मुख्यतयात्मे"ति। अथ स्वशब्दवाच्यस्थानौचित्यं प्रकटयति 'स ही'ति। वाचकशब्दः सामान्यविशेषभावाद् द्विधा। उभयत्राप्यनौचित्यम्। यदि चाभिधीयेत तदा 'शृङ्गारहास्ये'त्यादिश्लोकपाठादेव सकलरसचर्वणोत्पत्तिप्रसङ्गः। रसशृङ्गारादिशब्दप्रयोगेऽपि विभादिनामप्रयोगे तस्य रसादेरप्रतिपत्तेः विपर्यये तदौचित्याच्च। किञ्च विभावादिरर्थोऽपि न पुत्रजननन्यायेन काञ्चित् चित्तवृत्तिं जनयतीति नीत्या जननातिरिक्तोऽर्थस्यापि व्यापारो ध्वननमेव। फलितमर्थमाह—तेनेति। अथ लक्षणीयो भवतीत्याह—मुख्यार्थेति।

## सम्प्रदायप्रकाशिनी

यद्येवं किमत इत्याह—अन्योन्ययोगादिति। एवमन्योन्ययोगान्निमित्ताद् भेदप्रभेदानामतिभूयसी संख्या।

प्रभूततरेति। ईयसुनोऽर्थः। तामेवातिप्रभूततरतामनुस्मारयति—तथा हीति सर्वेषामिति। रसान्तराणां वस्त्वलङ्कारध्वनीनां चेत्यर्थः। तर्हि अनवच्छिन्नाः केनोपाधिनावच्छिद्य व्यवह्रियन्त इत्यत आह—सङ्कलनेन पुनरिति। सङ्कलना संग्रहः। त्रिरूपत्वादिति संकलने हेतुः। तामेव त्रिरूपतां विविच्य दर्शयति—तथा हीत्यादिना। वाच्यतां सहत इति। यद् वस्तुरूपमलङ्काररूपं च व्यङ्ग्यं तद्धि वाच्यतयापि निबन्धुं शक्यते। किञ्चित् त्वन्यथेति। यत्तु रसभावादिरूपं न हि तद् वाच्यतां सहते। तथापि कथं त्रिरूपतेत्यत आह—तत्र वाच्यतासहमित्यादि। अत्रायं सम्प्रदायः—यद्धि लोके जातिगुणादि वस्तु तदेव कविकल्पितवैचित्र्यमन्तरेण प्रतीतं वस्तुमात्रमुच्यते, वैचित्र्यसध्रीचीनतया त्वलङ्कार इति। व्यङ्ग्यदशायामलङ्कार्यस्य सतोऽप्यलङ्कारव्यपदेशो भूतपूर्वगत्येत्यनुस्मारयति—यद्यपि प्राधान्येनेति। इत्थं व्यङ्ग्यस्य त्रैरूप्यात् त्रिधा ध्वनिभेदसङ्कलनेति यावत्। ननु रसादिरर्थो वाच्यतां न सहत इति कथमेतदित्यत आह—स हि रसादिशब्देनेत्यादि। यदि रसादिरभिधीयते, सामान्यवाचिना रसभावादिशब्देन विशेषवाचिना वा शृङ्गाररतिभावादिशब्देनाभिधीयते, न चाभिधीयते, विभावादिप्रयोगैकान्वयव्यतिरेकानुविधानादित्यर्थः। यत इत्थं नाभीधीयते, तेनासौ व्यङ्ग्य एव। ननु जीवन्त्यां लक्षणायां कथं व्यङ्ग्यतैवेति प्रतिज्ञायत इत्यत आह—मुख्यार्थेति।

## मधुमती

व्यञ्जनां साधयितुमाह—सङ्कलनेनेति । उपलक्षणसिद्धमिति सङ्कलनेनेत्यर्थः । पुनः संक्षेपे तु—द्वावेव भेदौ द्रष्टव्यौ ।

किञ्चिदिति । स्वशब्देनाभिधीयमानमपि चमत्कुरुते इत्यर्थः । किञ्चित्त्विति । स्वशब्देनाभिहितः न चमत्कुरुते इत्यर्थः । यद्यपि अलङ्कारवस्तुनोरपि अलङ्कारोपमादिपद-वस्तुपदार्थादिपदाभ्यां उपादाने न चमत्कारः इति, न तावपि वाच्यतासहौ । तथापि वाक्यार्थप्रतीतिविषयत्वमेव वाच्यतासहत्वम्, रसादिस्तु तत्प्रतीति विषयोऽपि न भवतीति भावः ।

अभिधीयेत चर्व्येत । न चाभिधीयते न च चर्व्यते । एतदेव साधयति—तत्प्रयोगेऽपीति । ननु—

**शृङ्गारी गिरिजानने, सकरुणो रत्यां, प्रवीरः स्मरे,**
**बीभत्सोऽस्थिभिः, उत्फणी च भयकृत्, मूर्त्याऽद्भुतस्तुङ्गया ।**
**रौद्रो दक्षविमर्दने च, हसकृन्नग्नः, प्रशान्तश्चिरात्**
**इत्थं सर्वरसात्मकः पशुपतिः भूयात् सतां भूतये ॥**

इत्यादौ शृङ्गारादिपदादपिरसः चर्व्यते इति वाक्यार्थप्रतीतिविषयताऽपि रसादीनां दृश्यते इति, कथं तेषां व्यञ्जनैकविषयत्वं उच्यते ? इति चेत्—न । तत्रापि सति चमत्कारे—गिरिजापदेन अनुरागाधिक्यप्रतीतिरूपप्रयोजनवत्या उपादानलक्षणाया सतीत्वेन पार्वतीरूपं विभावं उपस्थापयता पूर्वजन्माक्षिप्यमाणोद्दीपनविभावानुभावव्यभिचारिभिः रसाभिव्यञ्जनात् चमत्कारोदयस्य विभावनीयत्वात् । विभावाद्यभिव्यक्तस्यैव शृङ्गारादिपदैः अनुवादात् । उक्तं च ध्वनिकृता—'स्वशब्देन केवलमनूद्यते' इति । शृङ्गारोद्देशरूपप्रयोजननिष्पादनाय शृङ्गारपदेन तदनूद्यते इत्यर्थः । व्यङ्ग्य एवेति । व्यञ्जनाविषय एव चमत्कारगोचरः इत्यर्थः ।

मुख्यार्थबाधा (द्य) भावात् इत्यापाततः । परमार्थतस्तु 'प्रयोजनाभावात्' इति द्रष्टव्यम् ।

## विस्तारिका

ध्वनिगुणीभूतव्यङ्ग्यभेदात् निरूप्य सम्प्रति व्यञ्जनायां वादिविप्रतिपत्तिनिरासाय प्रकरणान्तरमाह—सङ्कलनेनेति । संक्षेपेणेत्यर्थः । अस्य प्रकृतस्य गुणीभूतव्यङ्ग्यसंवलितस्य गुणीभूतव्यङ्ग्यस्य ध्वनेश्चेत्यर्थः । वस्त्वलङ्काररसादिभेदेन त्रैरूप्यम् । किञ्चिद् वस्त्वलङ्काररूपम् । वाच्यतां सहते, स्थानान्तरे तत्सजातीयस्याभिधेयत्वात् । तत्र तयोर्मध्ये । अविचित्रं शोभाऽनाधायकम्, विचित्रं शोभाधायकोपमादिसजातीयम् । साजात्येनालङ्कारपदप्रयोगः, ध्वनिभूतस्य तस्य सर्वैरलङ्कार्यत्वात् । तदाह—यद्यपीत्यादि । तद् विचित्रं ध्वनित्वादलङ्कार्यम् । स्वप्नेऽपीत्यन्तासम्भावनायाम् । 'तत्' पदेन रसादिशृङ्गारादिशब्दानुकर्षणम् । उभयसंवलनेनाभिधानमित्याह—तत्प्रयोगेऽपीति । यथा—'शून्यं वासगृहम्' इत्यादौ । रसादिपदेभ्यस्तु विभावादिव्यङ्ग्यस्थायित्वेन रत्यादेरज्ञानम्, समूहालम्बनस्वरूपस्य स्वप्रकाशत्वात् । अत एव "शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम्" इत्यादौ अस्यानुवादः, यत्र तु मुख्यतस्तदभिप्रायेण रसादिप्रयोगः, तत्र स्वपदाभिधानं दोष इति वक्ष्यते ।

ननु रसस्य विभावादिसंबलनरूपत्वेन विभावादिभिधानमेव तदभिधानमित्याह—विभावाद्यभिधानद्वारेणैवेति। विभावाद्युपस्थाप्य विरतायास्तदभिधाया न रसविषयत्वमिति भावः। नियतपूर्ववर्तित्वेन द्वारत्वम्, एतेन तदपेक्षाया आवश्यकत्वकथनम्। अन्वयव्यतिरेकाभ्यां निश्चीयत इत्यन्वयः। ननु वृत्त्यभावात् कथं प्रतीयत इत्याह—व्यङ्ग्यम एवेति। व्यञ्जनयैवावगम्यत इत्यर्थः।

अथ विभावाद्यभिधायकेभ्यस्तत्प्रतीतेर्नियमेन तत्र तेषां शक्त्यभावाल्लक्षणाऽस्त्वित्याह—मुख्यार्थेत्यादि। न खलु तात्पर्यविषयविभावाद्यन्वयबोधः, येन सा स्यात्। रसस्य पदार्थान्वयत्वविरहेण तत्तात्पर्यानुपपत्तेर्लक्षणाबीजताविरहात्। न वा तैः सह रसस्य योगोऽस्ति, बोध्यबोधकत्वाख्योऽसाविति चेत्, नः 'व्यञ्जनाभ्युपगमेन तद्विरहात्। व्यञ्जकस्यव्यङ्ग्यभावेनैव तत्त्वात्। न च लक्ष्यलक्षकभावेनैव तथा लक्षणासिद्धौ तत्सिद्धिः, तत्सिद्धौ च लक्षणासिद्धिरित्यन्योन्याश्रयापत्तेः। ज्ञाप्यज्ञापकभावेन च नाविनाभावः सम्बन्धः, रूढ्यभावः स्फुट एव। विभावाद्यभिधायकप्रयोगमात्रेण रसस्याप्रतीतेः। न च रसलक्षणायां प्रयोजनान्तरं रसपर्यन्तेनैव प्रतीतिविश्रान्तेरित्याह—बाधाद्यभावादिति।

## सारबोधिनी

संप्रति व्यञ्जनायां वादिविप्रतिपत्तिनिरासाय प्रकरणान्तरमारभते। सङ्कलनेनेति। सङ्कलनं संग्रहः। संक्षेप इति यावत्। केनाप्युपाधिना एकीकरणं ध्वनेर्ध्वननव्यापारोपहितस्य तेन गुणीभूतव्यङ्ग्यस्यापि संग्रहः। त्रिरूपत्वात् वस्त्वलङ्काररसादिरूपत्वात्। सहत इति वाच्यमपि कर्तुं शक्यत इत्यर्थः। तच्च वस्त्वलङ्काररूपम्। किञ्चिदिति। रसादिरूपम्। रसादिति लक्षणशब्दो लक्ष्यते। ज्ञाप्यतेऽनेनेति नामार्थः। आदिशब्दाद्भावादिपरिग्रहः। स्वप्नेऽपीति। सर्वथैवेत्यर्थः। अत्र हेतुमाह स हीति। हि यस्मात्। अभिधानं चर्वणेति केचित् तन्न तथा सति लक्षणापत्तेः। वस्तुतस्तु अभिधीयेतेत्येव पाठः। लिङर्थस्तु चर्वणारूपेष्टसाधनत्वम्। तदिति। तस्य रसादिपदस्य शृङ्गारादिपदस्य वा। प्रयोगेऽपीत्यर्थः। अप्रतिपत्तेरिति। अचमत्कारित्वादित्यर्थः। विभावादिति। तेन विभावादिघटितसामग्र्या एव तद्व्यञ्जकत्वं न रसादिपदस्य, प्रत्युत तस्य स्वशब्दवाच्यत्वे दोष इति वक्ष्यते। प्रतीयत इति चमत्कारविषयीक्रियत इत्यर्थः। तेनासौ व्यङ्ग्य एवेति। चमत्कारगोचर इति शेषः। नन्वलङ्कारादेरप्यलङ्कारपदेनोपादाने उपमादिपदेन वा न चमत्कारः प्रादुर्भवतीति कथं रसादिवैलक्षण्यमिति चेन्न। तेषां पदसमन्वयबलेन क्वचित्प्रतीतानामपि चमत्कारित्वदर्शनात् नैवं रसादीनामिति तेषां विभावादिष्टद्वारकैवप्रतीतिः। अथ विभावादिवाचकेभ्यो रसप्रतीतिनियमेन तत्र तेषां शक्त्यभावाल्लक्षणास्तु इत्याशङ्क्य निराकरोति।

## काव्यप्रदीपः

**अन्योन्ययोगादेवं स्याद्भेदसंख्यातिभूयसी ॥ ३ ॥**

एवं ध्वन्यादिभेदैस्तत्प्रभेदैश्च योजनेऽतिप्रभूता संख्या भवतीत्यर्थः। एतैः प्रभेदैरूपनिबध्यमानः पुरातनोऽप्यर्थो नवीभवतीति सप्रयोजनं ध्वनिभेदोपदर्शनम्।

यदुक्तं ध्वनिकृता—

**'ध्वनेर्यः स गुणीभूतव्यङ्ग्यस्यात्मा निदर्शितः।**
**एतेनानन्त्यमायाति कवीनां प्रतिभागुणः ॥ इति।**

तदेवमनन्तानां ध्वननव्यापारयोगिनां ध्वनीनां गुणीभूतव्यङ्ग्यानां च काव्यभेदानामनुगतोपाधिना संकलने त्रयो भेदाः। व्यङ्ग्यस्य त्रिरूपत्वात्। तथा हि किंचिद्व्यङ्ग्यं वाच्यसहं किंचिच्च तदसहम्। वाच्यत्वसहत्वं त्वभिधया प्रतिपाद्यमानस्यापि चमत्कारकारित्वम्। तयोराद्यं वस्तुमात्रमलंकारश्च। अलंकारस्य प्राधान्येऽपि यथालंकारत्वं तथोक्तं प्राक्। रसादिलक्षणस्त्वर्थो न कदाचिदपि वाच्यत्वं सहते। स हि सामान्यतो रसभावादिपदैर्विशेषतः शृङ्गारनिर्वेदादिपदैर्वाभिधीयमानश्चमत्कारकारी स्यात्। न त्वेवम्। अभिधानेऽपि विभावाद्यप्रतीतौ चमत्काराभावात्। विभावादिप्रतीतौ त्वनभिधानेऽपि व्यक्तस्य चमत्कारकारित्वादित्वन्वयव्यतिरेकाभ्यां विभावादिमुखेनैव प्रतीयमानस्तथेति निर्णीयते। तेनासौ व्यङ्ग्य एव चमत्कारी। ननु विभावादिवाचकपदैर्लक्ष्य एवास्तु रसादिः। न हि विभावादिवाचिपदं विना तत्प्रतीतिरिति चेत्, न। मुख्यार्थ बाधादिविरहात्।

## आदर्शः

सङ्कलनेन पुनरिति। गुणीभूतव्यङ्ग्यमपि न पृथक्, किन्तु व्यङ्ग्यवत्काव्यमेव ध्वनिरिति सङ्कलनम्। त्रिरूपत्वादिति वाच्यतासहस्य वस्त्वलङ्काररूपत्वाद् द्वैविध्यं वाच्यताऽसहन्त्वेकमिति त्रिरूपत्वम्। वाच्यतासहमिति, व्यङ्ग्ययोर्वस्त्वलङ्कारयोर्वाचकेन शब्देनापि तत्रैव काव्ये वक्तुं शक्यत्वात्। किञ्चित्तु अन्यथेति रसादिलक्षणस्यार्थस्य तत्काव्यस्थशब्देनोक्तौ तु रसादित्वमेव न तस्य सम्भवतीति स्वयमेव व्याख्यास्यति। यद्यपीत्यादेरर्थः प्रागेव व्याख्यातः। स हीति, 'रसादिशब्देने' त्यत्र तत्काव्यस्थेनेति शेषः। 'तत्प्रयोगे' तत्काव्यमध्ये तत्प्रयोगे। तेनासौ व्यङ्ग्य एवेति, अनेन वाच्यतामात्रनिरासः साक्षात्कार्यत्वन्तु सिद्धान्तितमेवेति बोध्यम्। नन्वेवं रसादिरूपविषयनियन्त्रितैव व्यञ्जनावृत्तिरस्तु नान्यविषयेत्यत आह—अर्थाऽन्तरेति। प्राक् प्रतिपादितमिति, यस्य प्रतीतिमाधातुमित्यादिना नाभिधा समयाभावादित्यादिना एवमप्यनवस्था स्यादित्यादिना चेत्यर्थः। ननु तथाऽपि शब्दशक्तिमूला व्यञ्जना नाद्रियतामित्यत आह—शब्दशक्तिमूलेत्विति। अनभिधेयस्येति अभिधामात्रेण प्रतिपादयितुमशक्यस्येत्यर्थः, केवलाया अभिधाया प्रकरणादि कुण्ठितत्वादिति भावः। व्यञ्जनासहकारिणाभिधायास्तु तद्बोधकत्वमस्त्येवेति बोध्यम्। तेन सहेत्युपमाध्वनौ बोध्यम्। निर्विवादमिति शक्तिमात्रजन्यबोधादस्य बोधस्य वैलक्षण्यानुभवेन निर्विवादमित्यर्थः।

## सुधासागरः

एवमनेनेत्यादि। अत्रेदमवधेयम्—

**शुद्धैः सहैकपञ्चाशद्भेदैर्भेदा यथा ध्वनेः।**
**सङ्कीर्णा हि समाख्याताः शरेषुयुगखेन्दवः (१०४५५) ॥**

**शुद्धैः शरयुगव्यक्तैः (४५) सहात्रापि तथा बुधैः।**
**गुणीभूतव्यङ्ग्यभेदा बाणाब्धीन्दुगजाः (८१४५) स्मृताः।**

**मध्यमोत्तमयोरेवं भेदयोर्गुणने पुनः।**
**भूताश्वाङ्केषुशरभूबाणस्तम्बेरमा मताः (८५१५५९७५) ॥**
**चतुर्भिर्गुणने प्राग्वद् विज्ञेया गणकोत्तमैः।**
**खाकाशाङ्काग्निपक्षर्त्तुव्योमचारिधिवह्नय[३४०६२३९००] ॥**

गुणनप्रकारस्तु—

**गुण्यान्त्यमङ्कं गुणकेन हन्यादुत्सारितेनैवमुपान्त्यमादीन्।**
**गुण्यस्तथोऽधो गुणखण्डतुल्यस्तैः खण्डकैः सङ्गुणितो युतो वा॥**

इत्यापि लीलावत्यादौ द्रष्टव्यः।

**एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः।**
**अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात्॥**

इत्यादिदशगुणोत्तरा संख्याऽपि ज्योतिःशास्त्रे प्रसिद्धा। प्रकृताङ्कगुणने त्वयं लघुसरलप्रकारः—

**गुण्याङ्को गुणकाङ्कश्च बिन्द्वन्तः सम्भवेद् यदि।**
**बिन्द्वधो बिन्दवः स्थाप्याः शेषाङ्कं गुणयेत् तदा॥**

तथा चात्र गुण्याङ्के चत्वारः खण्डाः। न्यूने गुणकाङ्केऽपि तावन्त एव। तत्र बृहत्खण्डयोः परस्परं गुणनेऽष्टकोटयः (८००००००००)। गुणकद्वितीयखण्डेन शतात्मकेन पुनस्तद्दशसहस्रात्मकखण्डगुणने प्रयुतम् (१००००००)। गुणकतृतीयखण्डेन चत्वारिंशदात्मकेन पुनस्तत्खण्डगुणने लक्षचतुष्टयम् (४०००००)।चत्तुर्थखण्डेन पञ्चात्मकेन पुनस्तत्खण्डगुणने पञ्चाशत्सहस्राणि (५००००)। अथ गुण्यद्वितीयखण्डेन शतचतुष्टयात्मकेन गुणप्रथमखण्डस्याष्टसहस्रात्मकस्य महत्तया गुणने लक्षद्वयाधिकं प्रयुतत्रयम् (३२०००००)। तृतीयेन पञ्चात्शद्रूपेणन पुनस्तत्खण्डगुणने लक्षचतुष्टयम् (४०००००)। चतुर्थेन पञ्चात्मकेन पुनस्तद्गुणने चत्वार्ययुतानि (४००००)। अथ गुणकद्वितीयखण्डेन गुण्यद्वितीयखण्डगुणने चत्वार्ययुतानि (४००००)। गुणकतृतीयखण्डेन चत्वारिंशदात्मकेन पुनस्तद्गुणने षोडशसहस्राणि (१६०००)। चतुर्थेन पञ्चात्मकेन पुनस्तद्गुणे सहस्रद्वयम् (२०००)। अथ गुण्यतृतीयेन पञ्चाशद्रूपेण गुणकद्वितीयस्य शतात्मकस्य गुणने पञ्चसहस्राणि (५०००)। चतुर्थेन पञ्चात्मकेन पुनस्तद्गुणने पञ्चशती (५००)। अथ गुणकतृतीयेन चत्वारिंशद्रूपेण गुण्यतृतीयस्य गुणने सहस्रद्वयम् (२०००)। गुण्यचतुर्थेन पञ्चात्मकेन पुनस्तद्गुणने पञ्चाशदधिकं शतद्वयम् (२५०)। अथ गुण्यचतुर्थेन पञ्चात्मकेन गुणकतृतीयस्य चत्वारिंशदात्मकस्य गुणने शतद्वयम् (२००)। चतुर्थेन चतुर्थस्य गुणने पञ्चविंशतिः (२५)। सर्वेषां संमेलनेऽष्टकोटयः लक्षाधिकानि पञ्चप्रयुतानि पञ्चसहस्राणि नवशतानि पञ्चोत्तरा सप्ततिश्च (८११५५९७५)। चतुर्भिः संसृष्ट्यादिप्रकारैर्गुणने अर्बुदत्रयम्, कोटिचतुष्टयम्, लक्षषट्कम्, अयुतद्वयम्, सहस्रत्रयम्, नवशतानीत्युक्ता काव्यभेदानां सङ्ख्या सम्पद्यते (३४०६२३९००)।

**दिक्प्रदर्शनमेतच्चालङ्कारोद्भूतसङ्करैः ।**
**परार्द्धाधिकतां याति गणनेति न दर्शिता ॥**

प्रकृतमनुसरामः । एवं ध्वन्यादिभेदैस्तत्प्रभेदैश्च योजनेऽतिप्रभूता सङ्ख्या भवतीत्युदाहर्त्तुमशक्यमिति तात्पर्यम् । एतैः प्रभेदैरुपनिबध्यमानः पुरातनोऽप्यर्थो नवनवीभवतीति न व्यर्थं ध्वनिभेदानन्त्यप्रदर्शनम् । तदुक्तं ध्वनिकृता—

**ध्वनेर्यः सगुणीभूतव्यङ्ग्यस्यात्मा निदर्शितः**
**एतेनानन्त्यमायाति कवीनां प्रतिभागुणः ॥ [ध्व. ४.१ इति ।**

ननु ध्वनिगुणीभूतव्यङ्ग्ययोः सङ्करो न प्रत्येतुं शक्यते, अनयोः सामानाधिकरण्यासम्भवादिति चेत् । न । चित्रेण चित्रव्यञ्जने व्यङ्ग्यत्वविवक्षया ध्वनित्वेऽपि चित्रत्वविवक्षयोभयोस्तुल्यप्राधान्याद् गुणीभूतत्वमिति द्वयमपि विवक्षाभेदाचमत्कारप्रयोजकम् । एवमचित्रेणाचित्रव्यञ्जने व्यञ्जकस्याचित्रत्वाद् व्यङ्ग्यस्याचित्रत्वात्प्राधान्यविवक्षया ध्वनित्वम् । उभयोरचित्रत्ववक्षया तुल्यप्राधान्याद् गुणीभूतव्यङ्ग्यत्वमपीति दिशा सर्वे सहृदयहृदयारूढा इति श्रीवाग्देवतावतारप्रतिपादितेऽर्थे न कदाचिदप्रामाण्यशङ्कोदेतीति मन्तव्यम् ।

सम्प्रति व्यञ्जनायां वादिविप्रतिपत्तिनिरासाय प्रकरणान्तरमारभते—सङ्कलनेन पुनरस्य ध्वनेरित्यादि । अयमाशयः—एवमनन्तानां ध्वननव्यापारयोगिनां ध्वनीनां गुणीभूतव्यङ्ग्यानां च काव्यभेदानामनुगतोपाधिना सङ्कलने त्रयो भेदाः, व्यङ्ग्यस्य त्रिरूपत्वात् । सङ्कलनं सङ्ग्रहः सङ्क्षेप इति यावत् । सङ्कलनव्यवकलनव्यवहारो वेदान्तिनां समष्टिव्यष्टिव्यवहारवज्जयोतिःशास्त्रे गणितग्रन्थेषु प्रसिद्धः । अत्र त्रिषु विश्रामो व्यञ्जनादाढ्र्यप्रतिपादनाय । अधिकतरसङ्क्षेपेऽविवक्षितवाच्यविवक्षितान्यपरवाच्यावेव द्वौ भेदौ अधिकतमसङ्क्षेपे त्वेकमेव सर्वोत्थानबीजं स्फोटात्मकं व्यङ्ग्यम् । तदेव च 'एकमेवाद्वितीयं ब्रह्म' इत्यादिश्रुतिप्रतिपाद्यं सच्चिदानन्दरूपं सगुणनिर्गुणविलक्षणं वस्त्विति बोध्यम् । तदेत्सर्वं श्रीवाग्देवतावतारैः सङ्कलनव्यवकलनाभ्यां ब्रह्माण्डावयवगणनायामानन्त्यम्, विराड्रूपेत्वेकत्वमिति व्यञ्जनद्वारा ध्वनितमिति सद्भिर्न विस्मर्त्तव्यम् । तथा हि—किञ्चिदित्यादिना व्यङ्ग्यस्य त्रिरूपतां दर्शयन्नेव लोकोत्तरवृत्तिं द्रढयति । अयमाशयः—किञ्चिद् व्यङ्ग्यं वाच्यत्वसहं किञ्चिच्च तदसहम् । वाच्यत्वसहत्वंत्वभिधया प्रतिपाद्यमानस्यापि चमत्कारकारित्वम् । तयोराद्यं वस्तुमात्रमलङ्कारश्च । अलङ्कारस्य प्राधान्येऽपि यथाऽऽलङ्कारत्वं तथोक्तं प्राक् । रसादिलक्षणस्त्वर्थो न कदाचिदपि वाच्यत्वं सहते । स हि सामान्यतो रसभावादिपदैर्वा विशेषतः शृङ्गारनिर्वेदादिपदैर्वाऽभिधीयमानश्चमत्कारकारी स्यात्, नत्वेवम्, अभिधानेऽपि विभावाद्यप्रतीतौ चमत्कारभावात् । विभादिप्रतीतौ त्वनभिधानेऽपि व्यक्तस्य चमत्कारकारित्वादित्यन्वयव्यतिरेकाभ्यां विभावादिमुखेनैव प्रतीयमानस्तथेति निर्णीयते, तेनासौ रसादिर्व्यङ्ग्य एव चमत्कारगोचर इति स्थितम् ।

ननु विभावादिवाचकपदैर्लक्ष्य एवास्तु रसादिः । न हि विभावादिवाचिपदं विनाऽपि तत्प्रतीतिरिति चेत् । न । मुख्यार्थबाधादिविरहात् । अत एव भूबृहस्पतिना जयरामन्यायपञ्चाननेन व्याख्यातम्—ननु विभावादिवाच-

केभ्यो रसप्रतीतिनियमेन तत्र तेषां शक्त्यभावाल्लक्षणास्त्वित्यत्राह—मुख्यार्थेति । ननु यष्टीः प्रवेशयेत्यादाविव तात्पर्यविषयानुपपत्त्या लक्षणास्त्वित्यत्राह—आदीति । एवमपि सामाजिकरत्यादौ रामसीतादिपदार्थसम्बन्धाभावान्न लक्षणेत्यर्थः । ज्ञाप्यज्ञापकभावत्वलक्षणयोगस्तु वृत्तिं विनाऽसिद्धः ।

किञ्च विभावादिवाचकपदानां रसादौ न रूढिलक्षणा रसादिवाचकत्वप्रसिद्धेरभावात् । नापि प्रयोजनवती, सा हि द्विविधा । अर्थान्तरसङ्क्रमितवाच्याऽत्यन्ततिरस्कृतवाच्या च । यत्र मुख्योऽर्थः स्वेन रूपेणोपयोगबाधितो रूपान्तरेणावगम्यते तत्राद्या । न चात्र विभावादयोऽनुपयुक्ताः, न वा रूपान्तरेणावगम्यन्ते । यत्र च स्वार्थस्यात्यन्तं तिरस्कारस्तत्रान्त्या । न च प्रकृते विभावादयो न प्रतीयन्ते तत्समूहालम्बनरूपत्वाद्रसस्य । किञ्च रसादौ लक्ष्ये न प्रयोजनान्तरसम्भवः, स्वप्रकाशानन्दमयसंविद्विश्रान्तिरूपत्वाद्रसादीनाम् । अथात्र प्रयोजनं विनाऽपि लक्षणाऽऽद्रियतामिति चेत् । न । हेतुत्रयमपेक्ष्य लक्षणा भवतीति नियमात्तदन्तरेण भवन्ती वृत्तिस्तदन्यैव व्यञ्जना नाम, मात्सर्यमात्र तर्ककर्कशैर्लक्षणोच्यते इति सुधीभिर्न विस्मर्त्तव्यमिति दिगिति ।

---

अर्थान्तरसंक्रमितात्यन्तिरस्कृतवाच्ययोर्वस्तुमात्ररूपं व्यङ्ग्यं विना लक्षणैव न भवतीति प्राक् प्रतिपादितम् ।

शब्दशक्तिमूले तु अभिधाया नियन्त्रणेनानभिधेयस्यार्थान्तरस्य तेन सहोपमादेरलङ्कारस्य च निर्विवादं व्यङ्ग्यत्वम् ।

अर्थशक्तिमूलेऽपि विशेषे सङ्केतः कर्तुं न युज्यत इति सामान्यरूपाणां पदार्थानामाकांक्षासन्निधियोग्यतावशात्परस्परसंसर्गो यत्रापदार्थोऽपि विशेषरूपो वाक्यार्थस्तत्राभिहितान्वयवादे का वार्त्ता व्यङ्ग्यस्याभिधेयतायाम् ।

---

**सङ्केतः**

वस्तुमात्रेति । आस्तां रसरूपं व्यङ्ग्यं दूरे तावत् इत्यर्थः । प्रागिति । 'सहिता तु प्रयोजने' इत्यत्र । एतेन लक्षणाऽपि व्यङ्ग्यं विना न स्यादित्यर्थः । ततः यदा लक्षणायां वस्तुरूपमपि व्यङ्ग्यं न लक्ष्यत्वमागतम्, तदा कथं रसादेः लक्ष्यतेति ।

अर्थान्तरस्य अप्राकरणिकस्य तेन अर्थान्तरेण सह उपमादेः अलङ्कारस्य ।

न युज्यते इति । सङ्केतो हि न नियते विशेषांशे, आनन्त्यात् व्यभिचाराच्च । सामान्यरूपाणाम्—सामान्यभूतस्वार्थमात्रविश्रान्तानाम्, संसर्गः विशेषणविशेष्यभावरूपः अन्वयः । अपदार्थोऽपीति । 'अपि'शब्दः व्यवहितक्रमः । तेन यदा वाक्यार्थोऽपि अपदार्थः—अनभिधेयः, तदा—उक्तानां पदानां उत्तरकालं अन्वयं अन्योन्यानुकूल्यरूपं वदतां मते व्यङ्ग्योऽर्थः अपदार्थ एव अनभिधेय एवेत्यर्थः । तत्र—विशेषरूपः इति ।

'सामान्यानि अन्यथासिद्धेः विशेषं गमयन्ति हि ।'इतिन्यायात् इत्यर्थः ।

**बालचित्तानुरञ्जनी**

शब्दशक्तीति । शब्दशक्तिमूलानुरणरूपव्यङ्ग्ये ध्वनौ "गावो वः पावनानामि"त्यादौ नियन्त्रणेन प्रकरणनैयत्येनानभिधेयस्यावाच्यस्य सुरभिलक्षणस्यार्थान्तरस्य व्यङ्ग्यत्वम् । तेन व्यङ्ग्यरूपेणार्थान्तरेण सह प्राकरणिकस्यार्थस्योपमानोपमेयभावपरिकल्पनात् । उपमादेरलङ्कारस्य व्यङ्ग्यत्वं च सर्वसंमतमिति भावः । अर्थशक्तिमूले कथमित्याशङ्क्याह । अर्थशक्तिमूले ध्वनौ व्यङ्ग्यस्याभिधेयतायां का वार्तेति सम्बन्धः । विशेषे व्यक्तिविशेषे सङ्केतः कर्तुं न शक्यते । आनन्त्यात् व्यभिचारादिति भावः । सामान्यारूपाणामिति सामान्यभूतस्यार्थमात्रविश्रान्तानामित्यर्थः । तथा चोक्तम्-सामान्ये हि पदं प्रवर्तते, विशेषे वाक्यमिति । प्रतिपत्तुर्जिज्ञासा आकाङ्क्षा । आकांक्षितस्य नैकट्यं संनिधिः । संबन्धार्हत्वं योग्यता । एतत्त्रियवशात् संसर्गे सति विशेष्यविशेषणभावलक्षणः

परस्परमनुकूले अन्वये सति अपिशब्दो भिन्नक्रमः। यत्र वाक्यार्थोऽपि अपदार्थः पदैरनभिधेयः तदभिहितानां पदार्थानां उत्तरकालान्वये परस्परानुकूललक्षणं [?] वदतां भाट्टदीनां मते व्यङ्ग्योऽभिधेयो न भवतीति किं वक्तव्यमित्यर्थः।

**काव्यादर्शः**

न हि विभावानुभावादौ मुख्येऽथ बाधास्ति, येन लक्षणा स्यात्। काव्यात्मकशब्दनिष्पीडनेनैव रसचर्वणादर्शनात्। अत एवालक्ष्यक्रमो रसादिः। अविवक्षितवाच्येऽपि 'त्वामस्मिवच्मि'इत्यादौ वस्तुमात्रं व्यङ्ग्यं, न लक्ष्यमित्याह—अर्थान्तरेति। प्राक्प्रतिपादितमिति। 'सहिता तु प्रयोजने' इत्यादौ लक्षणा ह्यमुख्यार्थविषयो व्यापारो, ध्वननं च प्रयोजनविषयम्। ततो मुख्यार्थबाधादिसामग्रीमनपेक्ष्यैव व्यङ्ग्यार्थविश्रान्तिरिति वस्तुनोऽपि व्यङ्ग्यस्य न लक्ष्यत्वम्।

शब्दशक्तिमूलेत्विति। शब्दशक्तिमूलानुरणरूपव्यङ्ग्ये ध्वनौ 'गावो वः पावनानाम्' इत्यादौ प्रकरणनैयत्येन अनभिधेयस्य सुरभिलक्षणस्यार्थान्तरस्य व्यङ्ग्यत्वम्। तेन सहोपमावाचकपदविरहेऽप्युपमाप्रतीतश्च। न युज्यत इति। समयो हि तावत्येव, न विशेषांशे आनन्त्याद् व्यभिचाराच्च एकस्य। सामान्यरूपाणामिति। सामान्यभूतस्वार्थमात्रविश्रान्तानाम्। यदुक्तम् 'सामान्ये हि पदं वर्तते, विशेषे वाक्यम्' इति। संसर्ग इति। विशेषणविशेष्यभावलक्षणे परस्परानुकूल्येऽन्वये। अपदार्थोऽपीति, अनभिधेय इत्यर्थः। विशेषरूप इति। 'सामान्यानि अन्यथासिद्धेर्विशेषं गमयन्ति हि' इति न्यायात्। अपि-शब्दो भिन्नक्रमे। ततो वाक्यार्थोऽपि यत्र अपदार्थोऽनभिधेयस्तत्र अभिहितानां पदार्थानामुत्तरकालमन्वयं परस्परानुकूल्यलक्षणं वदतां मते व्यङ्ग्योऽर्थोऽनभिधेय एव।

**विवेकः**

एवञ्च रसस्य व्यङ्ग्यत्वमेवेति निर्णीय वस्तुनोऽलङ्कारस्य [च] क्रमेण दर्शयति। तत्र विवक्षितवाच्यस्य प्रकारद्वयेऽपि वस्तुमात्रस्य व्यङ्ग्यत्वं द्वितीयोल्लासे प्रतिपादितमेव। शब्दशक्तिमूले तु वस्तुनो व्यङ्ग्यत्वं ध्वनिकाराभिप्रायेण सविवादम्, अलङ्कारस्य तु निर्विवादमेवेति। एवमर्थशक्तिमूले तु वस्तुनोऽलङ्कारस्य च व्यङ्ग्यत्वमिति त्रयाणामपि व्यङ्ग्यत्वं निर्णीतम्।

तत्र मतद्वयेऽपि व्यङ्ग्यस्य वाच्यत्वं निराकुर्वन्नभिहितान्वयवादिनो भट्टाचार्यस्य तावन्मतमाह विशेष इति। समयः पदार्थमात्रे सामान्यात्मनि न विशेष्यांशेऽस्यानन्त्यात्, व्यभिचाराच्चैकस्य। ततश्चाकाङ्क्षाऽऽदिसहकृतविशेषसंसर्गरूपे वाक्यार्थे तात्पर्यशक्तिः परस्परान्विते सामान्यमनन्ययासिद्धेर्विशेषं गमयतीति न्यायात्। यदाह 'पदानि स्वं स्वमर्थमभिधायोपरतव्यापाराणि, अथेदानीं पदार्थाः प्रतिपन्ना आकाङ्क्षासन्निधियोग्यताभिरन्वयमुपयान्तो वाक्यार्थमवगमयन्तीति' (श. व्या. वि.)। नन्वेवमशब्दो वाक्यार्थः स्यात्? नैवम्, पारम्पर्येणापि तदुपपत्तेः। तथाहि पदैरनन्वितोऽर्थोभिहितोऽन्वितप्रतिपत्तौ निमित्तमिति भवति। पारम्पर्येण पदार्थानामन्वितेष्वपि हेतुत्वं यत् स एवाह—न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः। तन्मात्रावसितेष्वेषु तन्मात्रेभ्यः स गम्यते॥ इति (श्लो. वा. ७/२२९) पदार्थप्रतिपादनञ्च वाक्यार्थप्रतिपत्तये प्रयुक्तानां पदानामवान्तरव्यापारो भविष्यति।

नचावान्तरव्यापारस्य कारकान्तरेष्वपि व्यवधायकत्वमिष्यते, पाकजननसमर्था हि ज्वाला काष्ठानामवान्तरव्यापारः। तथाच त एवाहुः। (श्लो. वा. ७/३४३) वाक्यार्थमतये तेषां प्रयुक्तं नान्तरीयकम्। पाकज्वालेव काष्ठानां पदार्थप्रतिपादनम्॥ इति। तदित्थं वाक्यार्थप्रतिपत्तेरन्यथाऽप्युपपद्यमानत्वादभिधाशक्तेश्चेद्विशेष्योपस्थितिपर्यन्ततोऽपि नेष्यते तदा पदपदार्थविषयाभिधानलक्षणप्रथमकक्षाऽतिरिक्तविशेष्यप्रतीतिकक्षाऽन्तरितक्रियाकारकसंसर्गात्मकवाक्यार्थकक्षापातिनि व्यङ्ग्ये तस्य सम्भावनाऽपि न प्रसरतीत्याह का वार्तेति। अतएव हि यो यः कश्चिद्विपश्चिच्छब्दार्थप्रत्ययं नाभ्युपैति तेन तेन पदार्थमपनुद्य न विद्यत एवाभिधायाः पद्धतिरिति(ती) रीतं (रितं) [तत्] तु [कः]स्वीकुर्यात्। तदुक्तं 'विशेषरूपवाक्यार्थमपदार्थमपीच्छता। व्यक्तिरिष्टाऽभिधातोऽन्याऽभिहितान्वयवादिना॥ इति।

## दीपिका:

किञ्च, रसादौ लक्षणाऽङ्गीकारेऽपि रूढिविरहात् प्रयोजनलक्षणाऽङ्गीकार्या। तच्च प्रयोजनं विलक्षणव्यापारवेद्यमेवेति। पूर्वोक्तदिशा घट्टकुट्यामेव प्रभातं भवतीत्याहं—अर्थान्तरेति। वाच्यपदस्य प्रत्येकमन्वयः। प्राक् प्रतिपादितम्। साधारण्यादत्रापि प्रसज्येदित्यर्थः। अस्माच्च वाक्यादन्यपरादपि लक्षणामूलस्थले बृत्त्यन्तरोपपत्तिः संगृहीता भवति।

सम्प्रत्यभिधामूलयोर्वस्त्वलङ्कृत्योः स्वरूपं संगृह्णाति—शब्देति। नियन्त्रणेन शब्दभेदादेव शब्दस्वरूपनिश्चयेन, शक्तिमात्रभेदे शक्त्यन्तरस्य स्थगनेन, तदभेदेऽपि तद्विषयान्तरव्यवच्छेदेन। अर्थान्तरस्य। अप्राकरणिकस्यात् एवानभिधेयस्य। उपमादेरलङ्कारस्येति। तत्सम्भवस्थलेपि, अन्यत्र तु केवलार्थान्तरस्य। निर्विवादमिति। लक्षणाद्यनुमानादिनिरासस्य सुकरत्वात्। एतच्चास्माभिः प्रकाशितमेव। अर्थशक्तिमूलयोस्तु वस्त्वलङ्कृतोर्व्यङ्ग्यत्वं सुप्रतिपादम्।

सम्प्रति सर्वत्रैव वाक्ये पदार्थप्रत्ययावान्तरव्यापाररूपपदबोध्यतयाऽर्थशक्तिमूलो वाक्यार्थः पदानां तुर्य्यवृत्तिबोध्य एव अभिहितान्वयेऽन्विताभिधाने चेत्याह—अर्थेति। विशेषे संसृष्टाकारे सङ्केतः कर्तुं न युज्यते न शक्यते, आनन्त्यव्यभिचाराभ्याम्। सामान्यरूपाणां विशकलिताकाराणां पदार्थानां पदैरभिधया बोधितानां गवादीना।

यद्वा भट्टदिशा विशेषे स्वलक्षणे सामान्यरूपाणां पदार्थानां गोत्वादिसामान्यानामेव पदैरभिहितानामविनाभावबलाक्षिप्तस्वलक्षणानाम्, नैयायिकादिनीत्या तु विशेषे प्रस्तुतोपयोगिनि तत्कालासन्निधानान्त्यव्यभिचारैः सङ्केतस्याशक्यतया गोत्वादिसामान्यावच्छेदितया पदैरभिहितानाम्। परस्परसंसर्गो विशेष रूपो द्वितीयलक्षणोपनीतः। अपदार्थः पदार्थऐस्मृतिसंसर्गोपनीतिसाचिव्यापेक्षितया पदमात्रालभ्यो विशेषरूपः संसृष्टाकारो वाक्यार्थो वाक्येनार्थ्यमानः प्रवृत्तिनिवृत्तियोग्यतया वाक्यप्रवृत्तिविषयः। का वार्ता। दूरविप्रकर्षादिति भावः। व्यङ्ग्यस्य संसृष्टाकारवाक्यार्थपाश्चात्त्यस्य वस्तुनोऽलङ्कारस्य चेत्यर्थः।

एतदुक्तं भवति "शब्दबुद्धिकर्मणां विरम्य व्यापारविरहः" इति नीत्या विशकलितक्रियाकारकस्वरूपमात्रोपनयनादेवाभिधालक्षणयोर्गलिते प्रयोजने इति दिशा पदार्थसंसर्गातिरिक्ते—

प्रधानगुणभावेन लब्धान्योऽन्यसमन्वयात्।
पदार्थमेव वाक्यार्थं सङ्गिरन्ते विपश्चित॥

प्रवृत्तिनिवृत्तियोग्ये कारकपदार्थसंसृष्टक्रियादिविधेयपदार्थरूपे वाक्यार्थे द्वितीयलक्षणाऽधिका वृत्तिः काचिदाश्रयणीया। न चासावभिधादिः, तासां विरतत्वात्।

नानुमानादिः, शब्दस्य पृथक्प्रामाण्यभङ्गप्रसङ्गेन तौतातिकनैयायिकादीनामपसिद्धान्तापातात्। पृथक्प्रामाण्यानङ्गीकारवादिनं प्रति तु त एव प्रतिभटीकार्याः। किञ्चानुमानत्वेऽप्यभिधादितो वृत्त्यन्तरवादो न व्याहतः। यत्र क्वचिदपि वाक्यश्रवणानन्तरं व्युत्पत्त्याद्यनुसन्धानविलम्बासंवेदनेऽपि यद्यनुमानकल्पनोपास्यते तदा सविकल्पप्रत्यक्षादिस्थलेऽपि तत्कल्पनाभावे को नाम दण्डधरः?

किञ्चतानि पदानि ससंसर्गज्ञप्तिपूर्वकाणि, आकाङ्क्षादिमत्त्वाद् मदुच्चारितवदित्यनुमानरीतिरङ्गीकार्या। न चोपदेशानन्तरमीदृशी बुद्धिरनुभूयते, नापीदृगाकारं वाक्यार्थबोधनं नाम पदार्थाभिधानकाल एव वाक्यार्थावगतिः। न तु पदानां साक्षादुक्तिरिति चेत्, न शब्दस्य प्रामाण्यव्याकोपात्, प्रमाणानन्तरापातप्रसङ्गाच्च।

न च संसर्गवेदनेऽपि संसृष्टाकारवेदनं न्याय्यम्, 'दण्डी देवदत्तः' इत्यादावदर्शनात् दण्डाद्यवेदनेऽपि प्रसङ्गात्।

तस्मात् पदार्थसंसर्गं संसृष्टाकारे च वाक्यार्थेऽभिधालक्षणाभ्यामधिकां पदानां वृत्तिं स्वयमुररीकृत्य तात्पर्यव्यञ्जनानामनी यथारुचि निविश्येतामित्यार्यमिश्रान् विज्ञापयामः। नास्माभिर्भवत्पादप्रसादप्राप्तविज्ञानलवगर्वदुर्विदग्धैः सार्द्धमसमो विग्रहः कार्यः। वाक्यार्थपाश्चात्त्ययोस्तु वस्त्वलङ्कृत्योर्दण्डापूपिकान्याय एवेति किं तत्र वक्तव्यम्?

### दर्पणः

सामान्यरूपाणामिति विशकलिताकाराणां पदार्थानां पदैरभिधया बोधितानाम्। अत्र विशेषे सुलक्षणे सामान्यरूपाणां गोत्वादिसामान्यानामेव पदैरभिधानानन्तरं तद्विभावादाक्षिप्तसुलक्षणानाम्। नैयायिकमते तु विशेषे प्रस्तुतोपयोगिनि। ततो नानन्त्यव्यभिचारः। सङ्केतस्याशक्यतया जात्यवच्छेदकतया पदैरभिहितानां परस्परं ससंर्गे विशेषणरूपद्वितीयलक्षणोपनीते अपदार्थः एकैकपदलभ्यार्थः विशेषेण सहान्वितानामिति लक्षणास्वरूपः। वस्त्वलङ्काररूपस्य व्यङ्ग्यार्थस्य वाक्येऽपि पश्चाद्भागितया। शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति। येन अभिधावृत्तिबोध्यतया दुरधिप्रकर्षात् का कथेत्यर्थः।

### साहित्यचूडामणिः

अथ व्यङ्ग्यस्य सर्वत्र दुरपह्नवत्वमवबोधयितुमुद्युङ्क्ते—अर्थान्तरेति। प्रागिति। द्वितीयतुरीययोरुल्लासयोः। यस्मादविवक्षितवाच्यभेदावर्थान्तरसंक्रमितात्यन्ततिरस्कृतवाच्यो, अविवक्षायाश्चानुपयुक्तिरनुपपत्तिश्चेति द्वे तु मूलं, तद्द्वारा मुख्यार्थबाधादिसामग्री, तत्र फलावश्यंभावः, तच्च व्यञ्जनैकगम्यमिति।

अथासंलक्ष्यक्रमे विवक्षितान्यपरवाच्ये वाच्यतागन्धकणिकापि नास्तीति तदलङ्घयन्ननुरणन्यायेन संलक्ष्यक्रमे शब्दार्थोभयशक्तिसमुत्थिते क्रमेण व्यङ्ग्यस्य सौकर्यमाह—शब्देति । अभिधायाः सङ्केतसहायायाः । नियन्त्रणं संयोगादिभिः शृङ्खलनम् । अर्थान्तरस्य वस्तुमात्रस्य । तेन सह वस्तुमात्रेण साकम् । 'उल्लास्य कालकरवालमहाम्बुवाहमि'त्यादौ वर्णनीवृत्तान्तव्यतिरेकेण पर्जन्यवृत्तान्तरूपस्यार्थान्तरस्य पूर्व प्रतीतिः । तदनु तेन सहोपमालङ्कारो व्यङ्ग्य इति केचित् । अलङ्कार एव व्यङ्ग्यः अन्यत्सर्वं वाच्यमित्यन्ये । एकयैव हेलया तदुभयमपि व्यङ्ग्यमित्येके । न तत्रास्माकं पक्षपातः । सर्वथालङ्कारो व्यङ्ग्य एव । अथार्थशक्तिमूले विप्रतिपत्तिरित्यभिसन्धायाह—अर्थेति । प्रथममभिहितान्वयवादे व्यङ्ग्यं समर्थयते—विशेष इति । न युज्यते उक्तयुक्त्यानन्त्यादिदोषप्रसङ्गात् । अपदार्थोऽपीत्यत्र हेतुः विशेषरूप इति । सामान्याकारः पदार्था विशेषरूपश्च वाक्यार्थे इति व्यवस्थिततत्वात् । 'का वार्त्ते' ति । वाक्यार्थमतिक्रम्यावस्थानादिति ।

## सम्प्रदायप्रकाशिनी

इत्थं रसादेर्व्यङ्ग्यतामविवादसिद्धामुपदर्श्य लक्षणामूलस्य वस्तुध्वनेरपि तथासिद्धिं दर्शयति—अर्थान्तरसङ्क्रमितेत्यादिना । वस्तुमात्ररूपमिति । प्रयोजनस्य वस्तुरूपत्वाल्लक्षणामूलध्वनौ वस्तुमात्रम् । व्यङ्ग्यं विना लक्षणैव न भवतीति । मुख्यपरित्यागामुख्याश्रयणादिप्रयासाश्रयणमपि लक्षणायां प्रयोजनाय । यदि तदेव प्रयोजनं नास्ति, तदा मुख्यपरित्यागादेरयुक्तत्वाल्लक्षणैव न भवतीति प्रतिपादितं विवेचितं, द्वितीय इति शेषः ।

अथ शब्दशक्तिमूलानुरणनरूपे ध्वनौ वस्त्वलङ्काररूपतया यद् द्विरूपं व्यङ्ग्यं तस्य व्यङ्ग्यतायां विवाद एव नास्तीत्याह—शब्दशक्तिमूले त्विति । नियन्त्रणेनेति, अभिधाया इति शेषः । प्रकरणादिना अभिधाया नियन्त्रणादिति यावत् । अनभिधेयस्य अवाच्यस्य, उपलक्षणं चैतत्, मुख्यार्थबाधाद्यभावाल्लक्षयितुमप्यशक्यस्य । अर्थान्तरस्य प्राकरणिकेतरस्य । अनेन वस्तुध्वनावप्यविवादा सिद्धिर्दर्शिता । अथालङ्कारध्वनेरपि दर्शयति—तेन सहोपमादेरित्यादि । तेन सह व्यङ्ग्येन वस्तुना सह । व्यङ्ग्येन सह वाच्यस्य सादृश्यक्लृप्ताविति शेषः । तथा सादृश्यक्लृप्तौ योऽयमुपमारूपकादिरलङ्कारवर्गः प्रथते, तस्य च निर्विवादं व्यङ्ग्यत्वमित्यर्थः । अत्रायमाशयः—शब्दशक्तिमूलानुरणरूपो ध्वनिर्यदा सादृश्येतरेण सम्बन्धेन प्रवृत्तस्तदा वस्तुमात्रं व्यङ्ग्यं यदा तु सादृश्यसम्बन्धेन तदोपमादिरलङ्कारो व्यङ्ग्यः, उभयत्राभिधाया नियन्त्रणाल्लक्षणावृत्त्यसम्भवाच्च । अतो द्विरूपमप्येतद् व्यङ्ग्यमविवादसिद्धमिति ।

इत्थमलक्ष्यक्रमो लक्ष्यक्रमश्चेति ध्वनि द्विधा राशीकृत्य रसादिकमक्रमं, सक्रमेषु लक्षणामूलौ वस्तुरूपौ अभिधामूलानुरणनरूपौ वस्त्वलङ्कारात्मकौ च यथाक्रममवाच्यत्वेनावस्थाप्य क्रमप्राप्तस्यार्थशक्तिमूलस्य ध्वनेरवाच्यतामभिहितान्वयदृशा समर्थयति तावत्—अर्थशक्तिमूलेऽपि विशेष इत्यादिना । अभिहितान्वयवादिनो ह्येवमाहुः—शब्दः सङ्केतसहाय एव ह्यर्थमवगमयति । स यदि सङ्केतः पदार्थान्तरान्वयाद् विशिष्टे पदार्थे क्रियेत तदा प्रतियोगिनामानन्त्यादानन्त्यादयो दोषाः प्रसजेयुः । अतः केवले पदार्थे संकेतो युज्यत इति सामान्यरूपा एव पदार्थाः । ते च सङ्केतज्ञानमात्रात् प्रतीयन्ते । अथाकाङ्क्षासन्निधियोग्यतावशात् संसर्गे विशेषरूपो वाक्यार्थो द्वितीयकक्ष्यां समुल्लतीति । अथ शब्दसङ्गत्यापि व्याकुर्मः—विशेषे विशेष्यत इति विशेषः, पदार्थान्तरान्वितत्वेन विशिष्टे पदार्थ इत्यर्थः । सङ्केतः कर्तुं न युज्यत इति आनन्त्याद् यतः संकेतः कर्तुं न युज्यते ततः । सामान्यरूपाणा-

मिति। सामान्यरूपा एव पदार्थाः तेषां च। आकाङ्क्षासन्निधीति। आकाङ्क्षादिवशात् परस्परं संसर्गे। अपदार्थो विशेषेति। विशेषरूपत्वात् पदार्थातिरिक्तो वाक्यार्थो यत्राभ्युपगतस्तत्राभिहितान्वये वाक्यार्थानन्तरकक्ष्याभाविनो व्यङ्ग्यस्य वाच्यतायां वार्तैव का, यावता द्वितीयकक्ष्यापाती वाक्यार्थोऽप्यनभिधेय इत्युपालम्भनिष्कर्षः। यदाह—

**"विशेषरूपं वाक्यार्थमपदार्थमपीच्छता।**
**व्यक्तिरिष्टाभिधातोऽन्याभिहितान्वयवादिना॥"**

इति।

### मधुमती

अर्थेति। विशेषे व्यक्तौ। आनन्त्यव्यभिचाराभ्यामिति तात्पर्यम्। अपदार्थ इति। अन्यलभ्यत्वादिति भावः।

### विस्तारिका

ननु मा भवतु रसादौ लक्षणा, वस्तुनि व्यङ्ग्ये साऽस्त्वित्यत आह—अर्थान्तरसंक्रमितेत्यादि। रूढ्यभावेन प्रयोजनवत्यां लक्षणायां प्रयोजनस्य व्यङ्ग्यत्वमेव न लक्ष्यत्वम्, अनवस्थापत्तेरित्याह—प्रागित्यादि। प्रतिपादितम् "एवंमप्यनवस्था स्यात्" इत्यादिना। अभिधामूलवस्त्वलङ्कृतयोः समर्थयति—शब्दशक्तीत्यादि। अनभिधेयस्याभिधया बोधयितुमशक्यस्य। उपमादेरलङ्कारस्याभिधावृत्त्यभिधेयस्य। निर्विवादं शब्दबोध्यस्य वृत्तिविषयत्वनियमात्।

अर्थेत्यादि। विशेषे व्यक्तौ, विशेष्यत इति व्युत्पत्त्या। न युज्यते, आनन्त्यव्यभिचारापत्तेः। सामान्येत्यादि। सामान्यमेव रूपं विशेषकं येषाम्, सामान्यप्रत्यासत्त्याशक्तिग्रहकाले चक्षुः सन्निकृष्टतयाऽपगतानन्त्यव्यभिचारदोषाणामित्यर्थः। पदार्थानां पदप्रवृत्तिविशेष्याणाम् परस्पर संसर्गे तद्विषये। अपदार्थः प्रत्येकपदालभ्यः। विशेषरूपो वैशिष्ट्यात्मा पदार्थसंसर्गभागित्यर्थः। वाक्यार्थं आकाङ्क्षादिसचिवपदसमूहगम्यः। अभिहितान्ववादे जातिविशिष्टव्यक्तिशक्तिवादिनैयायिकनये। ननु संसर्गेऽपि कुब्जा शक्तिरिति चेत्, सत्यम्, तदंशे तस्या वृत्तित्वविरहात्। सम्बन्धिस्मारकज्ञानविषयसम्बन्धस्यैव वृत्तित्वात्। व्यङ्ग्यस्य वृत्त्यविषयवाक्यार्थप्रतीत्युत्तरकालीनत्वेन वृत्त्यन्तरासंस्पर्शिनः, का वार्ता दूरविप्रकर्षादित्यर्थः।

नन्वेवं पदार्थसंसर्ग इव व्यङ्ग्यार्थोऽपि वृत्त्यविषयो भासतामिति चेत्, न; तत्राकाङ्क्षादेस्तन्त्रत्वादनाकाङ्क्षादेरपि व्यञ्जनाप्रतिपत्तेरिति।

### सारबोधिनी

मुख्यार्थेति। न च तात्पर्यानुपपत्त्या लक्षणास्त्विति वाच्यम् अतात्पर्यविषयीभूतस्यापि ध्वननात्। न च योगोऽस्ति न च ज्ञाप्यज्ञापकभावयोगोऽस्तीति वाच्यम्। वृत्तिं विना तस्यैवासिद्धेः। नापि प्रयोजनमस्ति। न हि रसे लक्ष्ये प्रयोजनान्तरं रसपर्यन्तेनैव प्रतीतिविश्रान्तेरिति। ननु मा भवतु रसादौ लक्षणा, वस्तुनि व्यङ्ग्ये साऽस्त्विति।

अत आह अर्थान्तरसङ्क्रमितेत्यादि । **तत्र रूढ्यभावेन प्रयोजन**वत्यां लक्षणायां प्रयोजनस्य व्यङ्ग्यत्वमेव न लक्ष्यत्वमनवस्थापत्तेरित्याह प्रागिति । प्रतिपादितमेवमप्यनवस्था स्यादित्यादिना ।

शब्दशक्तीत्यादि । अनभिधेयस्य तदानीमभिधया बोधयितुमुपमादेरलङ्कारस्य चाभिधाप्रवृत्त्यविषयस्य निर्विवादि व्यङ्ग्यत्वम् । शाब्दबोधस्य वृत्तिविषयत्वानियमात् ।

अभिहितान्वयवादे व्यङ्ग्यस्याभिधेयतां निरस्यति अर्थेत्यादि । विशेषे तद्व्यक्तिविशेषे पदार्थसंसर्गे ना न युज्यते न शक्यते आनन्त्यात् व्यभिचाराच्च । वाक्यार्थस्यापूर्वत्वेन प्रागनुपस्थितेश्च । कथं तर्हि वाक्यार्थावगतिरित्याह आकाङ्क्षेति । अयमर्थः—पदार्थशक्तत्वेन ज्ञातं पदं स्वार्थस्मरणद्वारा आकाङ्क्षादिसांनिध्यात् समभिव्याहृतपदार्थेन सह स्वार्थान्वयं बोधयतीति कार्यकारणभावकल्पना । इयमेव संसर्गमर्यादेत्युच्यते । तथा च संसर्गमर्यादयैव वाक्यार्थबोध इति भाव इत्युक्तं प्राक् । इदं भट्टैकदेशिमते । भट्टैस्तु संसर्गांशे लक्षणाया एव स्वीकृतत्वात् । सामान्यरूपाणां जातिरूपाणां विशेषवपुर्वैशिष्ट्यात्मा । का वार्तेति । शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात् । व्यङ्ग्यस्य वाक्यार्थादपि दूरभावित्वाद्व्यङ्ग्यस्याभिधेयतायां कः प्रसङ्ग इत्यर्थः ।

## काव्यप्रदीपः

ननु व्यञ्जनायाः शशविषाणायमानत्वात्कुतो व्यङ्ग्यत्रैरूप्यकृतो भेद इति चेत्, उच्यते । लक्षणामूले वस्तुमात्रं व्यङ्ग्यं विना लक्षणैव न संभवतीति प्राक्प्रतिपादितम् । अभिधामूलेष्वपि शब्दशक्तिमूलो द्वितीयोऽर्थस्तेन सममुपमा वा व्यङ्ग्यैवेति निर्विवादम् । अभिधाया नियमनात् । अर्थशक्तिमूलेऽप्येवमङ्गीकर्तव्यम् । यतः पदेभ्यः प्रथमं पदार्थस्मृतिः । अथ पदार्थविशेषाणामन्वयविशेषरूपस्य वाक्यार्थस्य प्रत्ययः । ततो व्यङ्ग्यप्रतीतिरिति तृतीयकक्षायां कुतोऽभिधायाः प्रसरणम् । द्वितीयकक्षायामेव तदनपेक्षणात् । यतोऽभिहितान्वयवादेऽशक्य एवान्वय आकाङ्क्षादिवशेन प्रतीयते । शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति च सर्वसिद्धम् । येऽप्यन्विताभिधानवादिनः "देवदत्त गामानय" इत्यादिप्रयोजकवृद्धवाक्यं श्रुत्वा तदनन्तरं प्रयोज्यवृद्धेन सास्नादिमन्तमर्थमानीयमानमालोक्य अयमेतद्विषयकैतत्क्रियागोचरकार्यताज्ञानवांस्तद्विषयकचेष्टावत्त्वात्तद्विषयकप्रवृत्तिमत्त्वाद्वा मद्वदिति प्रयोज्यवृद्धस्य ज्ञानमनुमिमीते । ततः कारणं विना कार्यानुपपत्त्या अखण्डवाक्यास्यान्वयव्यतिरेकाभ्यां तज्ज्ञानेन कार्यत्वकारणत्वरूपां शक्तिमवधारयति । अथ ज्ञेयसंबन्धं विना वाक्यस्य सा शक्तिरनुपपन्नेत्यर्थापत्त्या अखण्डवाक्यार्थेनाखण्डवाक्यस्य वाच्यवाचकभावरूपं संबन्धमवधारयति ।

## आदर्शः

ननु तथाऽपि अर्थशक्तिमूला व्यञ्जना नाद्रियतां तदन्तिकमेव रन्तुमित्यादिबोधस्तु शक्त्यैवास्ताम्, न तु मानसस्तद्बोधः शब्दान्वयव्यतिरेकानुविधायित्वेन शाब्दत्वात्; नापि लक्षणया तद्बोधः, मुख्यार्थबाधाद्यभावात् । न च श्रुतशब्दस्य तत्र शक्तिग्राहकाभावात् कथं तत्र शक्तिग्रह इति वाच्यम्, अगृहीतयैव शक्त्या तद्बोधस्य स्वीकार्यत्वात् । न च तर्हि तत्र तादृशशब्दस्य शक्तो किं प्रमाणमिति वाच्यम्, लक्षणया अजन्यः शाब्दबोधः शक्तिजन्य एवेति व्याप्तेरेव तत्र प्रमाणत्वादित्यतस्तस्या व्याप्तेर्व्यभिचारमादौ नैयायिकमते दर्शयति—अर्थश-

क्तिमूलेत्विति। ननु शक्तिसहकालदृष्टव्यक्तिविशेष एव शक्तिग्रहः, तथाच शाब्दबोधविषये तद्भिन्नव्यक्त्यन्तर एव व्यभिचारो दर्श्यताम्, किं संसर्गे व्यभिचारप्रदर्शनेनेत्यतस्तत्रापि शक्तिर्गृह्यत एवेत्यती न व्यभिचारः, किन्तु तदीयसंसर्ग एव व्यभिचार इति दर्शयति— विशेषे सङ्केत इति। 'विशेषे' शक्तिग्रहकालदृष्टमात्रव्यक्तिविशेषे। न युज्यते इति आनन्त्यव्यभिचाराभ्यामिति भावः। 'सामान्यरूपाणां' सामान्यधर्मावच्छिन्नानाम्, तथाच सामान्यलक्षणयैव समस्तव्यक्तिषु शक्तिग्रह इत्यभिप्रायः। परस्परसंसर्गे इत्यत्र भासमानतया तैरभ्युपगत इति शेषः। 'यत्र' नैयायिकमते, अपदार्थः" पदाशक्यः 'विशेषवपुः' संसर्गरूपः, वाक्यार्थः' वाक्येनैव प्रतिपाद्यः। तथाच अशक्ये तत्रैव तद्व्याप्तेर्व्यभिचारोऽनेन दर्शितः। 'का वार्त्ता' कः प्रसङ्गः।

**सुधासागरः**

नन्वस्तु रसादौ व्यञ्जना, तदितरत्र तु तस्याः शशविषाणायमानत्वात् कुतो व्यङ्ग्यत्रैरूप्यकृतो भेद इत्याशङ्क्याह-अर्थान्तरसङ्क्रमितेत्यादि। अयमाशयः—लक्षणामूले वस्तुमात्रं व्यङ्ग्यं विना लक्षणैव न सम्भवतीति द्वितीयोल्लासे 'यस्य प्रतीतिमाधातुम्' इत्यादिमहता प्रबन्धेन प्रतिपादितम्। अभिधामूलेष्वपि शब्दशक्तिमूलो द्वितीयोऽर्थस्तेन सममुपमा व्यङ्ग्यैवेति निर्विवादम्। अभिधाया नियमनात्। शब्दबोध्यस्य वृत्तिविषयत्वनियमाच्च। प्रतिपादितं चैतदपि तत्रैव।

अथार्थशक्तिमूलयोर्वस्त्वलङ्कृत्योर्वाक्यार्थावगमोत्तरगम्यतयाऽभिहितान्वयेऽन्विताभिधाने च वृत्त्यन्तरेणैवावगम इत्यभिधातुमुपक्रमते—अर्थशक्तिमूलेऽपीत्यादि। विशेषे तद्व्यक्तिविशेषे पदार्थसंसर्गे वा न युज्यते न शक्यते आनन्त्याद् व्यभिचाराच्च। वाक्यार्थस्यापूर्वत्वेन प्रागनुपस्थितेश्च। सामान्यरूपाणां जातिरूपाणाम्। कथं तर्हि वाक्यार्थावगतिरित्यत आह—आकाङ्क्षेत्यादि। व्याख्यातमिदं द्वितीयोल्लासे। का वार्तेत्यादि। व्यङ्ग्यस्य वाक्यार्थादपि दूरभावित्वाद्भिधेयतायां कः प्रसङ्गः। अयमाशयः—अर्थशक्तिमूलेऽप्येवमङ्गीकर्तव्यम्। यतः पदेभ्यः प्रथमं पदार्थस्मृतिः, अथ पदार्थविशेषाणामन्वयविशेषरूपस्य वाक्यार्थस्य प्रत्ययः, ततो व्यङ्ग्यप्रतीतिरिति तृतीयकक्षायां कुतोऽभिधायाः प्रसरणम्, द्वितीयकक्षायामेव तदनपेक्षणात्, यतोऽभिहितान्वयवादेऽशक्य एवान्वय आकाङ्क्षादिवशेन प्रतीयते, 'शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव' इति च सर्वसिद्धमिति।

---

येऽप्याहुः—

शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति।
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया॥ १॥

अन्यथाऽनुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम्।
अर्थापत्त्याऽवबोधेत सम्बन्धं त्रिप्रमाणकम्॥ २॥

इति प्रतिपादितदिशा—

'देवदत्त गामानय' इत्याद्युत्तमवृद्धवाक्यप्रयोगाद्देशाद्देशान्तरं सास्नादिमन्तमर्थं मध्यमवृद्धे नयति सति अनेनास्माद्वाक्यादेवंविधोऽर्थः प्रतिपन्नः' इति तच्चेष्टयाऽनुमाय,तयोरखण्डवाक्यार्थयोरर्थापत्त्या वाच्यवाचकभावलक्षणं सम्बन्धमवधार्य बालस्तत्र व्युत्पद्यते। परतः 'चैत्र गामानय, देवदत्त अश्वमानय, देवदत्त गां नय' इत्यादिवाक्यप्रयोगे तस्य तस्य शब्दस्य तं तमर्थमवधारयतीति अन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिकारिवाक्यमेव प्रयोगयोग्यमिति वाक्यस्थितानामेव पदानामन्वितैः पदार्थैरन्वितानामेव सङ्केतो गृह्यते इति विशिष्टा एव पदार्था वाक्यार्थो न तु पदार्थानां वैशिष्ट्यम्।

---

सङ्केतः

येऽपीति। अन्विताभिधानवादिमतमेतत्। शब्देति। तत्र शब्दः श्रोत्रेण प्रत्यक्षः। वृद्ध-घटादिरूपाभिधेयौ तु चक्षुषा। प्रतिपन्नत्वमिति। 'अनेन अयमर्थः ज्ञातः' इति प्रतिपत्तिः। पदार्थानयननयनादिरूपचेष्टाहेतुकानुमानेन पश्यति परिच्छिनत्तीत्यर्थः। द्वयात्मिकामिति। वृद्धज्ञानान्यथानुपपत्त्या शब्दे वाचिकां पदार्थे च वाच्यां शक्तिमित्यर्थः। क्वचित्तु 'द्वयाश्रिताम्' इति पाठः। द्वयं शब्दार्थस्वभावम्। एवं त्रिप्रमाणं सम्बन्धं अर्थापत्त्यैव जानते। साक्षाच्छक्तिविषयतया हि व्यापारात् अर्थापत्तेः कारणता, पूर्वयोस्तु इतिकर्तव्यतारूपतेति भावः।

किञ्च अपरं व्याख्यानम्—ज्ञानान्यथानुपपत्त्या अर्थापत्तिप्रमाणेन द्वयाश्रितां शक्तिं पश्यति बालः। इत्थं त्रिप्रमाणं सम्बन्धं अवबुध्यन्ते—बुधाः प्रतिपादयन्ति। इति भावः। तच्चेष्टया मध्यमवृद्धचेष्ट्या। तत्र वाक्यवा-

क्यार्थविषये । अखण्डेति वाक्यवाक्यार्थविशेषणं लोकरूढ्या उक्तम् । यावता तु अन्वितवादिनां मते अखण्डौ वाक्यवाक्यार्थौ न स्तः । व्यवहर्तृगतयोः शब्दप्रयोगार्थप्रतिपत्त्योः अविभक्तोद्देश वाक्यवाक्यार्थनिष्ठतया पूर्वं हेतुमद्भावावगतौ सत्यां अखण्डत्वप्रतीतिः स्यादित्यर्थः । परतः तदनन्तरम् । तस्य तस्येति । तथाच वृद्धव्यवहार-पूर्विकैव सर्वा व्युत्पत्तिः, वाक्येनैव च वृद्धव्यवहारः । तत्र च यस्य पदस्यावापे यस्यार्थभागस्यावापः, यदुद्वापे च उद्वापः, तस्मिन्नर्थे तस्यैव शक्तिः अवधार्यते इत्यर्थः । यथोक्तम्—

**'व्यवहारेषु वृद्धानां वाक्यश्रवणभाविषु ।**
**आवापोद्वापभेदेन पदानां शक्तिनिश्चयः ।।'**

इति । 'चैत्र ! गामानय' इत्यादिवाक्येषु कदाचित् कस्यचित् शब्दस्य आवापः, कस्यचित् उद्वापः—परावृत्तिरिति यावत् । यथा—'देवदत्त ! अश्वमानय' इत्यत्र चैत्रस्योद्वापः देवदत्तस्यावापः, गोरुद्वापः अश्वस्यावापः, एवं 'देवदत्त ! गां नय' इत्यत्र तु आनयननयनक्रिययोः उद्वापावापौ इति । अन्वयव्यतिरेकाभ्यामिति । पदानां सङ्केतो गृह्यते इति योगः । प्रवृत्तिनिवृत्तिकारीति । प्रवृत्तिनिवृत्तिरूपो वृद्धव्यवहारः, प्रवृत्तिनिवृत्ती च विशिष्टार्थनिष्ठे, अतः विशिष्टे एवार्थे पदानां सम्बन्धावगतिः । वाक्यमेवेति । अनन्वितार्थपदप्रयोगे काऽपि प्रवृत्तिः न सिध्यतीति । पदानामिति । अन्वितानामिति शेषः । अन्वितैरिति । पदान्तरैः पदानां अर्थान्तरैश्चार्थानां अन्वयः इति भावः । विशिष्टा एवेति । विशिष्टा एव अन्विताः पदार्थाः पदानां अभिधेयाः, न तु पदार्था एव केवलाः इति भावः । अयमाशयः—वाक्यार्थस्तावत् क्रियाकारकयोगात्मा । कारकक्रियाश्च सम्बन्धाभिमुख्येन मिथोविरहासहिष्णुत्वेन अन्विता एव स्वशब्दैः उच्यन्ते इति । न त्विति । सामान्यत्वेन उक्तानां पदार्थानां पश्चाद्वैशिष्ट्यं तु न स्यादित्यर्थः ।

## बालचित्तानुरञ्जनी

अन्विताभिधानवादिमतेऽपि व्यङ्ग्यस्य वाच्यत्वं नोपपद्यत इत्याह येऽप्याहुरिति । ये अन्विताभिधानवादिनः तन्मतं प्रतिपादयितुमाह शब्दवृद्धेत्यादि । शब्दाश्च वृद्धाभिधेयाश्च तान् वृद्धयोः व्यवहारमाणयोः कियद्‌व्युत्पन्नः पार्श्वस्थो बालः श्रोतुर्मध्यमवृद्धस्य प्रतिपन्नत्वमर्थावगतित्वञ्च अर्थानयनलक्षणया चेष्टयानुमानेन पश्यति । ततो मध्यमवृद्धबुद्ध्यन्यथानुपपत्त्या शब्दैः प्रतिपादितां शक्तिं अर्थे च प्रतिपाद्य, तामवगच्छेत् । एवं च प्रत्यक्षानुमानार्थापत्तिलक्षणं त्रिप्रमाणकं संबन्धं बुद्ध्यन्ते लोकाः । अर्थापत्त्या, अर्थापत्तेः साक्षात् व्यक्तिविषयत्वात् इतरयोश्चार्थापत्तेरनुत्पादकत्वादिति भावः । प्रतिपादितदिशा प्रतिपादितप्रकारेण, तच्चेष्टया मध्यमवृद्धचेष्टया, तत्र वाक्यवाक्यार्थविषये, व्युत्पद्यते व्युत्पन्नो भवति । व्यवहर्तृगतयोः शब्दप्रयोगार्थप्रतिपत्त्योरविभक्तोद्देशवाक्यत्ववाक्यार्थनिष्ठतया पूर्वं हेतुफलत्वमनयोर्भवतीत्यर्थः । तर्हि व्युत्पत्तिः कथमत आह परत इति । परतः तदनन्तरम् । चैत्र गामानय देवदत्त अश्वमानयेत्यत्र आनयनक्रिययोरुद्वापावापौ, अन्वयव्यतिरेकाभ्यां पदानां सङ्केतो गृह्यत इति संबन्धः । प्रवृत्तिनिवृत्तीति वृद्धव्यवहाराभ्यां शब्दार्थसंबन्धाध्यवसायः । स च व्यवहारः प्रवृत्तिनिवृत्तिरूपः । प्रवृत्तिनिवृत्ती च विशिष्टार्थनिष्ठे इति । अतो विशिष्ट एव पदार्थे पदानां संबन्धाध्यवसाय इत्यर्थः । वाक्यमेवेति । अनन्वितार्थपदं प्रयोगयोग्यमिति प्रयोज्यं वाक्यमेवेत्यर्थः । अन्वितैः इतरपदार्थान्वितैः । विशिष्टा एवेति । अन्वितानां विशिष्टानामेव पदार्थानामभिधेयत्वम् । वाक्यार्थो हि क्रियाकारकसंसर्गरूपः । कारकाणां क्रियासंसर्गोन्मुखतया क्रियाणामपि कारकविरहासहिष्णुत्वेनान्वितानामेव स्वशब्दैरभिधानं भवतीत्यर्थः । एवकारव्यावर्त्यमाह

न्वितिति। सामान्याकारेणाभिहितानां पदार्थानां पश्चाद्वैशिष्ट्यं वाक्यार्थत्वेन न संभवति। ननु किं पदार्थसामान्यान्विते स्वार्थे पदानां संकेतग्रहः, आहोस्वित् पदार्थानां विशेषान्विते? नाद्यः, विशेषतो व्युत्पत्तिर्न स्यात्। नापि द्वितीयः, प्रतिवाक्यं स्वार्थस्य विशेषरूपत्वात्। अस्यैव वाचकमित्येवंरूपेण पदानां प्रत्यभिज्ञानम् तस्मात् आनन्त्यदोषश्च स्यादित्यन्विताभिधानवादपक्षः।

## काव्यादर्शः

येऽपि इत्यन्विताभिधानवादिनः। शब्देति। शब्दाश्च वृद्धाश्चाभिधेयानि च। वृद्धेषु व्यवहारमाणेषु किंचिद् व्युत्पन्नाः पार्श्वस्थाः शब्दं तावत् श्रोत्रप्रत्यक्षेण प्रतिपद्यन्ते। वृद्धौ व्यवहरमाणावभिधेयं च घटाद्यर्थम्। चक्षुषा ततः श्रोतुर्वृद्धस्य प्रतिपन्नत्वमर्थानयनादिलक्षणचेष्टाहेतुकानुमानेनावगच्छन्ति। ततो वृद्धबुद्ध्यन्यथानुपपत्त्या शब्दे प्रतिपादिकां शक्तिमर्थे च प्रतिपाद्यामित्येवं त्रिप्रमाणं संबन्धमर्थापत्त्यैवावबुध्यन्ते। साक्षाच्छक्तिविषयत्वेन हि व्यापाराद् अर्थापत्तेः कारणता पूर्वयोस्त्विवति कर्तव्यतारूपतेत्यभिप्रायः। तच्चेष्टयेति। मध्यमवृद्धचेष्टया। तत्रेति। वाक्यवाक्यार्थविषये। व्यवहर्तृगतयोः शब्दप्रयोगार्थप्रतिपत्त्योरविभक्तो देशवाक्यवाक्यार्थनिष्ठतया पूर्वं हेतुफलभावावसायो भवतीत्यर्थः। परत इति तदनन्तरम्। 'देवदत्ताश्वमानय' इत्यत्र चैत्रस्योद्वापो देवदत्तस्यावापो, गोरुद्वापोऽश्वस्यावापः। 'देवदत्त गां नय' इत्यत्र तु आनयननयनक्रिययोरुद्वापावापौ। अन्वयव्यतिरेकाभ्यामिति। पदानां संकेतो गृह्यत इति योगः। प्रवृत्ति[निवृत्ति] करोति। वृद्धव्यवहाराच्छब्दार्थसंबन्धावसायः। स च वृद्धव्यवहारः प्रवृत्तिनिवृत्तिरूपः। प्रवृत्तिनिवृत्ती च विशिष्टार्थनिष्ठे, अतो विशिष्ट एवार्थे पदानां संबन्धावसायः।

## विवेकः

अथान्विताभिधानवादिनामपि मते तन्निराकर्तुमाह येऽप्याहुरिति। व्युत्पत्तिबलेन हि शब्दोऽर्थमवबोधयति। व्युत्पत्तिस्तु वृद्धव्यवहाराद्भवतीति प्रामाणिकाः। यदाह शब्दवृद्धेत्यादि। प्रतिपादितया दृशा दर्शनेन। एतद्विवृणोति —देवदत्तेत्यादिशब्दो (शब्दे) देवदत्त गामानयेत्यादौ वृद्धः प्रयोजकः। अभिधेयमानयनम्। तत्र व्युत्पित्सुः शब्दादींस्तावच्छ्रोत्रादिप्रत्यक्षेण गृह्णाति। अथोत्तमवृद्धप्रयुक्तेस्तद्वाक्यश्रवणसमनन्तरं येयं प्रयोज्यवृद्धस्य स्वतन्त्रा प्रवृत्तिः सा बुद्धिपूर्विका, स्वतन्त्रप्रवृत्तित्वान्मदीयप्रवृत्तिवदिति। तच्चेष्टया शब्दतद्भावभावित्वेन शब्दकारणिकां प्रतीतिमनुमिनोति। बुद्धिप्रवृत्त्योः समानविषयत्वं स्वाभाविकमेवेति य (त) द्विषयेव प्रवृत्तिरपि, शब्दस्तु स्वरूपमात्रेण नार्थप्रतिपादननिमित्तं बालवृद्धयोरविशेषप्रसङ्गात्। अतस्तदन्यथाऽनुपपत्तिमूलयाऽर्थापत्त्या तत्र शक्तिः प्रकल्पयते। तदेतदाह वाच्यवाचकेति। वाच्यवाचकसम्बन्धग्रहणमेव हि व्युत्पत्तिः। विषयाश्रयभावाभ्यां च वाच्यवाचकयोः सद्भावपाद्व्युत्पत्तेरुभयात्मकत्वम्। बालस्तत्र व्युत्पद्यते एवं निर्विभाग्यं वाक्यमेतस्य निर्विभागस्यार्थस्य प्रतिपादकमित्यवधारयतीत्यर्थः। नन्वेवं प्रतिवाक्यं व्युपत्तिरपेक्ष्येत। सा चानन्त्याद्दुरुपपादेति शाब्दव्यवहारोच्छेदः स्यादित्यत आह परत इति। यद्यपि वृद्धव्यवहारपूर्विकैव सर्वा व्युपत्तिर्वाक्येनैव च वृद्धव्यवहारस्तथाऽपि यस्य पदस्यावापे यस्यार्थ भागस्यावापो यदुद्धारे चोद्धारस्तस्मिन्नर्थे तस्यैव पदस्य शक्तिरवधार्यत इत्याह तस्य तस्येति। तदुक्तम्—व्यवहारेषु वृद्धानां वाक्यश्रवणभाविषु। आवापोद्धारभेदेन पदानां शक्तिनिश्चयः॥ इति। ननु वृद्धव्यवहारप्रयुक्ते वाक्येऽपि पदानां वाचकशक्त्यवधारणमेव नोपपद्यते, पुरुषवाक्यानां लिङ्गभावेनार्थं प्रति प्रमाणत्वाभ्युपगमात्। वाक्यात् कार्यभूतात् प्रत्यायितस्य वक्तुस्तदर्थविषयं ज्ञानं कारणभूतम-

नुमीयते। तस्य च ज्ञानस्य ज्ञेयाव्यभिचारित्वाज्ज्ञानभूतार्थनिश्चय इति न वाचकशक्त्याऽर्थावगमः, तत् कुतोऽन्विताभिधानमिति ? नैवं वक्तृज्ञानानुमानेनान्वये निश्चिते वाक्यस्यानुवादकतया तदर्थबोधकत्वात्। तदुक्तम्—तेनार्थे निश्चिते पश्चात् सोऽर्थो वाक्यस्य गम्यते। तस्यां दशायां वाक्यस्य तस्य स्यादनुवादिता ॥ इति। वाक्यमेवेति न पदम्। यद्यप्य-(यदप्य)र्थप्रकरणादिगम्यं पदार्थान्तरसहकृतपदं प्रयुञ्जते तदपि वाक्यमेव। यदाहुः—'संहतार्थमभिदधित पदानि वाक्यम् 'एकार्थपरः पदसमूहो वा वाक्य' मिति। (श. गा०)। तदित्थं वृद्धव्यवहारे वाक्यादेव व्युत्पत्तिरित्याह वाक्यस्थितानामिति। एवं प्राथम्यादभिधातृत्वात्तात्पर्योपगमादपि पदानामेव सा शक्तिर्वरमभ्युपगम्यतामित्युक्तन्यायात् पदानामेकैव साक्षादन्वयबोधनशक्तिराश्रयितुं न्याय्या, न पुनः पदानां पदार्थानाञ्च स्वार्थावबोधने पदाभिहिता एव च पदार्थाः स्वार्थावबोधका इति शक्तित्रयकल्पना युक्तेत्याह—पदानामिति। अन्वितानामित्यन्वितार्थानां यदि वाऽन्वययोग्यानामित्यर्थः। सङ्केतः शक्तिः, पदान्वयव्यतिरेकानुविधायिव्यवहारो वा। न च विशिष्टः पदार्थारिक्तो वाक्यार्थ इत्याह नत्विति। वैशिष्टयमन्योन्यान्वयबोधनसामर्थ्यम्

## दीपिका

एवं भट्टादीननुनीय गुरूननुनयति शब्देत्यादिकारिकाद्वयदिशा। देवदत्ते त्यादि तथाभूत्वादित्यन्तं येऽप्याहुस्तेषामन्विताभिधानवादिनां मते यत्रातिविशेषरूपः पदार्थ एवावाच्य इति प्रतिपद्यते तत्र तु दूरे 'निःशेषच्युत' इत्यादौ विध्यादेर्वाच्यतेति दूरदूरेणान्वयः। अक्षरार्थस्तु-शब्दो वाक्यम्, वृद्धौ प्रयोज्यप्रयोजकौ, अभिधेयौ वाक्यार्थप्रत्ययानन्तरं प्रयोज्यनिष्पत्त्या गवाद्यानयनादिः। प्रत्यक्षेण श्रोत्रादिवृत्त्या।

अत्र व्युत्पत्तिकाले। चेष्टया गवानयनादिरूपया दृष्ट्या यदनुमानमनुमिति जनकं व्याप्तिस्मरणादि तेन। श्रोतुः प्रतिपतृत्वं तद्वाक्यजनिततत्कृत्यौपयिकप्रतीतिमत्त्वं पश्यत्यनुमिनोति। अन्यथाऽनुपपत्त्या तत्प्रतीतेर्द्वयात्मिका द्वयोर्वाक्यतदन्वययोराश्रयविशेषयोरात्मा यस्यास्तां शक्तिं प्रतिपादकसम्बन्धरूपामर्थापत्त्या आवापोद्वापाभ्यामुभयात्मिका पदतदर्थविषयां शक्तिं वाच्यवाचकसम्बन्धं च [बोधेत्] जानाति। प्रत्यक्षानुमानार्थापत्तिरूपत्रिप्रमाणकसम्बन्धं वाच्यवाचकभावं बुध्यन्ते व्युत्पित्सवः। प्रमाणत्रित्वं चात्र जात्यपेक्षया। दिशा मार्गेण दृशेति पाठे गणनेन।

एतद्विशदयति-देवदत्तेति। वाच्यवाचकभावव्युत्पन्नानामेव वाक्यार्थप्रतीतिः। तद्व्युत्पत्तिस्तु वृद्धप्रयोगादेव। स च वाक्यरूप एव। वाक्यञ्चान्वितबोधनियतम्। ततश्चोपदेशकालेऽन्वित एव सम्बन्धग्रहणात्तदनुसारेणैव नियोगकालेऽप्यन्विततयैव प्रथमतः प्रतीतिः। तत्किमवशिष्यते यदर्थं तात्पर्यमन्यद्वा वृत्त्यन्तरमङ्गीकार्यमित्यनुवाद्यार्थः। विधेयार्थस्तु भवन्नप्यन्विते सम्बन्धग्रह आनन्त्यव्यभिचाराभ्यां विशेषेषु च शक्यतया कारकसामान्यान्विते क्रियासामान्येऽन्वितेषु कारकसामान्येष्वाश्रणीयः। ततश्च यावति सङ्केतस्तावदभिधेयमिति नीत्या प्रतीतेऽप्यभिधया सामान्यान्वये तन्मात्रस्याकिञ्चित्करतया कारकविशेषान्वितः क्रियाविशेषः प्रकृतविनियोगयोग्य स्वीकार्य एव। स चाभिधालक्षणानिष्क्रान्तस्तात्पर्यलक्षणद्वितीयलक्षणयामरोचकिनस्तव मते व्यञ्जनागम्य एवेति का कथा पाश्चात्त्यवस्त्वलङ्कृत्यो ? अभिधायाः सामान्यान्वितसामान्यविषयत्वेऽपि पदानां समभिव्याहारबलेन विशेषान्वितविशेषबोधनमिति चेत्।

समभिव्याहारबलेनेति कोऽर्थः ? किं समभिव्याहारोज्जीवितेन बलेन ? तेनेव वा बलेन ? प्रथमे सुहृदेवांसि नः । द्वितीये तु समभिव्याहारमात्रेण शब्दशक्तिसञ्चारे लक्षणाऽङ्गीकारोऽपि दुर्बलः स्यादिति पश्यतिपर्यन्तविवरणं सतीति पर्यन्तम् । श्रोतुरित्यादि चेष्टयेतिपर्यन्तविवरणमनेनेत्याद्यनुमायेति यावत् । इयं प्रवृत्तिरेतदनुगुण बुद्धिपूर्विका, प्रवृत्तित्वात्, मदीयैवंविधं प्रवृत्तिवत् । सा च बुद्धिरेतत्प्रयोगजन्या, एतदन्वयव्यतिरेकानुविधानादित्यनुमितिशरीरम् । तयोरित्यादि व्युत्पद्यत इत्यन्तमन्यथेत्यादि द्वयात्मिकामित्यन्तविवरणम् । अन्यथाऽनुपपत्त्येति कारिकापदस्यार्थोऽर्थापत्त्येति । नियामकमन्तरेण शब्दादर्थान्तरस्यापि प्रतीतिः प्रसज्यते ।

तस्मादस्ति किञ्चिदनयोः प्रत्याय्यप्रत्यायकतानियमबीजमिति सम्बन्धग्रहणेन तद्विषयकसंस्कारापरपर्यायव्युत्पत्त्याधानम् । तच्चाविभक्तवाक्यतदर्थं विषयमेव तदानीं विभागज्ञानोपायाभावात् । नन्वेवं सम्बन्धनिश्चय आनन्त्यं स्यादित्याशङ्क्यातिप्रसङ्गनिवारकेण परत इत्यादिनाऽन्वयव्यतिरेकाभ्यामित्यन्तेन अर्थापत्त्यादि विवृणोति ।

यद्यपि व्युत्पत्तिर्वृद्धव्यवहारादेव, स च वाक्यस्वरूप एव, तथापि प्रचुरतरव्यवहारदर्शी यस्य पदस्यान्वये व्यतिरेके च यस्यान्वयं व्यतिरेकञ्च पश्यति तयोर्वाच्यवाचकतालक्षणं नियामकमर्थापत्त्याऽवधारयति । ततश्च पूर्वप्रयोगेष्वपि न व्यामुह्यतीत्यर्थः । इतीति । यस्मादेवं व्युत्पत्तिप्रकारस्तस्मादन्वितैः पदार्थान्तरसंसृष्टैः सह पदानामन्वितानां समभिव्याहृतानामेव सङ्केतः सम्यक् केतनं ज्ञापनमिति व्युत्पत्त्या वाच्यवाचकतारूपः सम्बन्धो गृह्यते । किमिति समभिव्याहृतानामेव पदानां समयग्रह इत्याह—वाक्यस्थितानामेवेति । वाक्यतयैकार्थप्रतिपत्त्यनुगुणतया स्थितानामेवेत्यर्थः । एतदपि कुत इत्याह—वाक्यमेवेति । न त्वेकं पदं विशकलितानि वा पदानि प्रयोगयोग्यमिति हेतोः प्रयोगादेव च सम्बन्धनिश्चय इति भावः ।

अत्र हेतुः—प्रवृत्तीति । परबोधनाय शब्दप्रयोगः तच्च प्रवृत्तिनिवृत्त्यभिप्रायकमेवेत्यर्थः । अन्वयव्यतिरेकाभ्यामित्यनन्तरमिति पाठाभावे इतेर्वा पूर्वावच्छेदकमात्रत्वे प्रकारार्थत्वे च सरलैव योजना । एवं विक्षिप्ततया प्रतिपाद्याननूद्य सारमाह—इतीति । इति हेतोः । विशिष्टा गुणप्रधानभावेन परस्परान्विता एव पदार्था पदैर्विशिष्टतया प्रथमत एवोपनीता वाक्यार्थः । समुदितानां पदानामेवार्थो न पुनरर्थप्रत्ययावान्तरव्यापाराणाम् । न तु पदार्थानां विशकलिततया प्रथमं पदैरभिहितानां वैशिष्ट्यं पश्चाद् वृत्यन्तरबोधं संसर्गमात्रं विशिष्टव्यवहारयोग्यम् ।

**दर्पणः**

संप्रत्यन्विताभिधानवादिभिरपिव्यञ्जनावृत्तिरङ्गीकार्येत्याहआक्षिप्येति [?] । आहुरित्यादिना विध्यादेश्चर्चेत्यन्तेन ग्रन्थेन । येऽप्याहुस्तेऽप्यन्विताभिधानवादिनां मत इति तूत्तरेण संबन्धः । इतिशब्देन शब्देत्यादिकारिकाद्वयपरामर्शः । दृशा दर्शनेन । दिशेति पाठे मार्गेण । कारिकार्थश्च, शब्दो गामानयेत्यादिवाक्यम् वृद्धौ प्रयोजकप्रयोज्यावभिधेयः प्रयोजकवृद्धस्य गामानयेत्यादिवाक्यश्रवणानन्तरं प्रयोज्यस्य गवानयनादिः, एतान् श्रोत्रेण प्रत्यक्षेण पश्यति गृह्णाति । अर्थात् व्युत्पित्सु अत्र व्युत्पत्तिकाले श्रोतरि प्रयोज्यवृद्धस्य प्रतिपन्नत्वं वृद्धवाक्यावगतित्वं गवानयनादिचेष्टया अनुमानेन पश्यति जानाति । अनुमितिशरीरं च, येयं प्रयोज्यवृद्धस्य प्रवृत्तिः सैतदनुगुणपूर्विका प्रवृत्तिवात् तदादायैवंप्रवृत्तित्वात् । सा च बुद्धिरेतत्प्रयोगजन्या एव । तदन्वयव्यतिरेकार्थानुविधानादिति । द्वयम् आश्रयभूतस्य वाक्यस्य वाचकत्वं विषयभूतस्य चार्थस्य व्यङ्ग्यस्यानियमनं आत्मा स्वरूपं

यस्यास्तथाभूतां शक्तिं वाच्यवाचकरूपं संबन्धम्। अन्यथानुपपत्त्या अर्थात् प्रयोज्यवृद्धे प्रवृत्ते जानाति। नन्वेवं भिन्नवाक्यभागयोगात् प्रतिवाक्यं व्युत्पत्तिरपेक्षणीया, सा चानान्त्याद्दुरुपपादेति शब्दव्यवहारोच्छेदः स्यादित्यत आह अर्थापत्त्या चेति। चकारेण बोधेच्छक्तिं द्वयात्मिकामित्यस्य परामर्शः। अवगम्यत इति तु अर्थत एव। अयमर्थः। ग्रहीतसङ्केतात् वाक्यभागरूपस्य पदस्याकारो यस्मिन्नर्थे सङ्केतस्तस्मिन्नर्थे तस्यैव पदस्य शक्तिरर्थापत्त्यावधार्यत इति। नानावाक्येषु पूर्वापरपदयोगेऽपि न व्यामोहः। एवं चोक्तप्रकारेण प्रत्यक्षादित्रिप्रमाणकं वाच्यवाचकसंबन्धं व्युत्पित्सुरेव जानाति। शब्देत्यादि। पश्यतीत्यन्तस्य कारिकाभागस्य देवदत्तेत्यादिना सतीत्यन्तेन विवरणम्। श्रोतुरित्यादेश्चेष्टेत्यन्तस्य अनेनेत्यादिना अनुमायेत्यन्तेन ग्रन्थेन, अन्यथानुपपत्त्यादेर्द्वयात्मिकामित्यन्तस्य तयोरित्यादिना, अन्यथानुपपत्त्येति कारिकापदार्थस्यार्थः। अर्थापत्त्येति अर्थापत्त्या चेत्यस्य परत इत्यादिना अन्वयव्यतिरेकाभ्यामित्यन्तेन, अयमर्थः—यस्य पदस्यान्वये यस्यानुभागस्यान्वयः यस्य व्यतिरेके व्यतिरेकेस्तस्य तस्य शब्दस्य शब्दस्य तं तमर्थं जानातीति व्यवहारेषु वृद्धानां वाक्यश्रवणादिषु आवापोद्वापभेदेन पदानां शक्तिनिश्चय इति। प्रकृते योजयति इतीति। इत्युक्तप्रकारेण प्रवृत्तिनिवृत्तिकारीति हेतुगर्भविशेषणं, तेन प्रवृत्तिनिमित्तकारित्वादित्यर्थः। गामानयेति वाक्ये गवामानयनप्रवृत्तिकारिणाम् आनयेत्यर्थः [?]। मा आनयेति वाक्ये तत्रैव निवृत्तिकारि इति। शब्दस्यान्वयव्यतिरेकाभ्यामित्यतः पूर्वपाठे इतिशब्दः प्रकारार्थः। अन्वयव्यतिरेकाभ्यामिति पदस्योत्तरवाक्ये योजना। वाक्यमेवेत्येवकारेण एकस्य विशकलितानर्थवादानां व्यवच्छेदः[?]। इति हेतोः यस्मात् प्रयोजकादेव संबन्धनिश्चय इति भावः। इतीति। यस्मादेवं व्युत्पत्तिग्रहणप्रकारः तस्मात् वाक्यस्थितानां वाक्यतयैकार्थप्रतिपत्त्यर्थगुणतया स्थितानामेव पदानामन्विते पदार्थान्तरसंसृष्टैः पदार्थैः सहान्वितानां समभिव्याहृतानामेव सङ्केतो गृह्यते। स च सम्यक् केतनं ज्ञापनम्।

उपसंहरति इतीति। इति हेतोः विशिष्टा गुणप्रधानभावेन परस्परान्विता एवः पदार्थाः वाक्यार्थः, न तु विशकलिततया प्रथमं पदैरभिहितानां पदार्थानां वैशिष्ट्यम्, पश्चात् वृत्त्यन्तरयोः संसर्गमात्रम् न तु गामानयेत्यादौ यानि गवादिपदानि तान्येव गां बधान अश्वमानयेत्यादावपीति ब्रूयात्। विशेषेषु चानन्त्यव्यभिचारापातात्। क्रियासामान्यात् कारकपदानां कारकसामान्येऽन्यान्वितानामेव क्रियाणां क्रियापदानामन्वयव्यतिरेकमूलकस्य संबन्धग्रहणात् संबन्धानुसारेणैवाभिधानात्।

## साहित्यचूडामणिः

इदानीमत्यन्तप्रतिभटानामन्विताभिधानवादिनां राद्धान्तमपवदते—येऽपीति।

शब्दश्च वृद्धौ चाभिधेयोऽर्थश्च तान् प्रत्यक्षेण प्रमाणेन पश्यति, बाल इति शेषः। श्रोतुर्मध्यमस्य वृद्धस्य। प्रतिपन्नत्वं, 'कर्तरि क्तः', चेष्टारूपेणानुमानेन पश्यति। अन्यथानुपपत्तिरूपया चार्थापत्त्या द्वयात्मिकां शक्तिं बोधेत् जानीयात्। इत्थं संबन्धं सङ्केतलक्षणं त्रिप्रमाणमवबुध्येत इति।

एतद् व्याचष्टे—देवदत्तेति। अखण्डस्य न पुनर्देवदत्तगवादिविभागेन शकलितस्य वाक्यस्य तदर्थस्य च मिथो द्वयात्मिकां शक्तिं वाच्यवाचकलक्षणं सामर्थ्यमर्थापत्त्या निश्चित्य बाल इव बालो व्युत्पित्सुस्तत्र वाक्यप्रयोगे व्युत्पद्यते। परत इति, प्रयोगान्तरे। तत्र देवदत्तपदं हीयते चैत्रपदमुपजायते। एवमुत्तरत्रापि। तस्य तस्य तं तमर्थमवधारयति वाक्यतदर्थयोरखण्डयोरेव सतोरिति भावः। अन्वयव्यतिरेकाभ्यां आवापोद्वापलक्षणाभ्याम्।

वाक्यमेव, न कदाचित् पदं, प्रवृत्तिनिवृत्ती विधिनिषेधौ कर्तुं शीलमस्य । खण्डशः पदप्रयोगे वाक्यार्थप्रतीत्यभावाद् वाक्यमेव प्रयोगयोग्यं न तु पृथक् स्वतन्त्राणां पदानां प्रयोगः । परस्परमन्वितैः सास्नादिमदानयनादिभिः पदार्थैरन्वितानां वाच्यवाचकसम्बन्धानुप्रवेशयोग्यानामेव तेषां समयो गृह्यते । विशिष्टा एव अन्वयरूपवैशिष्ट्यवन्त एव पदार्था वाक्यार्थः । एवकारव्यावर्त्यमाह—नत्विति । यत्र ध्वनिवादस्य पादप्रसारिकेत्यभिप्रायः ।

**सम्प्रदायप्रकाशिनी**

अर्थान्विताभिधाननीत्याश्रयणेऽपि व्यङ्ग्यस्य वाच्यता न सम्भवतीत्युपक्रमते—येऽप्याहुरित्यादिना । अत्रेयमन्विताभिधानदर्शनस्थितिः—पदार्था एव पदार्थान्तरान्वितत्वेनाभिधीयमाना वाक्यार्थः, न तु सामान्यरूपाणां पदार्थानां पश्चात्समन्वयरूपवैशिष्ट्ये सति वाक्यार्थता । तथा हि—गृहीतसङ्केत एव शब्दोऽर्थमवगमयति । सङ्केतग्रहणं च वृद्धव्यवहारात् । वृद्धाश्च परस्येष्टानिष्टबोधनं प्रयोजनत्वेनोद्दिश्य प्रवर्तननिवर्तनक्षमैरैव शब्दैर्व्यवहरन्ति । प्रवृत्तिनिवृत्तिक्षमत्वं च वाक्यस्यैवेति वाक्यैरेव व्यवहरन्ति, न तु पदैः । अतो वृद्धप्रयोगसमवायिनां मिथोऽभिग्रथितानामेव पदानां तथाभूत एव स्वार्थे सङ्केतो गृह्यते इति ।

तामिमां प्रक्रियां प्रकृतार्थसिसाधयिषयोपन्यस्यति—शब्दवृद्धेत्यादि । शब्दं वृद्धौ अभिधेयं चेति विग्रहः । देवदत्त गामानयेति व्यवहारे हि सन्निकृष्टो व्युत्पित्सुर्व्यवह्रियमाणवाक्यात्मकं शब्दं, वृद्धौ नियोक्तृनियोज्यौ अभिधेयं गवादि च प्रत्यक्षेण अत्र लोके पश्यति शब्दं श्रावणेन, वृद्धावभिधेयं च चाक्षुषेणावधारयति । श्रोतुश्चेति । अथ श्रोतुश्च प्रतिपन्नत्वं तच्चेष्टया लिङ्गभूतयाप्यनुमानप्रमाणेनावधारयति । वाक्यश्रवणसमनन्तरं वा नियोज्येनानीते गवि गवानयनलक्षणया चेष्टया नियोज्यस्यैवंविधार्थावगतिरतो वाक्याज्जातेत्यनुमिनीति । अथ तथाविधावगत्यन्यथानुपपत्त्या वाक्यवाक्यार्थयोः प्रतिपाद्यप्रतिपादकत्वसम्बन्धमर्थापत्तिप्रमाणेनावच्छिनत्तीति त्रिप्रमाणः सङ्केतग्रहः । तदेतत् संवादयन्नेव व्याचष्टे—देवदत्त गामानयेत्यादिना । सास्नादिमन्तमर्थमित्यभिधेयपदविवृत्तिः । नयति सतीत्यत्र शब्दवृद्धाभिधेयान् प्रत्यक्षेण पश्यतीत्यमुमर्थं सिद्धत्वेनानुसन्धाय श्रोतुश्च प्रतिपन्नेत्यादि व्याचष्टे—अनेनास्मादित्यादि । एवंविधः गवादिरूपः । तच्चेष्टया गवानयनरूपया । अर्थापत्त्येत्येतद् व्याचष्टे—तयोरखण्डवाक्येत्यादि । इयता खण्डशो व्युत्पत्त्यभावाद् अखण्डयोरेव वाक्यवाक्यार्थयोः । अर्थापत्त्या मध्यमवृद्धस्य तथाविधार्थप्रतिपत्त्यन्यथानुपपत्त्युत्थापितया । तत्र व्युत्पद्यते अखण्डमिदं वाक्यमस्याखण्डस्य वाक्यार्थस्य प्रतिपादकमिति गृहीतसङ्केतो भवति । अथ पदशोऽपि व्युत्पत्तिर्वाक्यादेवेत्याह—परतश्चैत्रेत्यादि । परतः अखण्डव्युत्पत्तिसमनन्तरं 'चैत्र गामानये' त्यादिषु वाक्येषु यस्य पदांशस्यावापाद् योऽर्थांश ओप्यते उद्धारच्चोद्ध्रियते तस्य तस्य तं तमर्थमवधारयति । तथा हि—'देवदत्त गामानये'ति वाक्ये सामान्यतो व्युत्पन्नः 'चैत्र गामानये' त्यत्र पुरुषान्तरप्रवृत्तिमवधारयन् देवदत्तशब्दोद्धारात् तदर्थोद्धारं चैत्रपदावापात् तदर्थावापं च पश्यन् देवदत्तचैत्रदयोर्व्युत्पद्यते । अनयैव नीत्या 'देवदत्ताश्वमानये' त्यत्र गोपदेऽश्वपदे च व्युत्पत्तिः । 'देवदत्त गां नये' त्यत्र तु आनय नयेति पदयोः । इत्थं वाक्यस्थितानामेव पदानां मिथोऽन्वितैः पदार्थैरन्वितानामेव खण्डशोऽखण्डशश्च सङ्केतो गृह्यते, अन्वयव्यतिरेकाभ्यां प्रवृत्तिनिवृत्तिकारिणो वाक्यस्यैव प्रयोगयोग्यत्वात् । यत इत्थम्, अतो विशिष्टा एव पदार्था वाक्यार्थः, न तु पदार्थानां पश्चादन्वयरूपं वैशिष्ट्यम् । ननु किं पदार्थसामान्यान्विते स्वार्थे पदानां सङ्केतग्रहः, उत पदार्थविशेषान्विते । यदि सामान्यान्विते, तदा सामान्यात्मको वाक्यार्थ इति विशेषतो

व्युत्पत्तिर्न स्यात्। अथ यदि विशेषान्विते, तदा प्रतिवाक्यं स्वार्थस्य विशेषरूपत्वात् पदानि न प्रत्यभिज्ञायेरन् अस्यार्थस्यैतद् वाचकमिति। न च तथा न प्रत्यभिज्ञायन्ते।

### मधुमती

अन्विताभिधानवादिमतं आशङ्कते—येऽप्याहुरिति। अन्विताभिधानवादिनः इत्यनेन सम्बन्धः। शब्दः श्रूयमाणः, वृद्धः प्रयोज्यः, यद्वा—वृद्धः—प्रयोजकः, अभिधेयः घटादिः, तेषां प्रत्यक्षात् उपस्थितिः। अनुपस्थितेष्वेतेषु शक्त्यग्रहात्। श्रोतुः प्रयोज्यवृद्धस्य। अनुमानेन चेष्टया इति अभेदान्वयः। तेन प्रयोज्यस्य चेष्टया यत्नम्, यत्नेन च इच्छाम्, इच्छया ज्ञानं च व्युत्पित्सुः अनुमाय व्युत्पद्यते। द्वयात्मिकां पदपदार्थोभयनिष्ठाम्। अन्यथानुपपत्त्या अर्थापत्त्या इति अभेदान्वयः। अत एव त्रिप्रमाणकं इत्याह। तदेतत् व्याचष्टे—देवदत्तेत्यादिना। बालः व्युत्पद्यते विशेषतः सङ्केतं गृह्णातीत्यर्थः।

तदेव दर्शयति—परतः चैत्रेत्यादिना। परतः अखण्डवाक्यतदन्वययोः कार्यकारणभावग्रहानन्तरम्। तथाच आवापोद्वापाभ्यां विशेषसङ्केतग्रहः इति भावः। उपसंहरति—इतीति। अन्वितानामिति। अविनिर्भागेन प्रतीयमानानामित्यर्थः। तथाच—अविनिर्भगेन प्रतीयमानानां वाक्यस्थपदानां अन्वितैरेव पदार्थैः सङ्केतः गृह्यते इति पर्यवसितम्। विशिष्टा एव अन्वयविशिष्टा एव।

### विस्तारिका

इदानीमन्वनिताभिधानवादिनो व्यञ्जनां ग्राहयति—येऽपीति। आद्या व्युत्पत्तिर्व्यवहारात्। तत्र व्युत्पादको वृद्धः प्रयोज्यः प्रयोजकश्च, व्युत्पादनीयश्च प्राथमिको बालकः, स तु वृद्धव्यवहारदर्शनाद् व्युत्पद्यते। तदाह—शब्देत्यादि। शब्दो 'गामानय' इत्यादिवाक्यम्। वृद्धौ प्रयोज्यप्रयोजकौ। अभिधेयो गवानयनादिरूपः संसर्गः। प्रत्यक्षेण तद्धेतुना चक्षुषा श्रवणेन च। अत्र व्युत्पत्तिकाले। पश्यति जानाति। श्रोतुः प्रतिपन्नत्वं ज्ञानवत्त्वम्। चेष्टया अङ्गक्रियया। अनुमानेन अनुमितिकरणेन, चेष्टाया हेतोरित्यर्थः। अयमेतच्छब्दजन्यैतदर्थगोचरज्ञानवान्, एतच्छब्दश्रवणानन्तरमेतदर्थगोचरचेष्टावत्त्वादित्यनुमानाकारः। चकारः प्रतिपन्नत्वमित्यनन्तरं योज्यः। श्रोतुः प्रतिपन्नत्वमपि जानातीत्यर्थः।

अन्यथेत्यादि। द्वयात्मिकामिति द्वयोर्वाक्यार्थयोरात्मा स्वरूपं यस्याः शक्तिविशेषणम्, आश्रयत्वेन शब्देषु विषयत्वेन चार्थेषु वृत्तेः। अनुपपत्तिश्च शब्दादर्थज्ञानं वृत्तिं विना अनुपपन्नम्। अन्यथा अतिप्रसङ्गात्। सा च शक्तिः स्वाभाविकसम्बन्धत्वादित्याकारा। अर्थापत्त्या अवापोद्वापदर्शनसहकृतया। सा चानयनाद्यन्विते गवि गोपदशक्तिः, तदितरपदाप्रतिपाद्यत्वे सति प्रतिपाद्यत्वादित्यादिरूपा। त्रिप्रमाणकमिति। प्रत्यक्षमनुमानमर्थापत्तिश्चेति प्रमाणत्रयम्, अनुपपत्तेरप्यर्थापत्तिभेदत्वात्। सिद्धमतस्यानुवादोऽयम्। तदनुपपत्तिस्तत्समर्थनं चाप्राकृतत्वान्नोद्भावितम्।

कारिकाद्वयं विवृणेति—देवदत्तेत्यादि। सत्यन्तं पश्यतीत्यस्य विवरणम्। अनुमायेत्यन्तं चेष्टयेत्यन्तस्य। अवधार्येत्यन्तं द्वयात्मिकामित्यन्तस्य। अवधारयतीत्यन्तं च त्रिप्रमाणकमित्यन्तस्य। वाच्यवाचक भावलक्षणं...सम्बंन्धमिति शक्तिमित्यस्य विचरणम्। परत इत्यादि। तस्य तस्य गवादिपदस्य। तं तमर्थं गवादिरूपम्।

विशेषशक्त्यवधारणे हेतुमाह—इत्यन्वयव्यतिरेकाभ्यामित्यादि। इति गवादिपदप्रयोगाप्रयोगाभ्यां यावन्वयव्यतिरेकौ गवादिषु प्रवृत्त्यप्रवृत्ती ताभ्यां हेतोरित्यर्थः।

ननु पदार्थवैशिष्ट्यरूपो वाक्यार्थ आकाङ्क्षादिमहिम्ना भासताम्, किं तत्र वृत्त्येत्याह—प्रवृत्तिनिवृत्तीत्यादि। प्रयोगेति। तद्धेतुशब्दस्यैव प्रमाणत्वात्। तदाह—योग्यमिति, प्रसिद्धार्थस्याप्रमाणत्वात्। पदानां पदार्थैः सह सङ्केतो गृह्यत इत्यन्वयः।

पदानि विशेषयति—अन्वितानामित्यादि। परस्परसाकाङ्क्षाणामित्यर्थः। तेन 'दण्डेन गामभ्याज' इत्यत्र करणान्विते गवि 'गो'-पदस्य न शक्तिः, प्रत्ययस्य स्वप्रकृत्यर्थं प्रत्येव साकाङ्क्षत्वाद्यन्वितैः पदार्थैः संकेत आनयनाद्यन्वितगवादिनिष्ठेषु गोत्वादिपदानां गवाद्यन्वितानयनादिनिष्ठेषु आनयनत्वादिषु चानयनादिपदानां शक्तिरिति रूपः। इतीति। यतोऽन्विते व्यवहारस्तत इत्यर्थः। विशिष्टाः संसृष्टाः पदार्थाः पदप्रवृत्तिविषयाः। न त्विति। पदार्थानां पदवृत्तिविषयाणां प्रतियोगिनां वैशिष्ट्यमन्वयः। वृत्तिं विनैवाकाङ्क्षादिगम्य इत्यर्थः। तेन जातिमात्रशक्तौ लाघवदर्शनेऽपि प्रथमगृहीताया अन्वयशक्तेर्न त्यागः, उपजीव्यविरोधात्। इयञ्च शक्तिरन्वयांशेऽनुभाविका स्वरूपसत्युपयुज्यते, जात्यंशे च स्मारिका ज्ञातैव, एकसम्बन्धिज्ञानेऽपरसम्बन्धिस्मृतेः सम्बन्धज्ञानसाध्यत्वात्।

**सारबोधिनी**

एवमभिहितान्वये व्यङ्ग्यस्याभिधेयतां निरस्यान्विताभिधानवादेऽपि तन्निरस्यति येऽपीत्यादि। आद्या व्युत्पत्तिर्व्यवहारात्। अत्र व्युत्पादको वृद्धः प्रयोजकश्च प्रयोज्यः। व्युत्पित्सुश्च बालो वृद्धव्यवहारदर्शनाद्व्युत्पद्यते। तदाह शब्देति। शब्दो गामानयेत्यादिरूपः। एतान् श्रोत्रादिना, प्रत्यक्षेण प्रत्यक्षहेतुना। अत्र व्युत्पत्तिकाले पश्यति जानाति। श्रोतुः प्रयोज्यवृद्धस्य प्रतिपन्नत्वं ज्ञातार्थत्वम् अनुमानेन चेष्टया गवानयनादिचेष्टारूपेणानुमानेन पश्यति जानाति। अनुमानस्य येयमस्य स्वतन्त्रप्रवृत्तिः सा बुद्धिपूर्विका स्वतन्त्रप्रवृत्तित्वात् मदीयैवंविधप्रवृत्तिवत्। सा च बुद्धिरेतद्वाक्यजन्या एतदन्वयव्यतिरेकानुविधानात्। बुद्धिप्रवृत्त्योस्तु समानविषयत्वं स्वाभाविकमेव। द्वयात्मिकामिति। आश्रयभूतस्य वाक्यस्य वाचकत्वं विषयभूतस्यार्थस्य वाच्यत्वमेतद्रूपात्मा स्वरूपं यस्यास्तथाभूतां शक्तिं वाच्यवाचकभावात्मिकामित्यर्थः। अनुपपत्तिश्च शब्दादर्थज्ञानं वृत्तिं विनानुपपन्नम् अन्यथातिप्रसङ्गात्। सा च शक्तिः स्वाभाविकसंबन्धत्वादित्याकारा। त्रिप्रमाणकमिति। प्रत्यक्षमनुमानमर्थापत्तिश्चेति प्रमाणत्रयम् अनुपपत्तेरप्यर्थापत्तिभेदत्वात्।

कारिकाद्वयं विवृणोति देवदत्तेति। देवदत्तेत्यादि सत्यन्तं शब्देत्यादेः पश्यतीत्यन्तस्य विवरणम्। वाच्यवाचकसंबन्धग्रहणमेव व्युत्पत्तिरेतन्निर्विभागस्यार्थस्य प्रतिपादकमित्यवधारयतीत्यर्थः। वाच्यवाचकभावसंबन्धमिति शक्तिमित्यस्य विवरणम्। परत इत्यादि अवधारयतीत्यन्तश्च त्रिप्रमाणकमित्यन्तस्य विवरणम्। विशेषशक्त्यवधारणमाह परत इत्यादि। तस्य गवादिशब्दस्य तं तं गवादिरूपमर्थम्। विशेषशक्त्यवधारणे हेतुमाह इत्यन्वयव्यतिरेकाभ्यामिति। इति गवादिपदप्रयोगाप्रयोगाभ्याम् यावन्वयव्यतिरेकौ गवादिषु प्रवृत्त्यप्रवृत्ती ताभ्यां हेतोरित्यर्थः। ननु तथापि पदार्थवैशिष्ट्यरूपो वाक्यार्थः आकाङ्क्षादिमहिम्ना भासताम्, किं तत्र शक्त्येत्यत आह प्रवृत्तिनिवृत्तीत्यादि। प्रवृत्तिनिवृत्तिकारीति प्रवृत्तिनिवृत्तिकारित्वादित्ययमर्थो बोद्धव्यः। गामानयेति। गवा-

नयने प्रवृत्तिकारि, गां नयेत्यत्रैव निवृत्तिकारि। प्रयोगयोग्यमिति शब्दप्रयोगस्य परार्थत्वात्। वाक्येनैव परस्येष्टानिष्टसाधनयोः प्रवृत्तिनिवृत्तिसंभवात् अतो वाक्यस्यैव सदा प्रयोगादन्वितेऽर्थे उपस्थितत्वात् पदानामभिधानसामर्थ्यमवधार्यते इति वर्तुलितार्थः। इतीति। यस्मादेवं व्युत्पत्तिग्रहणप्रकारस्तस्माद्वाक्यस्थितानां वाक्यतया परस्परान्वितबोधकतया स्थितानां पदानां अन्वितैः पदार्थैः सह, सङ्केतो गृह्यत इत्यन्वयः। पदानामिति। विशेषयति अन्वितानामिति। परस्परसाकाङ्क्षाणामित्यर्थः। तेन 'दण्डेन गां नये'त्यत्र करणत्वान्विते गवि न गोपदस्य शक्तिः, प्रत्ययस्य स्वप्रकृत्यर्थं प्रत्येव साकाङ्क्षत्वात्। अन्वितैः पदार्थान्तरेण ससृष्टैः पदार्थैः। इतीति। यतोऽन्विते व्यवहारस्तत इत्यर्थः। विशिष्टाः पदार्थाः पदवृत्तिविषयाः न त्वन्वितपदानां पदवृत्तिविषयाणां वैशिष्ट्यमन्वयो वृत्तिं विनैवाकाङ्क्षादिगम्य इति शेषः।

### काव्यप्रदीपः

यदुक्तम्—

**'शब्दवृद्धाभिधेयांश्च प्रत्यक्षेणात्र पश्यति।**
**श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया॥'**

**'अन्यथानुपपत्त्या तु बोधेच्छक्तिं द्वयात्मिकाम्।**
**अर्थापत्त्यावबुध्येत संबन्धं त्रिप्रमाणकम्॥' इति।**

त्रिप्रमाणकमिति जात्यपेक्षया त्रित्वं न तु व्यक्त्यपेक्षया। एवमखण्डयोः संबन्धमवधार्य विशेषतो व्युत्पाद्यते। कथम्। इत्थम—अनन्तरं तेनैव प्रयोजकेन 'चैत्र, अश्वमानय', 'देवदत्त, गां नय' इत्यादिवाक्येषु कस्यचिदन्यस्य पदस्यावापे कस्यचिदुद्धारे सति यस्य वाक्यभागस्यान्वयव्यतिरेकाभ्यां यस्य वाक्यार्थभागस्यान्वयव्यतिरेकावुपलभते तत्र तस्य शक्तिमवधारयति। तच्च शक्त्यवधारणमन्वित एव पदार्थे। प्रथममन्वय एव वाक्यस्य शक्तिग्रहात्। पदार्थमात्रशक्तावुपजीव्यविरोधात्। व्यवहारेणान्वितज्ञानस्यैवोपस्थापनाच्च। न च वाक्यं विना क्वचिदाद्यव्युत्पत्तिः। व्यवहारेणैवाद्यव्युत्पत्तेः। व्यवहारस्य च प्रवृत्तिनिवृत्तिरूपस्य पदमात्रेण कर्तुमशक्यत्वात्। अतो वाक्यस्थितानामेव पदानामन्वितेष्वेव पदार्थेषु संकेतग्रहादन्विता एव पदशक्याः। त एव च वाक्यार्थमिति न वाक्यार्थबोधे शक्तेर्विरामः। न त्वभिहितानां पदार्थानामन्वयोऽशक्य एव प्रतीयते योग्यतादिवशादिति युक्तम्।

### आदर्शः

इत्थं नैयायिकमते तद्व्याप्तेर्व्यभिचारं दर्शयित्वा संसृष्टपदार्थशक्तिवादिनां मीमांसकानामपि मते तद्व्याप्तेर्व्यभिचारं दर्शयितुं शक्तिग्रहप्रकारप्रदर्शिकां परकीयकारिकामाह—येऽप्याहुः शब्दवृद्धेति। येऽपि अन्विताभिधानवादिन आहुरिति दूरे अन्वयः। शब्दवृद्धेति। गामानय इत्यादिः शब्दः, गवाद्यानेता व्युत्पन्नो वृद्धः। गवाद्यानयनरूपोऽर्थोऽभिधेयः, 'प्रत्यक्षेण' इन्द्रियेण, 'पश्यति' जानाति, शब्दस्याचाक्षुषत्वात्। चेष्टया अनुमानेन इत्यन्वयः, ज्ञायमानलिङ्गकरणत्वस्य तत्सिद्धान्तत्वात्। अन्यथेति, अस्मात् शब्दाद् अस्मिन्नर्थे अस्य प्रतिपन्नत्वम् अनयोरर्थशब्दयोः सम्बन्धं विना अनुपपन्नमित्येवंरूपा अर्थापत्तिरेव अन्यथाऽनुपपत्तिः। द्वयात्मकामिति विषय-

तासम्बन्धेन द्वयोरर्थशब्दयोः आत्मा स्वरूपं यस्या इति विग्रहेण तदुभयविषयामित्यर्थः, ईश्वरेच्छात्मिकाया अतिरिक्तया वा शक्तेरुभयविषयत्वात्। अनेन अखण्डवाक्यतदर्थयोः प्रथमं शक्तिग्रहं दर्शयित्वा पश्चात् पदपदार्थयोः शक्तिग्रहं दर्शयति—अर्थापत्त्येति। अर्थापत्तिरत्र आवापोद्वापरूपा। बोधेदित्यत्र बालकः कर्त्ता; बुधिर्भौवादिकः। अवबुध्यन्ते इत्यत्र बालकाः कर्त्तारः; बुधिर्दैवादिक आत्मनेपदी। ईदृशव्याख्यानुसारिणी वृत्तिर्बोध्या। 'अखण्डवाक्याक्यार्थयोः शक्तिग्रहानन्तरं पदपदार्थयोरेव शक्तिग्रह आवापोद्वापेनेति कारिकोक्तं व्याचष्टे परत इति, अयं तत्तत्पदपरिवृत्तिरूप आवापोद्वापः। 'अन्वितैः' परस्परान्वितैः। 'अन्वितानां' तादृशार्थे सम्बद्धानाम् आसक्तिमतां वा पदानाम्। 'वाक्यार्थः' वाक्यप्रतिपाद्यः। 'न तु' इत्यनेन नैयायिकमतनिषेधः।

## सुधासागरः

एवमभिहितान्वये व्यङ्ग्यार्थस्याभिधेयत्वं निरस्य अन्विताऽभिधानेऽपि तन्निरस्यति येऽप्याहुरिति। अन्विताभिधानवादिन इत्यनेन सम्बन्धः। अयमाशयः— येऽप्यन्विताभिधानवादिनः 'देवदत्त ! गामानय' इत्यादिप्रयोजकवृद्धवाक्यं श्रुत्वा तदनन्तरं प्रयोज्यवृद्धेन सास्नादिमन्तमर्थं देशान्तरं नीयमानमालोक्य अयमेतद्विषयकैतादृशक्रियागोचरकार्यताज्ञानवान् एतद्विषयकचेष्टावत्त्वात्, तद्विषयकप्रवृत्तिमत्वाद्वामद्वदिति प्रयोज्यवृद्धस्य ज्ञानमनुमिमीते, ततः कारणं विना कार्यानुपपत्त्याखण्डवाक्यस्यान्वयव्यतिरेकिणस्तज्ज्ञानेन कार्यत्वकारणत्वरूपां शक्तिमवधारयति। अथ ज्ञेयं सम्बन्ध विना वाक्यस्य सा शक्तिरनुपपन्नेत्यर्थापत्त्याऽखण्डवाक्यार्थेनाखण्डवाक्यस्य वाच्यवाचकभावरूपं सम्बन्धमवधारयति। यदुक्तम्—शब्दवृद्धाभिधेयानित्यादि। शब्दः श्रयमाणः वाक्यमिति यावत्, वृद्धः प्रयोजकः पुमान्, अभिधेयो घटादिः, एषां प्रत्यक्षानुपस्थितिः, उपस्थितेष्वेतेषु शक्तिग्रहात् श्रोतुः प्रयोज्यवृद्धस्य चेष्टया हेतुभूतया अनुमानेन प्रतिपन्नत्वम् प्रयोज्यवृद्धस्य व्युत्पन्नत्वमवगच्छति उक्तरीत्याऽनुमिमीते, चेष्टया प्रवृत्तिरूपो यत्नः, प्रवृत्त्येच्छा, इच्छया ज्ञानम्, कदाचिच्चेष्टयैव ज्ञाने उपस्थितत्वेन वाक्यस्य कारणत्वमनुमीयत इति भावः। अथ वाक्यस्य तदर्थज्ञानजनकत्वमसति वृत्त्यन्तरे तदर्थशक्तिं विनाऽनुपपन्नमित्यनुपपत्त्या द्वयात्मिकाम् आश्रयभूतस्य वाक्यस्य वाचकत्वं, विषयभूतस्यार्थस्य वाच्यत्वमेव द्वयमात्मा स्वरूपं यस्यास्तथाभूतां शक्तिं बुद्ध्येदित्याहुः। अथार्थापत्त्याऽऽनयनान्विता गौर्गोपदशक्या तदितराप्रतिपाद्यत्वे सति तत्प्रतिपाद्यत्वादित्याकारया सम्बन्धं विशिष्य जानाति। प्रत्यक्षमनुमानमर्थापत्तिश्चेति प्रमाणत्रयम्, अनुपपत्तेरप्यर्थापत्तिभेदत्वात्। एवञ्च त्रिप्रमाणकमिति जात्यपेक्षया त्रित्वं न तु व्यक्त्यपेक्षयेति कारिकार्थः।

एवमखण्डयोः सम्बन्धमवधार्य विशेषतो व्युत्पद्यते विशेषे सङ्केतं गृह्णाति। व्युत्पत्तिः वाच्यवाचकभावसम्बन्धग्रहणम्। तदाह वृत्तिकारः—परतश्चैत्रेत्यादि। अयमर्थः—अनन्तरं तेनैव प्रयोजकेन 'चैत्र ! अश्वमानय, देवदत्त ! गां नय'—इत्यादिवाक्येषु कस्यचिदन्यस्य पदस्यावापे कस्यचिदुद्वापे सति यस्य भागस्यान्वयव्यतिरेकाभ्यां यस्य वाक्यार्थभागस्यान्वयव्यतिरेकाबुपलभ्येते, तत्र तस्य शक्तिमवधारयति। तच्च शक्त्यावधारणमन्वित एव पदार्थे, प्रथममन्वये एव वाक्यस्य शक्तिग्रहात्, पदार्थमात्रशक्तावुपजीव्यबाधात्, व्यवहारेणान्वितज्ञानस्यैवोपस्थापनाच्च। न च वाक्यं विना क्वचिदाद्यव्युत्पत्तिः, व्यवहारेणैवाद्यव्युत्पत्तेः, व्यवहारस्य च प्रवृत्तिनिवृत्तिस्य पदमात्रेण कर्त्तुमशक्यत्वात्। अतो वाक्यस्थितानामेव पदानामन्वितेष्वेव पदार्थेषु सङ्केतग्रहादन्विता एव पदशक्यास्त एव च वाक्यार्थ इति न वाक्यार्थबोधे शक्तेर्विरामः, नत्वभिहितानां पदार्थानामन्वयोऽशक्य एव प्रतीयते योग्यतादिवशादिति युक्तम्।

यद्यपि वाक्यान्तरप्रयुज्यमानान्यपि प्रत्यभिज्ञाप्रत्ययेन तान्येवैतानि पदानि निश्चीयन्ते इति पदार्थान्तरमात्रेणान्वितः सङ्केतगोचरः ,तथापि सामान्यावच्छादितो विशेषरूप एवासौ प्रतिपद्यते व्यतिषक्तानां पदार्थानां तथाभूतत्वादित्यन्विताभिधानवादिनः ।

तेषामपि मते सामान्यविशेषरूपः पदार्थः सङ्केतविषय इत्यतिविशेषभूतो वाक्यार्थन्तर्गतोऽसङ्केतितत्वादवाच्य एव यत्र पदार्थः प्रतिपद्यते तत्र दूरेऽर्थान्तरभूतस्य निःशेषच्युतेत्यादौ विध्यादेश्चर्चा ।

अनन्वितोऽर्थोऽभिहितान्वये पदार्थान्तरमात्रेणान्वितस्त्वन्विताभिधाने, अन्वितविशेषस्त्ववाच्य एव इत्युभयनयेऽप्यपदार्थ एव वाक्यार्थः ।

---

सङ्केतः

यद्यपीति । सङ्केतगोचर इति योगः । अयं भावः—यदि पदार्थाः पदार्थान्तरविशेषैः अन्विता सङ्केतविषयाः स्युः तदा 'मैत्र मैत्रीं सूत्रय' इत्यादौ वाक्ये एषां पदानां अत्रैव वाक्ये अर्थप्रतिपादकता स्यात्, न त्वन्यवाक्यस्थानाम्, विशेषान्वितानामेव सङ्केतविषयत्वात् । तथासति स एवायमिति प्रत्यभिज्ञाप्रत्ययोऽपि न स्यादिति । तानीति । यानि वाक्यान्तरे प्रयुक्तदृष्टानि इत्यर्थः । सामान्यावच्छादितः न्यग्भूतसामान्यः । असौ पदार्थः । व्यतिषक्तानां 'वाक्यमेव प्रयोगार्हम्' इति न्यायात् पदार्थान्तरैरन्वितानाम् । तथाभूतत्वात् सामान्यावच्छादितविशेषरूपत्वात् । सामान्यविशेषरूपः इति । सामान्यप्रतीतिनान्तरीयकाः विशेषाः—

**'निर्विशेषं न सामान्यं भवेत् शशविषाणवत् ।'**

इति न्यायात् । ततश्च सामान्यावच्छादितः विशेष एव सङ्केतस्य विषयः । सामान्यं तु अनुक्तमपि ज्ञायते इत्याह—अतिविशेषभूतः इति । विशेषमतिक्रान्तः यः स्वभावः सः अतिविशेषः, तं भूतः—प्राप्तः अतिविशेषभूतः—सामान्योऽर्थः । केवलपदार्थरूपः इति यावत् । यद्वा—विशेषमतिक्रान्तः अतिविशेषः, स चासौ भूतश्च स तथा—सामान्योऽर्थः । यत्र वाक्ये । यदा अन्विताभिधानवादे सामान्योऽप्यर्थो न वाच्यः, का वार्ता व्यङ्ग्यस्य वाच्यतायाम् ? इति भावः ।

एवं सङ्कलय्य पक्षद्वयेऽपि सिद्धान्तमाह—अनन्वित इत्यादि । अनन्वितः अविशिष्टः सामान्यरूपः पदानां अर्थः । सङ्केतस्य विषयः इति शेषः । अन्वितः इति । वाक्यार्थस्तु अपदार्थ एवेति योगः । अन्वितविशेषः सर्वाङ्गसम्पूर्णः केवलविशेषरूपः । एतच्च वाक्यार्थविशेषणम् । उभयनयेऽपि पक्षद्वयेऽपि अपदार्थ एव वाक्यार्थः ।

## बालचित्तानुरञ्जनी

यद्यपीति । सङ्केतगोचरो यद्यपीति संबन्धः । यद्यपि वाक्यान्तरे दृष्टप्रयोगाणि तान्येवैतानीत्यर्थः । व्यतिषक्तानामिति । वाक्यस्यैव प्रयोगार्हत्वात् पदार्थान्तरैरन्वितानामित्यर्थः । तथाभूतत्वादिति । सामान्यावच्छादिते विशेषरूपत्वादित्यर्थः । प्रथमपक्ष एव स्वीकृतत्वात् विशेषे व्युत्पत्त्यभावः । 'निर्विशेषं न सामान्यमि'ति न्यायेन विशेषे पर्यवसानादिति भावः ।

एवमन्विताभिधानं प्रदर्श्य व्यङ्ग्यस्यावाच्यतामाह तेषामिति । सामान्यतः कृताशेषविशेषाणि भवन्तीति तत्प्रतीतिर्नान्तरीयकतयैवेति विशेषसिद्धिः । 'निर्विशेषं न सामान्यं भवेच्छशविषाणवत् ।' ततः सामान्यावगतो विशेष एव सङ्केतविशेषः । ततश्च सामान्यरूप एव पदार्थोऽसङ्केतितत्वात् अनभिधेय इत्यर्थः । अतिविशेषभूत इति । विशेषमतिक्रान्तः अतिविशेषः संभूतः प्राप्तः अतिविशेषभूतः सामान्यपदार्थ इत्यर्थः । यत्र तु सामान्यरूपोऽपि पदार्थः प्रतिपद्यते प्रतीतिविषयः न वाच्यः तत्रैव कथं व्यङ्ग्यस्य च विध्यादेरर्थान्तरस्यावाच्यतामाह अन्वितविशेष इति । अन्विताः विशेषाः यत्र स संसर्ग इत्यर्थः । यतो वाच्यस्ततः पक्षद्वयेऽप्यपदार्थ एव वाक्यार्थः ।

## काव्यादर्शः

वाक्यमेवेति । अनन्वितार्थं पदमप्रयोज्यमिति प्रयोगयोग्यं वाक्यमेव, तत्रैव संकेतो गृह्यत इत्यपरपदार्थान्वित एव पदार्थः संकेतगोचरः । बालो हि व्युत्पाद्यमानः प्रयोज्यवृद्धस्य शब्दश्रवणसमनन्तरभाविनीं विशिष्टचेष्टानुमितां शब्दकारिकां प्रतीतिमन्वितार्थविषयामवगच्छन्नन्वित एव अर्थे पदानामभिधानसामर्थ्यमवधारयतीत्याह—विशिष्टा एवेति । अन्वितानां विशिष्टानामेव पदार्थानामभिधेयत्वम् । वाक्यार्थो हि क्रियाकारकसंसर्गरूपः । कारकाणां च क्रियासंबन्धोन्मुखतया क्रियाणामपि कारकविरहासहिष्णुत्वेन अन्वितानामेव स्वशब्दैरभिधानं भवतीत्यर्थः । न तु पदार्थानामिति । सामान्यभूतत्वेन अभिहितानां पदार्थानां पश्चान्न वैशिष्ट्यमित्यर्थः । न तु पदार्थानामिति । सामान्यभूतत्वेन अभिहितानां पदार्थानां पश्चान्न वैशिष्ट्यमित्यर्थः । यद्यपीति । संकेतगोचर इति योगः । तान्येवैतानीति । यानि वाक्यान्तरे दृष्टप्रयोगाणि । व्यतिषिक्तानामिति । वाक्यस्यैव प्रयोगार्हत्वात् पदार्थान्तरैरन्वितानाम् । तथाभूतत्वादिति । सामान्यावच्छादितविशेषरूपत्वात् । सामान्यविशेषरूप इति । सामान्यानि अन्तःकृताशेषविशेषाणि भवन्तीति तत्प्रतीतिनान्तरीयकतयैव विशेषसद्भावः । यदाहुः—

**निर्विशेषं न सामान्यं भवेच्छशविषाणवत् ॥**

ततः सामान्यावच्छादितो विशेष एव संकेतस्य विषयः । ततश्च सामान्यभूतः पदार्थोऽसमितत्वाद् अनभिधेय इत्याह अतिविशेषभूत इति । विशेषमतिक्रान्तोऽतिविशेषः, तं भूतः प्राप्तोऽतिविशेषभूतः सामान्यः पदार्थः । यत्र तु सामान्यरूपोऽपि पदार्थो न वाच्यस्तत्र कैव कथा व्यङ्ग्यस्य विध्यादेरर्थान्तरस्य वाच्यतायाम् । एवं संकलय्य पक्षद्वयेऽपि सिद्धान्तमाह—अनन्वितोऽर्थ इति । अन्वितविशेषस्त्विति । वाक्यार्थस्तु अपदार्थ एवेति योगः । कीदृशो वाक्यार्थोऽन्वितविशेषः । अन्वितविशेषो यत्र स तथा, समग्राङ्गसंपूर्ण इत्यर्थः । यतोऽवाच्यस्ततः पक्षद्वयेऽप्यपदार्थ एव वाक्यार्थः ।

## विवेकः

ननु यान्येव 'गामानये'त्यादौ गवादिपदानि तान्येव 'गां पश्य, अश्वमानये' त्यादावपीति निश्चयाद्विशेषेषु चानन्त्यव्यभिचारादिदोषात्तत्र प्रतियोग्या(ग्य) न्वितस्वार्थबोधनविषयतया शक्तीनामप्यानन्त्यकल्पनाप्रसङ्गात् क्रियासामान्यान्वित एव कारके कारकपदानां कारकसामान्यान्वितायामेव च क्रियायां क्रियापदानामन्वयव्यतिरेक-मूलस्य सम्बन्धस्य ग्रहणात् सम्बन्धानुसारेण चाभिधानात्, सामान्यान्वयाभिधायितैव पदानां युक्ता, न पुनर्विशेषा-न्वयाभिधायिता । तेन वाक्यार्थप्रतीतिरनुपपन्ना, विशेषान्वयरूपत्वाद्वाक्यार्थस्येत्यत आह यद्यपीति । प्रत्यभिज्ञायत एवेदमिति प्रत्यभिज्ञा ज्ञानम्, तद्रूपेण प्रत्ययेन । तान्येवेति न पुनर्भिन्नानीति । तदुक्तं 'त्रिधा शब्दा भिद्यन्ते रूपतः स्वरतोऽर्थतश्चेति । परिहरति तथाऽपीति । सामान्यावस्थि(च्छादित) इति—प्रतिप्रयोग्यन्वयप्रकारयोः साधारण-रूपेणापस्थितेः । प्रतिपद्यते नत्वभिधीयते । प्रतिपत्तौ हेतुमाह—व्यतिषक्तानामिति मिलितानां पदान्तरसन्निधापितैः पदार्थविशेषैरन्वितानां विशेष एव पर्यवसानात्, तदतिक्रमेऽनुपस्थितकल्पने च प्रमाणाभावादिति भावः । उपसंहरति इतीति । अन्वितैरेव पदार्थैरन्वितानामेवाभिधानमिति ये वदन्ति तेषामप्यस्ति सामान्यविशेषरूप इत्यनेनाञ्चित (इत्यनन्वितः ?) सामान्यरूपः, स्वार्थस्तु विशेष रूपः । गोशब्दो हि स्वार्थमनवगतविशेषगुणक्रियासामान्यान्वित-मभिधत्ते । एवं क्रियापदमपि । अतिविशेषभूत इति—विशेषावयवरूपः स्वयमेव चेदवाच्यस्तर्हि निषेधादौ वाच्य-विध्यादिरूपव्यङ्ग्यमर्थं प्रति का कथाऽभिधाव्यापारस्येत्याह तत्र दूर इत्यर्थान्तर वाचोयुक्तिरेव । साक्षाच्छब्दव्यापारविषयत्वसम्भावना परिहरणीयेत्याह—अर्थान्तरभूतस्येति—तदेतत् सामान्यान्वयाभिधान-शायि (वादि) नोक्तम् । विशेषान्विताभिधानवादिनस्तु विशेषान्वयेऽप्याकाङ्क्षासन्निधियोग्यतोपाधिवशेनानन्त्य-व्यभिचारादिदोषपरिहारात् सम्बन्धग्रहणं सुकरमिति तदभिधायितैव पदानां युक्तेत्याहुः । तथाचोक्तम्—आकाङ्क्षासन्निधिप्राप्तयोग्यार्थान्तरसङ्गतान् । स्वार्थानाहुः पदानोति व्युत्पत्तिः संस्मृता यदा ॥ आनन्त्यव्यभिचारभ्यां तदा दोषो न कश्चन ॥ अतएव प्रत्यभिज्ञाविरोधो नास्ति । यच्चानन्तशक्तिकल्पनं स्यादि-त्याशङ्कितं तदपि न, एकदैवाकाङ्क्षितसन्निहितयोग्यान्वितस्वार्थाभिधानशक्त्या प्रतियोगिभेदेन चक्षुरादीनामेव कार्यभेदोपपत्तेः । ययैकयैव दर्शनशक्त्या चक्षुर्घटादिप्रतियोगिसहायभेदान्नानाज्ञानानि जनयति तथा शब्दोऽपि प्रतियोगिभेदादिति । किञ्च क्रिया कारकस्वभावालोचनयाऽपि कारकमात्रेणान्वये सिद्धे वृथा सामान्यान्वयाभिधा-यिता शब्दस्याङ्गीक्रियते । तस्माद्विशेषान्वयाभिधानमेव श्रेयः । एवञ्च यद्यपि विशेषरूपतया वाच्य एवैषां वाक्या-र्थस्तथापि देशकालकारकविशेषोपधानवशादुत्पत्स्यमानतात्कालिकक्रियासंसर्गः शेषरूपः पूर्वापरिचितोऽपि विशेषभूतोऽयमर्थो विशेषान्वयाभिधानेऽप्यवाच्य एव प्रतीयत इति भावः । एवञ्च यद्यपि विशेषरूपतया वाच्य एवैषां वाक्यार्थस्तथापि देशकालकारकविशेषोपधानवशादुत्पत्स्यामानतात्कालिकक्रियासंसर्गः शेषरूपः पूर्वापरि-चितोऽपि विशेषभूतोऽयमर्थो विशेषान्वयाभिधानेऽप्यवाच्य एव प्रतीयत इति भावः । एवञ्च सामान्यान्वयाभिधानं विशेषान्वयाभिधानं वाऽस्तु, उभयथाऽप्यन्विताभिधानपक्षे व्यङ्ग्यसमर्थं (सामर्थ्य) प्रत्यभिधायाः [न] सम्भावनाऽपर प्रसरतीति भावः । मतद्वयमुपसंहरति अनन्वित इत्यादि ।

## दीपिका:

ननु यथा संसर्गमात्रमव्यवहार्यं तथा कारकसामान्यान्वितक्रियासामान्यमपि । न च भवत्पक्षेऽपि विशेष-विषयिण्यभिधा, सम्बन्धग्रहणशक्यत्वप्रसङ्गादित्याह—यद्यपीत्यादि तथा भूतत्वादित्यन्तम् । प्राचीनेदानीन्तनद-शाविशिष्टधर्मिबोधः प्रत्यभिज्ञा, सा चासौ प्रत्ययश्चेति कर्मधारयः । तस्याः शरीरं तेन तान्येवैतानीति

निश्चीयन्तेऽबाधिततया निश्चयरूपया विषयीक्रियन्त इति हेतोरेकदेशमात्रेण प्रतिबन्धविरहात् सामान्यमात्रविषयाविश्रान्तेरित्यर्थः। सामान्यावच्छेदितोऽभिहितसामान्याविनाभावलभ्यः। विशेषरूपः प्रकृतविनियोगयोग्यः। असौ कारकान्वितक्रियाभिन्नः। प्रतिपद्यते पदैः।

अत्र हेतुः—व्यतिषक्तानां गुणप्रधानभावेनान्वितानां पदार्थानां तथाभूतत्वात् प्रकृतविशेषात्मकत्वात्। गुणप्रधानभावेनान्वयः आकाङ्क्षादिवशादित्यभिप्रायः।

पदानामिति पाठे व्यतिषक्तनां समभिव्याहृतरूपाणां पदानां तथाभूतत्वात् समभिव्याहारमाहात्म्येन तथाभूतार्थप्रतीतिक्षमत्वादिति नेयम्।

एवमनूद्यमुक्त्वा विधेयमाह—तेषामपीति। अन्विताभिधानवादिनाम् सामान्यविशेषरूप इति। प्रकृतविशेषस्य सङ्केतकालसन्निहितत्वात्सामान्यरूपः, पदार्थान्विततया च विशेषरूपः। पदार्थ एकैकपदबोध्यः। अतिविशेषभूत इति। प्रकृतोपयोगिशरीरः। तदेवाह—वाक्यार्थान्तर्गत इति। संयुज्यमानक्रियाकारकविशेषार्थको योऽसौ समुदितशरीरो वाक्यार्थ उच्यत इत्यर्थः। अवाच्य एव प्रतिपाद्यते व्यवह्रियते बोध्यते वा पदैः। अर्थान्तरभूतस्य संसृष्टोपात्तपदार्थातिरिक्तस्य। विध्यादेरित्येकदेशिदिशा। व्यङ्ग्यस्य वस्तुनो लक्ष्यस्य सतः प्रयोजना [त्म]नो व्यञ्जकस्य। एतच्च रहस्यं संगोप्याभिधान मूलप्रकरणविनिवेशः समर्थनीयः।

सम्प्रति हवनकरीत्या मतद्वयमनूद्य वृत्यन्तराङ्गीकार आवश्यक इत्युपसंहरति—अनन्विति इति। सर्वथेति शेषः। पदान्तरमात्रेण सामान्यरूपेण पदान्तरार्थेनान्वितः सामान्यरूप एव अन्वितविशेष इति-अत्रान्वितपदात्पूर्वं प्राकरणिक (क० इति?) विंशेषेति (विशेष इति) परतः प्राकरणिक इति शेषः। तुर्व्यतिरेकि। अवाच्य एव व्यङ्ग्य एव। अपदार्थ एव। अभिहितपदार्थान्तरव्यापारकतया पदमात्रालभ्य एव। वाक्यार्थो वाक्येन प्रवृत्तिनिवृत्तियोग्यतयाऽर्थ्यमान उद्दिश्यमानः।

## दर्पणः

पदानां सामान्याभिधायितैव युक्ता। ततश्च विशेषान्वयरूपस्य वाक्यार्थस्य प्रतीतिरनुपपन्नेत्याह यद्यपीति। प्रत्यभिज्ञारूपः प्रत्ययो ज्ञानं स च प्राचीनेदानीन्तनदशाविशिष्टधर्मिबोधान्निश्चीयते। अवधितया विषयीक्रियत इति हेतोः एकदेशमात्रेण प्रतिबन्धविरहात् सामान्यमात्रविषयताविश्रान्तेत्यर्थः। सामान्यावच्छादितोऽभिहितः सामान्यं विनाऽलभ्यः विशेषरूपः। कृताविति योग्यः असौ कान्विति क्रियाभेदः[?] प्रतिपाद्यते पदैः कुत इत्याह व्यतिषक्तानां गुणप्रधानभावेनान्वितानां पदार्थानां तथाभूतत्वात् प्रकृतविशेषार्थप्रतीतिकृत्। गुणप्रधानभावेनान्वयश्चाकाङ्क्षादिसामग्रीवशादिति भावः। पदानामिति पाठे तु व्यतिषक्तानां समभिव्याहृतरूपाणां पदानां तथाभूतत्वाद् येन तथाविधार्थप्रतिपत्तिक्षमत्वादित्यर्थः। समभिव्याहारमाह तेषामपीति। इति पूर्वोक्तप्रकारेणेत्याहुरित्यन्विताभिधानवादिन इत्यर्थः। सामान्यविशेषरूपप्रवृत्तिविषयस्य सङ्केतकानां समन्वितत्वात् सामान्यरूपः पदार्थान्विततया च विशेषरूपः पदार्थः एकैकपदबोध्यः अतिविशेषभूतः प्रकृतोपयोगिशरीरः। तदेतदाह वाक्यान्तिरतः संसूच्यमानक्रियाकारकविशेषार्थकतया [?] असौ समुदितशरीरो वाक्यार्थ उच्यत इत्यर्थः। अवाच्य एव प्रतिपद्यते व्यवह्रियते बोध्यते वा पदैः, अर्थान्तरभूतस्य संसृष्टो प्रतिपाद्यार्थातिरिक्तस्य विध्यादेर्विध्यादिर्व्यङ्ग्यस्य वाच्यान्तरस्य वृद्धप्रयोगादेव। स च वाक्यरूप एव। वाक्यं चान्वयबोधनियतम्।

ततश्चोपदेशकाले उचित एव संबन्धग्रहणात् तत इत्यर्थः । वाचकमते तु पूर्वोक्तरीत्या निःशेषेत्यादौ विधेर्लक्षणत्वात् । अयमर्थः शब्दतदर्थवाच्यवाचकव्युत्पन्नानामेव वाक्यार्थप्रतीतिव्युत्पत्तिम् तदनुसारेणैव नियोगकालेऽप्यन्विततयैव प्रथमतः प्रतीतिः । ततश्च वाच्य एव वाक्यार्थः । किं तावत् तात्पर्याख्यवृत्त्यन्तरकल्पनयेति वदतो वक्तव्या[?] आनन्त्यव्यभिचाराभ्यां विशेषेषु सङ्केतग्रहणस्याशक्यतया कारकसामान्यान्विते क्रियासामान्ये, क्रियासामान्यान्विते कारकसामान्ये स्वयमाश्रयणीयः । ततश्चाभिधायाः सामान्यान्विते प्रतीतेऽपि तन्मात्रस्याकिञ्चित्करतया प्रकृतविनियोगयोग्यस्य कारकविशेषान्वितस्य क्रियाविशेषस्य बोधने भवन्मते तात्पर्याख्यद्वितीलक्षणावृत्तेरङ्गीकारत् व्यञ्जनैव वृत्तिरुपासितुमुचिता । तत्पश्चाद्भाविनोर्व्यङ्ग्यवस्त्वलङ्कारयोः पुनरभिधाने का कथा ! एवं युक्तं मतद्वये वृत्त्यङ्गीकारास्यावश्यकत्वमुपसंहरति अनन्वित इति ।

### साहित्यचूडामणिः

नन्वभिहितान्वये सामान्ये पदानां सङ्केतः, अन्विताभिधाने तु विशेषे । तत्र पूर्वस्मिन् सङ्केतवेलायां यथा सामान्यस्वीकारः एवमुत्तरत्रादि, येन गां बधानेत्यादौ तान्येव कतिचिदेतानि यानि पदानि गामानयेत्यादौ तदानीमनुभूतानीति प्रत्यभिज्ञारूपेण प्रत्ययेन पूर्वापरकालावगाढत्वलक्षणमनुसन्धानमुत्पद्यते । तच्च सामान्यस्वीकारादृते न संघटते । तत्र चैवमन्यैर्वक्तव्यं यत् पदार्थान्तरमात्रेणान्वयः न पुनरेतादृगिति विशेषपुरस्सरीकारेणापीति । तथा च पक्षान्तरादस्य न वैलक्षण्यमित्याशङ्क्याह—यद्यपीति ।

तथापीति । अवर्जनीयसन्निधानेन सामान्येनावच्छादितः न पुनर्वाक्ययत्नसाध्येन । व्यतिषक्तानां अन्योन्यमशक्यपृथक्काराणाम्, तथाभूतत्वाद् अवघातस्वेदवदवर्जनीयसन्निधित्वात् । ततोऽपि तस्य तत्रार्थक्रियाकारित्वाद् इत्यन्विताभिधानवादिनी येऽप्याहुरिति पूर्वपक्षः । सिद्धान्तयति—तेषामपीति । सामान्याकारः केवलमन्येषां पदार्थः । अस्माकं तु सामान्यावच्छादितो विशेषरूप इत्यस्य कोऽर्थः सामान्यविशेषयुगलमेलकस्वभाव इति । ततश्च गवानयनादिवाक्ये गोत्वादौ सामान्ये खण्डादिषु यत्किचिद्भूतेषु विशेषेषु च पदानां सामर्थ्योपक्षयः, तावत्येव संकेतौचित्यात् । यत् पुनरत्र वाक्यप्रयोक्तुः क्षीरभोजनाद्यर्थक्रियोपयुक्तं वस्तु, तस्य कथमन्यसाधारण्येन वाक्यार्थता । अतिविशेषेति । सामान्यस्पर्शशून्यो यत्किंचिद्विशेषव्यतिरिक्तशुद्धविशेषशब्दवाच्योऽर्थः योऽयमसंकेतितत्वाद् वाक्यार्थमध्यं नाध्यास्ते तत एवावाच्यः पदार्थो यत्र प्रतिपद्यते तत्र । उक्तमर्थं प्रस्तुतोदाहरणपृष्टे प्रतिष्ठापयति—निश्शेषेति । अत्र वापीगमनादीनां दीर्घिकाप्रयाणादिसामान्ये तदुपश्लेषशृङ्खलितेषु विशेषेषु च संकेतः । यत् पुनरत्र दूतीस्नानोचितं वाच्यादि वस्तु न तत्रेति तस्याप्यनभिधेयत्वे का कथा विधिनिषेधयोरभिधेयत्वशङ्कायाम् । चर्चेत्युपालम्भे प्रपञ्चितं पूर्वपक्षयुगलप्रतिक्षेपं पिण्डीकरोति—अनन्वितः इति । अन्योन्यमनन्वितोऽर्थोऽभिहितान्वये । पदार्थान्तरमात्रेणातिविशेषव्यतिरिक्तेनान्वितोऽन्विताभिधाने । अन्वितविशेष इति । उक्तन्यायादतिविशेषभूतः पदार्थोऽसंकेतित एवेति ।

### सम्प्रदायप्रकाशिनी

अतः कथमन्विताभिधाननयो निर्दोष इत्यत आह—यद्यपि वाक्यान्तरेत्यादि । प्रत्यभिज्ञाप्रत्ययेन प्रत्यभिज्ञारूपेण ज्ञानेन । इतिर्हेतौ । यतस्तान्येवैतानि निश्चीयन्ते, अतः पदार्थान्तरमात्रेणान्वितः पदार्थः सङ्केतगोचरः । पदप्रत्यभिज्ञानात् सामान्यान्वितः पदार्थः संकेतविषय इति यद्यप्यभ्युपगन्तव्यं, तथापि सामान्यावच्छादितो विशेष-

रूप एवासौ प्रतिपद्यते पदप्रत्यभिज्ञानबलात् सामान्यावच्छादितः सन्नपि विशेषरूप एव वाक्यार्थावधारणकाले प्रतीयते । तत्र हेतुः—व्यतिषक्तानां तथाभूतत्वादिति । 'देवदत्त गामानये' त्यत्र हि देवदत्तपदमानयेत्यादिपदार्थान्तरसामान्यान्वितं स्वमर्थमर्पयति, आनयेति पदं च देवदत्तादिपदार्थान्तरसामान्यान्वितं स्वमर्थमिति व्यतिषङ्गदशायां सर्वेषां विशेषरूपत्वात् । अनेन प्रकारेण येऽभिदधत्यन्विताभिधानवादिनस्तेषामभिमते सामान्यविशेषरूपः पदार्थः सङ्केतगोचरः । येनान्वीयते स सामान्यरूपः, स्वार्थस्तु विशेषात्मकः । अतः सामान्यविशेषरूप एव पदार्थः सङ्केतितत्वाद् वाच्यः, न तु वाक्यानन्तर्गतत्वादतिविशेषभूतो व्यङ्ग्यो वाच्यतया शङ्कितुमपि शक्यते । यत्र वाच्यव्यङ्ग्योर्विरोधाभावेनैक्यशङ्का सम्भवति, तत्रेयमुपदर्शिता भेदोपपत्तिः । यत्र तु स्वरूप एव विरोधः तत्रोपपत्तिं विनैव भेदः सिद्ध इत्याह—यत्र पदार्थ इत्यादि । पदार्थः अन्वितो वाक्यार्थ इत्यर्थः । प्रतिपद्यते पारिपूर्ण्येन प्रतीयते । तत्रार्थान्तरभूतस्य स्वभावत एव निषेधादतिविरोधिनो विध्यादेः । चर्चा विचारः । 'निश्शेषच्युतचन्दने'-त्यादौ हि तदन्तिकगमननिषेधो वाक्यार्थतया परिपूर्णः प्रतीयते । अथ वाक्यानन्तर्गतो योऽयमतिविशेषरूपस्तदन्तिकमेव गतासीति विधिस्तस्य वाच्यतायां का चर्चा । इत्थमभिहितान्वयान्विताभिधानदर्शनयोर्यदेतद् व्यङ्ग्यस्यावाच्यत्वं चर्चितं तन्निष्कृष्योपन्यस्यति—अनन्वितोऽर्थ इत्यादिना । वाक्यार्थः व्यङ्ग्यार्थात्मकः । अपदार्थ एव वाच्योऽर्थो न भवत्येवेत्यर्थः ।

### मधुमती

यद्यपीति । 'गामानय, गां बधान' इत्यादौ गोशब्दः तत्तद्वाक्ये प्रयुज्यमानः 'स एवे'ति प्रत्यभिज्ञाबलात् एकजातीयतया निश्चीयते, तेन आनयनान्विते बन्धनान्विते च शक्तिग्रहः प्राप्तः इत, नानार्थत्वाद्यापत्तिभिया इतरान्वितमात्रे शक्तिग्रहो वाच्यः । तथाच गोकर्मकानयनप्रतीतिः न स्यात् हेत्वभावात् इति तात्पर्यम् । तथापीति । सामान्यरूपादपि पदविशेषसमभिव्याहारात् आकाङ्क्षादिसहकारेण विशेषसिद्धिः इति भावः । अत्र हेतुमाह—व्यतिषक्तानामिति । सम्बद्धानां अन्वितानामिति यावत् । तथाच इतरान्वितस्वार्थ एव पदशक्तिरिति न दोषः इति भावः । एतेषामपि मते व्यङ्ग्यस्य अभिधेयत्वं निरस्यति—एतेषामिति । अतिविशेषभूतः घटकर्मकानयनादिरूपः । मतद्वयमपि प्रकृताविरोधितया समञ्जसयति—अन्वितेति । तथाच अन्वयस्य शक्यत्वे एव विवादः, न तु प्रतीयमानार्थान्तरस्य अनभिधेयत्वेऽपीति भावः ।

### विस्तारिका

ननु संसर्गस्यापि शक्यत्वे पदात् तदुपस्थितिप्रसङ्ग इति चेत् । न; सम्बन्धस्य सम्बन्धित्वविरहात्; सम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वात् । जातिमात्रशक्तादपि पदादविनाभावादिना व्यक्तेरुपस्थितिः, ततो व्यक्तेर्नाकस्मिकत्वम् ।

ननु 'घटमानय' इत्यादावानयनाद्यन्वितघटादौ घटादिपदशक्ति ग्रहे आनन्त्यम् । आनयनादीनां क्रियाणामनन्तत्वादिति क्रियापदार्थान्वितकारकपदार्थेषु कारकपदानां शक्तिरेवं कारकपदार्थान्वितासु क्रियासु च क्रियापदानामिति सामान्येन शक्तिर्वाच्या । तत्र चानुपपत्तिद्वयम्—क्रियाकारकबोधकानयनादिघटादिपदानां प्रतिवाक्यं नानात्वेनानुगामः । न च घोत्तरटत्वादिनाऽनुगमः, घकारादीनां टकारादीनां तद्घटितानुपूर्वीणामपि अननुगतत्वात् । नापि घत्वटत्वाद्यनुगमकं नियतव्यञ्जकव्यङ्ग्यताविरहेण गुणत्वम्, तस्य तस्य 'जातित्वविरहादित्येकाऽनुपपत्तिः । तथा

सामान्येन शक्तिग्रहे कथं घटानयनादिविशेषलाभः ? तद्रूपेण शक्त्यग्रहादित्यन्याऽनुपपत्तिः इति शक्याशक्यगोचरानुपपत्तिद्वयनिरासाय निश्चीयन्त इत्यन्तम् तथाभूतत्वादित्यन्त चाह—यद्यपीत्यादि । एतानि तान्येवेति पदानि निश्चीयन्त इति सम्बन्धः । एतानि प्रकृतवाक्यस्थितानि तानि वाक्यान्तरप्रयुक्तानि । अयन्तु पदैकत्वनिश्चयस्याकारः । एतत्प्रामाण्ये हेतुः—प्रत्यभिज्ञेत्यादि । प्रत्यभिज्ञा च 'तदेवेदं' पदम् इतिरूपेण । तेन प्रत्यभिज्ञानिश्चययोर्हेतुहेतुमद्भावेनान्वयः समीचीनः । प्रत्ययेन संवादकतया आश्वासहेतुना घकारादिज्ञानोत्तरभाविज्ञानविषयाणां टकारादीनां पदानामवच्छेदकानित्यत्वेऽपि नित्यत्वमविरुद्धम्, तेन पदानामेकैकत्वेनानन्त्यविरहात् शक्तेषु नानुपपत्तिः । पदार्थान्तरं क्रियादिपदार्थः कारकादिः । शक्यानुपपत्तिं सम्बन्धयति—तथापीति । सामान्यावच्छादितः क्रियापदार्थान्वितत्वादिसामान्यधर्मेण परिगृहीतः । विशेषरूपः । आनयनाद्यन्वितघटादिरूप एवेति, तस्यैव 'प्रकृतव्यवहारगोचरत्वात् । असौ सङ्केतः । व्यतिषक्तानां संसृष्टानाम् । तथाभूतत्वात् सामान्येन धर्मेण विशेषस्यैव गमकत्वात् । 'घटस्य रूपम्' इत्यत्र षष्ठ्याः सम्बन्धत्वेन समवायस्यैव । अन्विताभिधानवादिनो मीमांसकाः । तेषामपीति । सामान्यं क्रियापदार्थत्वादि । विशेष आनयनाद्यन्वितघटत्वादिः, ते रूपे शक्तिरूपे यस्य । सामान्यस्यानुगमकत्वाद् विशेषस्य व्यवहारोपयोगित्वात् । अतिविशेषः प्रकृतोपयोगायोग्यः, वाक्यान्तर्गतो वाक्यप्रयोगोद्देश्यभूतः । वाक्यार्थान्तर्गत इति पाठे वाक्यार्थे भासमाने योग्यताबलाद् भासित इत्यर्थः । असङ्केतितत्वादिति । सामान्यलक्षणप्रत्यासत्यभावेन सङ्केतग्रहकाले प्रत्यासन्नतया सङ्केताविषयत्वादित्यर्थः । अवाच्योऽनभिधेयः । पदार्थोऽन्वयव्यतिरेकाभ्यां पदैकगम्यः । तेनैते पदार्था मिथः ससंर्गवन्त आकाङ्क्षादिमत्पदस्मारितत्वादित्यनुमित्या शब्दस्य प्रामाण्यममन्यमाना वैशेषिका निरस्ताः, संसर्गस्यापूर्वत्वेन साध्यस्याप्रतीतेः । दूर इति । अनभिधेयवाक्यार्थप्रतीत्यनन्तरं वक्तृबोद्धव्यादिवैशिष्ट्यसाचिव्येन प्रतीयमानस्य व्यङ्ग्यस्य विप्रकृष्टत्वात् । अर्थान्तरभूतस्य तदन्तिकगमननिषेधविरोधिनस्तदन्तिकगमनस्य विध्यादेर्निषेधे निषेधेतरस्य । चर्चा प्रसङ्गः ।

वादिद्वयमतं युगपदुपसंहरति—अनन्वित इत्यादि । अनन्वितोऽसंसृष्टोऽर्थो वृत्तिविषयः । अन्वितविशेषो योग्यः प्रकृतोपयोगी । अपदार्थः पदवृत्त्यविषयः, वाक्यार्थः संसर्गः ।

## सारबोधिनी

ननु तत्रापि संसर्गविशेषो वाच्य एव, इतरपदार्थान्वित एव शक्तिग्रहात् । अन्यथा गामानयेत्यनन्तरं गामपसारयेत्युक्तौ तदेवेदं पदिमिति प्रत्यभिज्ञा न स्यात् । गवानयनतदपसारणरूपार्थभेदेन शब्दभेदादित्यपेक्षायामाह यद्यपीति । तथापीति । सामान्यावच्छादितः क्रियापदार्थान्वितकारकत्वादिसामान्यधर्मपरिगृहीतः । विशेषरूप आनयनत्वाद्यन्वितघटादिरूपः असौ सङ्केतः । व्यतिषक्तानां संसृष्टानाम् । तथाभूतत्वात्, सामान्यरूपेण विशेषस्यैव बोधविषयत्वात्, यथा घटस्य रूपमित्यत्र षष्ठ्या संबन्धत्वेन समवायस्य । विशेषसामान्यरूप इति सामान्येन विशेषरूपः शक्यः, न तु विशेषरूपत्वेनेत्यर्थः । अतिविशेषः प्रकृतोपयोगी योग्यः वाक्यान्तर्गतः वाक्यप्रयोगाद्देश्यः । "वाक्यार्थान्तर्गत" इति पाठे वाक्यार्थे भासमाने योग्यताबलाद्भासमान इत्यर्थः । असङ्केतितत्वादिति । सामान्यलक्षणप्रत्यासत्त्यभावेन सङ्केतग्रहकालाप्रत्यासन्नतया सङ्केतो विषयत्वात् । अवाच्योऽनभिधेयः पदार्थः अन्वयव्यतिरेकाभ्यां पदैकगम्यः । दूर इति । अनभिधेयार्थप्रतीत्यनन्तरं वक्तृबोद्धव्यवैशिष्ट्येन प्रतीयमानस्य व्यङ्ग्यस्यातिप्रकृष्टकत्वात् अर्थान्तरभूतस्य तदन्तिकगमननिषेधे विरोधिनस्तदन्तिकगमनस्य विध्यादेश्चर्चा

प्रसङ्गः । वादिद्वयमतं युगपदुपसंहरति अनन्वित इत्यादि । अन्वितविशेषः प्रकृतोपयोगी अपदार्थः पदवृत्त्यविषयः वाक्यार्थः संसर्गः ।

## काव्यप्रदीपः

ननु तथापि संसर्गविशेषोऽशक्य एव । पदार्थसामान्यान्वित एव शक्तिग्रहात् । अन्यथा 'गामानय' इति पदं श्रुत्वा 'अश्वमानय' इत्यादिवाक्ये तदेवेदमानयपदमित्यादि प्रत्यभिज्ञा न स्यात् । पूर्वस्य गवान्वितानयनपदस्याश्वान्वितानयनेऽशक्तत्वेनार्थभेदेन भेदादिति चेत्, न । पदार्थत्वेन सामान्येन विशेषणामन्वये शक्तिग्रहात् । अन्वितानां च विशेषरूपत्वात् ।" इत्याहुः । तेषामपि मते सामान्येनैव रूपेण विशेषः शक्यो न तु विशेषरूपेण । तथा च पदार्थान्तरसामान्यान्विते पदानां शक्तिः । गवादिविशेषान्वितस्तु विशेषो वाच्य एव । तस्मादभिहितान्वयवादेऽनन्वित एव । अन्विताभिधाननये तु पदार्थसामान्यान्वितः स्वार्थः संकेतविषयः गवादिविशेषान्वितानयनादिरूपस्त्वसंकेतित एवेत्यवाच्य एव वाक्यार्थः ।

## आदर्शः

इत्थं मीमांसकमतं दर्शयित्वा तत्रैव अनुपपत्तिद्वयमुद्‌भाव्य तत्रैकानुपपत्तेः शक्यपरिहारत्वेऽपि अन्वयानुपपत्तिरशक्यपरीहारेत्याह—यद्यपीत्यादिना गोचर इत्यन्तेन । गृहीतशक्तिपदात् वाक्यादभिन्नमेव तादृशवाक्यान्तरमित्यतः प्रथमानुपपत्त्युद्धारः । निश्चीयन्ते इत्यनन्तरं (अतः) वाक्यभेदनिबन्धनो न दोष इति पूरणीयम् । द्वितीयानुपपत्तिमुद्‌भावयति—पदार्थान्तरमात्रेणेति शक्तिग्रहकालदृष्टगवादिनैवेत्यर्थः; तथाच गवान्तरानन्वयबोधानुपपत्तिरिति दर्शितम् । समाधत्ते—तथाऽपीति । विशेषव्यक्तावपि सामान्येन रूपेण शक्तिग्रहः । तथाच सामान्यव्यक्तिषक्तव्यक्त्यवन्तराणामप्यन्वयबोध इत्याह—सामान्यावच्छादित इति । असाविति शक्तिग्रहकालोपलब्धव्यक्तिरित्यर्थः । व्यतिक्तानां सामान्यावच्छिन्नव्यक्त्यन्तराणाम् । 'तथाभूतत्वात्' शाब्दबोधविषयत्वात् । अत्र अदोष इति साध्यं पूरणीयम् । 'इत्थंमीमांसकमतं दर्शयित्वा तन्मतेऽपि व्याप्तेर्व्यभिचारं दर्शयति—तेषामपीति । 'सामान्यविशेषः'शक्तिग्रहकालदृष्टगवादिव्यक्तिरूपः । 'अतिविशेषः' द्वितीयावगतो गंवादिः । अविशेष इति क्वचित् सम्यगेव पाठः । वाक्यान्तर्गत इति वाक्यान्तरार्गत इत्यर्थः । वाक्यार्थान्तर्गतो वाक्यार्थान्तरान्तर्गतो वाक्यान्तरगत इति तु (वा ?) क्वचित् सम्यगेव पाठः । 'यत्र' मते 'अर्थान्तरभूतस्य' प्रथमप्रतिपन्नव्यक्तितो भिन्नस्य, 'विध्यादेः'निषेधप्रतियोगिनस्तदन्तिकागमनविध्यादेः । उभयमतेऽपि द्वितीयप्रतिपन्नव्यक्तिः संसर्ग एव व्यभिचारं दर्शयति—अनन्वित इति ।

## सुधासागरः

ननु तथाऽपि संसर्गविशेषोऽशक्य एव, पदार्थसामान्यान्वित एव शक्तिप्रहात् । अन्यथा गामानयेति पदं श्रुत्वा अश्वमानयेत्यादिवाक्ये तदेवेदमानयपदमित्यादि प्रत्यभिज्ञा न स्यात् । पूर्वस्य गवान्वितानयनपरस्याश्वान्वितानयनेऽशक्यत्वेनार्थभेदेन भेदादिति चेत् । न । पदार्थत्वेन सामान्येन विशेषाणाभिवान्वये शक्तिग्रहात् । अन्वितानां च विशेषरूपत्वादित्याहुरिति ।

तेषामपीत्यादि । अयमाशयः । तेषामप्यन्विताभिधानवादिनां मते सामान्येनैव रूपेण विशेषः शक्यो न तु विशेषरूपेण । तथा च पदार्थान्तरसामान्यान्विते पदानां शक्तिः, गवादिविशेषान्वितस्तु विशेषोऽवाच्य एवेति दूरेऽर्थान्तरभूतस्य तदन्तिकगमननिषेधविरोधिनस्तदन्तिकगमनस्य विध्यादेश्चर्चेति । चर्चा प्रसङ्गः । स्फुटमन्यत् ।

वादिद्वयमतं युगपदुपसंहरति—अनन्वित इत्यादि । अयमर्थः तस्मादभिहितान्वयवादेऽनन्वित एव, अन्विताभिधाननये तु पदार्थसामान्यान्वितः स्वार्थः सङ्केतविषयः, गवादिविशेषान्वितानयादिरूपस्त्वसङ्केतित एवेत्यवाच्य एव वाक्यार्थ इति ।

यदप्युच्यते ‘नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते’ इति। तत्र निमित्तत्वं कारकत्वं ज्ञापकत्वं वा शब्दस्य प्रकाशकत्वान्न कारकत्वं ज्ञापकत्वं तु, अज्ञातस्य कथं ज्ञातत्वं च सङ्केतेनैव स चान्वितमात्रे, एवं च निमित्तस्य नियतनिमित्तत्वं यावन्न निश्चितं तावन्नैमित्तिकस्य प्रतीतिरेव कथमिति ‘नैमित्तिकानुसारेण निमित्तानि कल्प्यन्ते’ इत्यविचारिताभिधानम्।

---

### सङ्केतः

यदपीति। अन्विताभिधानवादिभिः प्राभाकरैः इति शेषः। नैमित्तिकार्थेति। वाक्यार्थतात्पर्य नैमित्तिकोऽर्थः। निमित्तानि प्रस्तावात् शब्दाः। ततश्च तात्पर्यानुसारेण यदा शब्दाः कल्प्यन्ते तदा व्यङ्ग्यं वाच्यमेवेति तेषां भावः। अन्वितमात्रे सामान्यावच्छादितविशेषरूपे। न निश्चितमिति। निमित्तेषु सङ्केतः, न नैमित्तिके अर्थे। तत् कथं नैमित्तिकस्य साक्षात् प्रतीतिः ? तदप्रतीतौ च कथं पदार्थावगतिः नियतनिमित्ता स्यादिति भावः।

### बालचित्तानुरञ्जनी

अन्विताभिधानवादित्वादेकदेशिमतं दूषयितुमाह यदप्युच्यत इति। नैमित्तिकार्थानुसारेण वाक्यार्थतात्पर्यार्थानुसारेण निमित्तानि पदार्थाः कल्पयन्ते। ततो नैमित्तिक एवायं न व्यङ्ग्य इति वदन् वादी प्रष्टव्यः। किं नियतत्वं कारकत्वं ज्ञापकत्वं वेति विकल्प्याद्यं दूषयति शब्दस्येति। द्वितीयेऽपि ज्ञापकत्वमज्ञातस्य वा। नाद्य इत्याह ज्ञापकत्वन्त्विति। द्वितीयेऽपि अन्यस्मात् ज्ञानं संङ्केताद्वा, नाद्यः, असंभवादित्यभिप्रेत्य द्वितीयं दूषयति ज्ञातत्वञ्चेति। स च सङ्केतः अन्वितमात्रे सामान्यावच्छादितविशेषरूपे। अस्तु को दोष इत्याशङ्क्य निमित्तप्रतीतो नैमित्तिकप्रतीतिः नैमित्तिकप्रतीतौ निमित्तप्रतीतिरित्यन्योन्याश्रय इत्याह एवञ्चेति। फलितमाह इति नैमित्तकेति।

### काव्यादर्शः

यदपीति। अन्विताभिधानवादिभिरेव प्राभाकरैः। नैमित्तिकार्थेति। वाक्यार्थतात्पर्यानुसारेण निमित्तानि पदार्थाः कल्प्यन्ते, ततो नैमित्तिक एवायं न व्यङ्ग्य इति भावस्तेषाम्। अन्वितमात्र इति। सामान्यावच्छादितविशेषरूपे। एवं चेति। निमित्तेषु संकेत इति, नैमित्तिकेऽर्थे संकेताकरणात् कथं तस्य साक्षात्प्रतिपत्तिः, तस्मिंश्चाप्रतिपन्ने कथं पदार्थावगमानां नियतनिमित्तभावः। ततो न किंचिदेतत्।

### विवेकः

योऽपि दिवाभोजनाभावविशिष्टः पीनत्वानुम(मि)तरात्रिभोजनवद्व्यङ्ग्यमर्थं प्रति व्यापारान्तरमन्तरेण श्रुतत्वाच्छब्दस्य निमित्तभावः कल्पयते तन्मतमुद्भाव्य निराकरोति—यद्प्युच्यत इति तदप्यविचारिताभिधान इति सङ्गतिः। तदेतदेव विवृणोति तत्रेत्यादि। शब्दो हि न कुलालवद् घटप्रायमर्थं करोत्यपि तु प्रदीपवत् प्रकाशयति।

ज्ञापकोऽपि न चक्षुरादिवदज्ञातः, अज्ञातस्य तस्याज्ञापकत्वात् । एवञ्चेति—सङ्केतसव्यपेक्ष एव शब्दः स्वव्यापारमारभते न तु स्वभावत एवेति व्यवस्थितौ यत्रैवास्य सङ्केतस्तावन्मात्रस्य प्रतिपत्तिर्न्याय्या, न पुनश्चतुर्थकक्षापातिनोऽर्थान्तरस्येति । यदि तु पूर्वसङ्केतग्रहणसंस्कृतस्य प्रतिभानवतस्तथा प्रतिपत्तिर्भवतीत्यजेन क्रमेण निमित्तनैमित्तकभावोऽभिधीयते तदैतदङ्गीक्रियत एव, व्यङ्ग्यव्यञ्जकभावं प्रत्युपायतया शब्दार्थयोः प्रथममुपादीयमानत्वात् । तदुक्तं ध्वनिकृता (ध्व. आ. १/९-१०) आलोकार्थी यथा दीपशिखायां यत्नवाञ्जनः । तदुपायतया तद्वदर्थे बाच्ये तदाहृतः । यथा शब्दार्थ द्वारेण वाक्यार्थः संप्रदी(ती)यते । वाच्यार्थपूर्विका तद्वत् प्रतिपत्तस्य वस्तुनः ॥ इति ।

## दीपिका

नन्वन्वनिताभिधानवादे गामानयेत्यादिषु गोमहिषतुरगादिविषयकनिखिलानयनादिक्रियाव्यक्तिनिष्ठानयनत्वादिसामान्येनान्वितमानयनं न बलवन्न च मोचनाद्यनेकक्रियाऽधिष्ठानसकलगवादित्र्यक्तिप्रवृत्तिनिमित्तं गोत्वादिसामान्यं गवादिपदवाच्यम्, एवमानयनादिपदेनापि अनेककारकनिष्ठसामान्यान्वितमनेकविषयकानयनादिनिष्ठसामान्यं वाच्यमङ्गीकार्यम्, न च सामान्योरन्योऽन्यमन्वयः सम्भवति, व्यक्तिद्वारकान्वयस्तु व्यक्तीनामसामयिकतया नाधिधेयत्वेन निरस्त इति चेत्, किं पुनरतः ? प्रभाकरीयान्विताभिधानदौर्बल्यमिति चेत्, किमस्माकमनया परगृहचिन्तया ? यथा तथा प्राचीनतन्त्रपूर्ववृत्तिबोध्यो वाक्यार्थ इत्येतावानेव हि ध्वनितन्त्रसारः ।

यदि तु प्रभाकरैः सार्धं विजिगीषुकथाकण्डूदुर्द्धरो दाहः, तदा तानेव मृगयितुं राढादिराष्ट्रं गच्छेति व्यङ्ग्य एव सर्वो वाक्यानामर्थ इति निर्विवादमदः ।

ये तु गुरुदर्शनैकदेशिनः पीनस्य दिवाभोजननिषेधे रात्रिभोजनापेक्षवच्छब्दनिमित्तकप्रतीतेर्यथा यथा दर्शनं तथा तथोपात्तेन शब्देन तदनुगुणशब्दान्तरं भट्टनयवत् ।

यद्वा वाक्यार्थबोधानन्तरं वस्त्वन्तररूपः स एवार्थो व्यापारमन्तरेणाक्षिप्यत इत्याहुस्तान् प्रत्याह—यदपीति । तत्र वाक्ये चेति भवत्पक्षानुसारेण शब्दस्य वाक्यार्थानन्तरबोध्यवस्त्वलङ्कृती प्रति द्विधाऽपि निमित्तत्वं नास्तीत्यर्थः । प्रकाशकत्वादिति । न खलु शब्दो घटादिकमर्थं दण्डादिवज्जनयति, किन्तु प्रदीपादिवत् प्रकाशयत्येव तं प्रज्ञातस्य । कथमिति ? प्रत्यक्षेतरप्रमाणानां ज्ञानकरणत्वाभ्युपगमे ज्ञात एव शब्दोऽर्थप्रतिपत्तिसमर्थः । न च शब्दस्वरूपमात्रज्ञानमात्रादर्थप्रतिपत्तिः सम्भविनी, व्युत्पन्नाव्युत्पन्नयोरविशेषप्रसङ्गात् ।

तस्माद् व्यञ्जनाविद्वेषिणां गुरूणां मते मुख्यार्थे साक्षात्सम्बन्धस्य, परत्र तु मुख्यार्थसम्बन्धस्य परिज्ञान एवार्थसम्प्रत्ययो निर्वहति । न च प्रकृते तथा सम्भवतीति पूर्वस्य भावात्, द्वितीयस्यासंवेदनात् । संवेदनं तु न सम्भवति उभयसंवित्तिसाध्यत्वाद्, व्यङ्ग्यसंवेदनोपायविरहाच्च । तदिदमाह ज्ञातत्वञ्चेति । सम्बन्धितयेति शेषः । संकेतेनैवेति-साक्षान्मुख्यार्थबाधादिरूपेणेत्यर्थः । स च संकेतः, अन्वितमात्रे पूर्वोक्तदिशा । एवञ्च सम्बन्धप्रत्ययाभावाद् निमित्तस्य शब्दस्य नियतनिमित्तत्वं नियामकसम्बन्धशालित्वम, न निश्चितं न प्रमितम् । नैमित्तिकस्य विवादविषयस्य । कथमित्यनन्तरमुपसंहारस्यादौ । तस्मादिति शेषः ।

अयमभिसन्धिः—धर्मिकल्पनाद् वरं धर्मकल्पनमिति नीत्या शब्दान्तरस्याश्रूयमाणस्याभावेन श्रूयमाणस्य चाकिञ्चित्करतया व्यापारकमन्तरेण शब्दार्थप्रत्ययाभ्युपगमेऽतिप्रसङ्गभीत्या च तस्यैव शब्दस्याभिधानल-

क्षणातिरिक्तो व्यापारः कल्प्यते । वाक्यार्थपाश्चात्त्यप्रतीत्योर्वस्त्वलङ्कृत्योर्वाक्यार्थत्वे तूक्त एव न्यायः । तस्य सम्बन्धग्रहणापुरस्कारेणाप्यर्थप्रतीतिजननं धर्मिग्राहकप्रामाण्यगम्यमेव । अर्थापत्तिपक्षस्तु वस्त्वलङ्कृत्योर्वाक्यार्थस्य स्वातन्त्र्यविश्रामाभावविरहेण वाक्यार्थोक्तप्रतीतेरेवापर्यवसानेन निरस्त इति नात्रामर्षदुर्विलासः कार्यः ।

**दर्पणः**

अन्वितविशेषविशेषः व्यङ्ग्यरूपः अपदार्थोऽन्वितैरनन्वितैर्वा पदैर्बोध्योऽनभिधेयश्च, स न वाक्यार्थः । दिवादिभोजनरहितेऽपि रात्रिभोजनापेक्षेऽपि पीनशब्दनिमित्तका यस्य यस्यार्थप्रतीतिः तस्यापेक्षशब्दस्यनिमित्तता कल्पयते किं व्यापारान्तरकल्पनयेति वदन्तं गुरुदर्शनैकदेशिनां मतमनूद्य दूषयति तदपीति । शब्दो हि नाज्ञानादिव घटं करोति किन्तु दीपवत् प्रकाशयति ज्ञापयति वेति प्रत्यक्षतरप्रमाणानां हि ज्ञाते कारणत्वम् । शब्दान्तरस्य करणत्वे गामानयेत्यादिवाक्येषु ज्ञानाविशेषे प्रयोगाः स्यात् । स च सङ्केतः पूर्वोक्तदिशाऽन्वितमात्रे, न तु व्यङ्ग्येऽर्थे ।

उपसंहरति एवञ्चेति । नैमित्तिकस्यानियतनिमित्तत्वमित्यस्यार्थः नियामकरूपसंबन्धशालित्वम्, नैमित्तकस्य व्यङ्ग्यार्थस्य सम्बन्धग्रहणात् । पुरस्कारेऽपि च वाक्यार्थप्रतीतिर्धर्मिग्राहकप्रमाणगम्या । यदि तु पूर्वसङ्केतग्रहेण संस्कृतस्य प्रतिभानवतः तया प्रतिपत्तिर्भवतीत्यनेन क्रमेण निमित्तनैमित्तिकभावोऽभिधीयते । तदेतदङ्गीक्रियत एव । व्यङ्ग्यव्यञ्जकभावं प्रत्युपात्तयोः शब्दार्थयोः प्रथममुपपादनीयत्वात् । तदुक्तं ध्वनिकृता—

**आलोकार्थी यथा दीपशिखायां यत्नवान् जनः ।**
**तदुपायतया तद्वदर्थे वाच्ये तदादृतः ॥**

**यथा पदार्थद्वारेण वाक्यार्थः संप्रतीयते ।**
**वाच्यार्थपूर्विका तद्वत् प्रतिपत्तस्य वस्तुनः ॥ [इति ध्व. लो. १/९,१०]**

ननु तर्हि भट्टनयवत् पीनो देवदत्तो दिवा न भुङ्क्ते इत्यादौ रात्रौ भुंक्त इत्यादिवाक्यशेषवदत्रापि व्यङ्ग्यार्थप्रतीतौ वाक्यविशेषः कल्प्यतामिति चेन्न । धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायात् । व्यापारान्तरकल्पनस्यैव न्यायात् ।

**साहित्यचूडामणिः**

ननु विधिर्निषेधो वा या पार्यन्तिकी प्रतिष्ठा स वाक्यार्थः । तद्वशाच्च तदनुगुणा काचित् सङ्केतादि सामग्री कल्पनीया, अभिलषितसिद्धौ तदुपायन्वेषणप्रयास इत्याशङ्क्याह—यदपीति । नैमित्तिकानां हेतुमतामर्थानामनुसारेण यद् यत्प्रयोगाधीनप्रतीतिकं तत् तन्निमित्तकमित्याकारेण निमित्तानि सम्बन्धग्रहणादीनि कल्प्यन्ते उन्नीयन्ते । एतत् खण्डयितुं विकल्पयति—निमित्तत्वमिति । आदिमं पक्षं प्रतिक्षिपति शब्दस्येति । इतरथा क्षुरमोदकशब्दोच्चारणेषु मुखस्य पाटनपूरणेस्याताम् । द्वितीयं दलयति—ज्ञापकत्वं चेति । ज्ञातमेव हि धूमादि धूमध्वजादेर्ज्ञापकम् । सङ्केतनैवेति । वाचकपरिज्ञाने व्यतिरिक्तकारणाभावात् । सङ्केतश्चान्वितमात्रे न पुनरतिविशेषलक्षणेऽन्वितविशेषे । एवञ्चेति । परस्पराश्रयपराहतत्वाद् न केनचिदपि प्रकारेण घटते । सानुवादं निगमयति—नैमित्तिकेति ।

## सम्प्रदायप्रकाशिनी

अथान्विताभिधानवादिष्वेकदेशिमतमुपन्यस्य दूषयति—यदप्युच्यते नैमित्तिकेत्यादिना । व्यङ्ग्याभिमत एव भवतु वाक्यार्थः । स हि शब्दनिमित्तकत्वाद् नैमित्तिकः । निमित्तभूताश्च शब्दा नैमित्तिकमप्रतिपाद्य न मध्ये विरमन्तीति किं वृत्त्यन्तरकल्पनाप्रयासेन । निमित्तानि हि नैमित्तिकार्थानुसारेण कल्पयन्त इति यदुच्यते तदेतद् विकल्प्य खण्डयति—तत्र निमित्तत्वमित्यादि । तत्रेति तच्छब्दो यच्छब्दविमृष्टामुक्तिं परामृशति । यदिदं व्यङ्ग्य-प्रतीतौ शब्दा निमित्तानि कल्प्यन्त इत्युच्यते, किमिदं निमित्तत्वं नाम । किं कारकत्वम् उत ज्ञापकत्वम् । तत्र प्रथमं कल्पनभ्युपगमेनैव निराचष्टे—शब्दस्य प्रकाशकत्वादिति । न हि घटादिशब्देन घटादिरर्थः क्रियते, अपि तु प्रकाश्यत एव । तर्हि ज्ञापकत्वमित्यत आह—ज्ञापकत्वं त्विति । अज्ञातस्येति । यो हि धूमादिरग्न्यादेर्ज्ञापकः, स हि नियतसम्बन्धतया ज्ञात एव ज्ञापकतामश्नुते । प्रकृते तु शब्दो व्यङ्ग्यार्थज्ञापने नियतसम्बन्धतया न ज्ञायत इति कथं ज्ञापकत्वम् । ननु कथं नियतसम्बन्धतया न ज्ञायत इत्यत आह—ज्ञानत्वं चेति । अस्यार्थस्यायं ज्ञापक इति शब्दस्य यदेतज्ज्ञापकत्वं तत् सङ्केतेनैव । स च सङ्केतः पदार्थान्तरमात्रान्विते वाच्य एव, न त्वन्वितविशेषे व्यङ्ग्य इति यावत् । अतो ज्ञापकता न सम्भवतीति सोपपत्तिकं निगमयति—एवञ्च निमित्तस्येत्यादि । उक्तेन प्रकारेण व्यङ्ग्यार्थप्रतीतौ निमित्तत्वेनाभ्युपगतस्य शब्दस्य निमित्तत्वमेव यावन्नियततया न निश्चितं तावद् 'नैमित्तिकार्थानुसारेण निमित्तानि कल्प्यन्त' इत्येतदविचारिताभिधानम् ।

## मधुमती

एकदेशिमतं आशङ्कते—यदपीति । तथाच सत्यां व्यङ्ग्यान्तरप्रतीतौ अभिधादिनिमित्तं कल्प्यते इति हृदयम् । दूषयति—तत्रेति । सति कार्ये कारणकल्पना युज्यते । प्रकृते तु हेत्वभावात् तत्प्रतीतिरेव न स्यात्, अभिधायाः नियतविषयत्वात्, अन्यस्य च तथात्वाभावात्, व्यञ्जना च त्वया नाभ्युपेयते इति भावः ।

## विस्तारिका

'ननु व्यङ्ग्यप्रतीतिर्नैमित्तिकी निमित्तान्तरानुपलब्धेः शब्दमेव निमित्तयति । तच्च बोधकबोध्यत्वरूपनिमित्तकत्वं वृत्तिं विना न स्यादित्यभिधैव वृत्तिरित्याह—यदपीत्यादि । प्रकाशकत्वाद् ज्ञापकत्वात् । शब्दस्य ज्ञापकत्वं सम्बन्धित्वेन स्मारकत्वम् । अज्ञातस्य सम्बन्धित्वेनागृहीतस्य प्रत्यक्षेतरप्रमाणस्य ज्ञानकरणत्वनियमात् सङ्केतेन सम्बन्धित्वेनोद्देशनेन । स च सङ्केतोऽन्वितमात्रेणान्वितविशेषेण वा विध्यादौ ।

ननु शब्दस्य साक्षात्कारविषयत्वेन ज्ञातत्वमस्त्येवेत्यत आह—एवञ्चेत्यादि । एवं ज्ञानमात्रे निमित्तस्य शब्दस्य निमित्तत्वं ज्ञापकत्वं तन्नियतवृत्तिमत्त्वेन तदवच्छेदकेनावच्छिन्नम् । तेन वृत्तिमत्त्वज्ञानं प्रयोजकम्, न तु ज्ञानमात्रमित्यर्थः । अविचारिताभिधानमविषयेवचनप्रयोगः ।

अत्र केचित्—पदस्य यत्र क्वचन सङ्केतग्रहे तत्प्रतिपाद्ये सर्वत्रैव शक्तिरिति किं व्यञ्जनयेत्याहुः, तदाह—सोऽयमित्यादि । यथा शत्रुमुद्दिश्य क्षिप्तेन शरेण तत्कवचादेस्त्वचश्च भेदनम्, तथैकया अभिधया विवक्षितनिखिलार्थस्य क्रमेण प्रत्यायनमित्यर्थः । न चैकार्थप्रतीतौ शब्दस्य विरतिप्रसङ्गः, विवक्षितार्थप्रत्यायनेनैव विरामात् ।

तदाह—यत्पर इत्यादि । यमुद्दिश्य शब्दः प्रयुज्यत इत्यर्थः । विधिरेवेत्येवकारेण प्राधान्यसूचनम् । आन्तरालिका-नामान्येषां तदुपायतया गुणीभाव इति भावः । इत्यभिदधतीत्यन्वयः ।

## सारबोधिनी

ननु व्यङ्ग्यप्रतीतिर्नैमित्तिकी, निमित्तान्तरानुपलब्धेः शब्द एव निमित्तम्, तच्च बोध्यबोधकत्वरूपम् । निमित्तत्वं वृत्तिं विना न संभवतीति अभिधैव वृत्तिरित्याह यदपीति । अज्ञातस्येति । प्रत्यक्षेतरप्रमाणस्य ज्ञानकारणत्वनियमात्, च चान्वितमात्रे नान्वितविशेषे न वा विध्यादौ ।

नन्वस्तु विशेष एव सङ्केत इत्यपेक्षायामाह एवञ्चेति । निमित्तस्य शब्दस्य चेत्यर्थः । नियतनिमित्तत्वं विशेषसङ्केतत्वम् । तेषाञ्च विशेषसङ्केतज्ञाने तदुपस्थितिस्तदुपस्थितौ च सङ्केतज्ञानमित्यन्योन्याश्रयः स्यादिति भावः ।

## काव्यप्रदीपः

यद्यपि कैश्चिदुच्यते—'शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तत्र सर्वत्रापि शब्द एव निमित्तम् । यतो नैमित्तिकानुरोधेन निमित्तानि कल्प्यन्ते' इति । तदप्ययुक्तम् । शब्दस्य ह्यर्थे निमित्तत्वं कारकत्वं ज्ञापकत्वं वा । न प्रथमम् । शब्दस्यार्थानुत्पादकत्वात् । चरमं पुनरनुमन्यते परं तु संकेतवत्त्वेन ज्ञातस्य । अज्ञातस्य स्वरूपमात्रेण ज्ञातस्य वा ज्ञापकत्वेऽतिप्रसङ्गात् । न चान्वयविशेषे संकेतग्रहः । अस्तु विशेष एव संकेतग्रह इति चेत्, लोष्टाद्यन्वितानयनादेर्विशेषस्योपस्थापकान्तराभावेन शब्दादेवोपस्थितिर्वाच्या । तथा च तत्र संकेतग्रहे शब्दात्तदुपस्थितिः शब्दाश्च तदुपस्थितौ संकेतग्रह इत्यन्योन्याश्रयात् । तस्मानैमित्तिकानुरोधेन निमित्तानि कल्प्यन्त इत्यविचारिताभिधानम् ।

## आदर्शः

बोधकत्वेन शब्दो निमित्तम्, नैमित्तिकन्तु ज्ञानम्, तद्विषयतया अर्थोऽपि नैमित्तिकः । ईदृशनिमित्तनैमित्तिकभावादेव निमित्तस्य शब्दस्य नैमित्तिकव्यङ्ग्यार्थवाचकत्वसिद्धिरिति ऋजुबुद्धीनां मतमाह—यदपीति । 'निमित्तानि' शब्दा इत्यर्थः । प्रकाशकत्वादिति, न च स्वजन्यशब्दस्य जनके प्रकाशके च शब्द इति शब्दे व्यभिचारः, प्रकाशकमात्रत्वादिति करणे तु मात्रपदेन कारकत्वन्वयवच्छेदे साध्याविशेष इति वाच्यम्, प्रकाशकत्वमात्रग्राहकान्वव्यतिरेकशालित्वादिति तदर्थात् । अज्ञातस्येति, न च ज्ञातस्यैव शब्दस्य निमित्तत्वं तेनाप्युच्यत इति तत्र कथमिदमुक्तमिति वाच्यम्, 'शक्तिरूपसम्बन्धेन तदर्थे सम्बन्धितयाऽज्ञातस्येत्यर्थात्' । सङ्केतेनैवेति शक्तिग्राहक 'कोषादिनैवेत्यर्थः । स चेति सः' सङ्केतग्रहकः । 'अन्वितमात्रे, प्रथमप्रतीतान्वितमात्रे, न तु द्वितीयप्रतीते तदन्तिकमेव रन्तुमित्यादिके । एवञ्चेति । नियतनिमित्तत्वम् शक्तिरूपसम्बन्धेन नियतार्थं प्रति यथोक्तनिमित्तत्वमित्यर्थः ।

## सुधासागरः

ननु व्यङ्ग्प्रतीतिर्नैमित्तिकी निमित्तान्तरानुपलब्धेः शब्द एव निमित्तम्, तच्च बोध्यबोधकत्वरूपं निमित्तत्वं वृत्तिं विना न भवतीत्यभिधैव वृत्तिरित्येकदेशिमतमाशङ्क्य खण्डयति—यदपीत्यादि । अयमाशयः-यदपि कैश्चि-

दुच्यते, शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तत्र सर्वत्राऽपि शब्द एव निमित्तम्, यतो नैमित्तिकानुरोधेन निमित्तानि कल्पयन्ते' इति। तदप्ययुक्तम्। शब्दस्य हि अर्थे निमित्तत्वं कारकत्वं ज्ञापकत्वं वा? न प्रथमम्, शब्दस्यार्थानुत्पादकत्वात्। चरमं पुनरनुमन्यते, परन्तु सङ्केतवत्त्वेन ज्ञातस्य। अज्ञातस्य स्वरूपमात्रेण ज्ञातस्य वा ज्ञापकत्वेऽतिप्रसङ्गात्। न चान्वयविशेषे सङ्केतग्रहः। नन्वस्तु विशेषे एव सङ्केतग्रह इत्यपेक्षायामाह एवञ्चेत्यादि। नियतनिमित्तत्वं विशेषसङ्केतवत्त्वम्। अयं भावः—अस्तु विशेष एव सङ्केतग्रह इति चेत्। न। वाक्यार्थस्यापूर्वत्वेन प्रागनुपस्थितेर्लोष्ठाद्यन्विताऽऽनयनादेर्विशेषस्योपस्थापकान्तराभावेन शब्दादेवोपस्थितिर्वाच्या। तथा च तत्र सङ्केतग्रहे शब्दात्तदुपस्थितिः, शब्दात्तदुपस्थितौ सङ्केतग्रह इत्यन्योन्याश्रयादिति। न च व्यञ्जनाऽपि तद्वद् दुर्ग्रहेति वाच्यम्, अभिधा लक्षणा वा ज्ञातैवोपयोगिनीति सत्यम्, धर्मिग्राहकमानसिद्धा व्यञ्जना त्वज्ञातैव बोधिका। न चातिप्रसङ्गः वक्त्रादिवैशिष्ट्यापेक्षणात्, फलवत्त्वेन तथैव कल्पनादिति दिक्। तस्मान्नैमित्तिकानुरोधेन निमित्तानि कल्प्यन्ते इत्यविचारिताभिधानमिति।

ये त्वभिदधति 'सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः' इति 'यत्परः शब्दः स शब्दार्थः' इति च विधिरेवात्र वाच्य इति। तेऽप्यतात्पर्यज्ञास्तात्पर्यवाचोयुक्तेर्देवानांप्रियाः। तथाहि, 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानक्रियानिर्वर्तकस्वक्रियाभिसम्बन्धात् साध्यायमानतां प्राप्नुवन्ति। ततश्चादग्धदहनन्यायेन यावदप्राप्तं तावद्विधीयते यथा ऋत्विक्प्रचरणे प्रमाणान्तरात् सिद्धे 'लोहितोष्णीषाः ऋत्विजः प्रचरन्ति' इत्यत्र लोहितोष्णीषत्वमात्रं विधेयं हवनस्यान्यतः सिद्धेः 'दध्ना जुहोती'इत्यादौ दध्यादेः करणत्वमात्रं विधेयम्। क्वचिदुभयविधिः क्वचित् त्रिविधिरपि यथा 'रक्तं पटं वयः' इत्यादौ एकविधिर्द्विविधिस्त्रिविधिर्वा। ततश्च यदेव विधेयं तत्रैव तात्पर्यमित्युपात्तस्यैव शब्दस्यार्थे तात्पर्यन्न तु प्रतीतमात्रे। एवं हि पूर्वो धावतीत्यादावपराद्यर्थेऽपि क्वचित्तात्पर्यं स्यात्।

---

**सङ्केतः**

इषोरिवेति। यथा धनुष्मता मुक्तः शरः वर्मोरसी भित्त्वा शत्रोः जीवितमादत्ते प्रवृत्तिभेदाभावेऽपि, तथा वाक्यमपि दीर्घदीर्घाभिधाव्यापारैः वाच्यव्यङ्ग्ये वक्ति इति भावः। अभिधा हि यत्पर्यन्ता तत्रैवाभिधायकत्वं उचितम्, तत्पर्यन्तता च प्रधाने ध्वनावेव। एतेन—वाच्यव्यङ्ग्ययोः अभिधैव व्यापारः इत्युक्तम्। विधिरेवेति। विधिरेव वाच्यः, न पुनः निषेधः, अवान्तरत्वात्। विधेस्तु निर्वाहत्वात् वाच्यता इति भावः। अत्र 'निःशेषच्युते'त्यादौ। अतात्पर्यज्ञाः ये 'यत्परः शब्दः स शब्दार्थः' इत्येतत् सम्यक् न जानन्ति ते इत्यर्थः। भूतं प्रमाणान्तरेण सिद्धम्। प्रमाणान्तरादसिद्धं तु भवतीति व्युत्पत्त्या भव्यं साध्यमिति यावत्। कारकपदार्थाः इति। यथा 'चैत्रः काष्ठैः स्थाल्यां अन्नं पचति' इत्यादौ अन्नपाकश्चेत् अन्यतः सिद्धः, तदा स्थाल्याधारत्वमेव विधेयम्, तस्यैव साध्यत्वात्। प्रधानक्रिया प्रचरणरूपा क्रिया। स्वक्रियाः लोहितोष्णीषत्वविधानाद्याः क्रियाः। साध्यायमानतां साध्यस्वरूपताम्। यावदप्राप्तम्। यावन्मात्रं साध्यं तावन्मात्रं विधेयमित्यर्थः। लोहितोष्णीषत्वमात्रमिति यत् तस्यैव सर्वैः कारकैः साध्यत्वात्। अस्मिन् दृष्टान्तद्वये वस्त्वेकमेव विधेयमिति मात्रशब्दात् लभ्यते। रक्तं पटमिति। अत्र रक्तत्ववानपटभवनानां क्रमयौगपद्याभ्यां साध्यत्वे एकद्वित्र्यादिविधिः। उपात्तस्यैवेति। उक्तस्यैव शब्दस्य सम्बन्धिन्यर्थे अभिधेये तात्पर्यम्, न तु हेत्वन्तरेण ज्ञातमात्रे व्यङ्ग्येऽप्यर्थे तात्पर्यप्रसङ्गः। एवमिति। ज्ञातमात्रे तात्पर्यप्रसङ्गे अङ्गीक्रियमाणे पूर्वशब्दस्य सापेक्षत्वात् अपराद्यर्थोऽपि ज्ञायते इति तत्रापि किं तात्पर्यम्?।

## बालचित्तानुरञ्जनी

एकदेश्यन्तरमतं दूषयितुमाह ये त्वभिदधतीत्यादि। यथा इषुः उरश्छदं, उरश्च भित्वा जीवितं गृह्णाति न कश्चित् प्रवृत्तिभेदस्तथा शब्दस्याभिधाव्यापार एक एव स्वार्थमर्थान्तरं वा गमयतीति न व्यापारभेद इत्यर्थः। यत्पर इति। अभिधा हि यत्पर्यन्ता तत्रैवाभिधायकत्वमुचितम्। तत्पर्यन्तता सा च प्रधानभूतव्यङ्ग्ये स्यादिति ध्वनेर्यन्निरूपितं तत्राप्यभिधाव्यापारेण भवितुं युक्तम्। ततो व्यङ्ग्यस्य विधेः प्राधान्येन वाच्यत्वमेव न्याय्यमिति तेषामभिप्रायः। तात्पर्यवाचोयुक्तेर्यत्परः शब्दः स शब्दार्थ इति वचनस्यातात्पर्यज्ञाः अभिप्रायं न बुध्यन्त इत्यर्थः। देवानां प्रियाः पशव इत्यर्थः। यद्वा, देवानामिन्द्रियाणां प्रिया सुखिनः अज्ञा इति यावत्। एतदेव व्याचष्टे तथाहीति। भूतं प्रमाणान्तरेण सिद्धम्। भव्यं, भवतीति व्युत्पत्त्या साध्यम्। कारकपदार्था इति। यथा देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्यादावोदनपाकश्चेदन्यतः सिद्धः तदा स्थाल्यामधिकरणत्वमात्र विधेयम्। तस्यैव साध्यत्वात्। स्वीक्रियेति। लोहितोष्णीषत्वाभिधानादिकाः क्रियाः। ननु कारकस्य साधनाभावात्तत्र वाक्यस्य तात्पर्यं न स्यादित्याशङ्क्याह साध्यायमानतामिति। साध्यस्वरूपतामित्यर्थः। फलितमाह ततश्चेति।

उदाहरणमाह यथेति। अन्यत् सर्वं प्रमाणान्तरसिद्धमिति लोहितोष्णीषत्वमात्रमेव सर्वैः कारकैः साध्यत इत्यर्थः। उदाहरणान्तरमाह हवनस्येति। अन्यत् इति। अग्निहोत्रं जुहोतीत्यनेन। अनयोरुदाहरणयोरेकमेव वस्तु विधेयं न तु द्वयमिति मात्रशब्दार्थः। मात्रशब्दव्यावर्त्यमाह क्वचिदिति। यथेति। रक्तत्वं वा न वेदं नान्यत् सिद्धं तदा पटमात्रं विधेयम्। क्वचित्तु साक्षाच्छब्देनैव त्रयं विधेयम्। फलितमाह ततश्चेति। उपात्तस्य उक्तस्यैव शब्दस्य संबन्धिन्यर्थेऽभिधेये तात्पर्यं न तु निमित्तान्तरेण प्रतीतिमात्रेण व्यङ्ग्ये तात्पर्यावकाशः। ज्ञानमात्रे तात्पर्यप्रसङ्गे अङ्गीक्रियमाणे बाधकमाह एवं हीति। पूर्वशब्दस्य सापेक्षत्वादपराद्यर्थोऽपि प्रतीयेत इति तत्रापि तात्पर्यं स्यादित्यर्थः।

## काव्यादर्शः

इषोरिवेति। यथा इषुरुरश्छदमुरश्च भित्त्वा जीवितं गृह्णाति, न च प्रवृत्तिभेदः कश्चित् तथा शब्दस्याभिधाव्यापार एवैकः स्वार्थमर्थान्तरं च गमयतीति न व्यापारभेदः। यत्पर इति। अभिधा हि यत्पर्यन्ता तत्रैवाभिधायकत्वमुचितम्। तत्पर्यन्तता च प्रधानीभूते व्यङ्ग्य इति ध्वनेर्यन्निरूपितं रूपं तत्रैव अभिधाव्यापारेण भवितुं युक्तम्। ततो व्यङ्ग्यस्य विधेः प्राधान्ये वाच्यत्वमेव न्याय्यमिति तात्पर्यवादिनः। तदपि नैवेत्याह-तदतात्पर्यज्ञा इति। यत्परः शब्दः स शब्दार्थ इत्यस्य अभिप्रायं न बुध्यन्त इत्यर्थः। एतदेव व्याचष्टे-तथा हीति। भूतभव्येति। प्रमाणान्तराद् अवमतम्, अत एव भूतं सिद्धम्। प्रमाणान्तराद् असिद्धं तु भवतीति भव्यगे 'य' इति निपाते भव्यं यत्साध्यम्। कारकपदार्था इति। यथा 'देवदत्तः काष्ठैः स्थाल्यामोदनं पचति' इत्यादौ ओदनपाकश्चेद न्यतः सिद्धस्तदा स्थाल्यधिकरणत्वमात्रं विधेयं, तस्यैव साध्यत्वात्। स्वक्रियेति। लोहितोष्णीषत्वविधानादिकाः क्रियाः। साध्यायमानतामिति साध्यस्वरूपताम्। लोहितोष्णीषत्वमात्रमिति। तद्धि एकं सर्वैः कारकैः साध्यते। करणत्वमात्रमिति। अनयोरुदाहरणयोरेकमेव वस्तु विधेयं, न तु द्वयमपीति मात्रशब्दस्यार्थः। एकविधिरिति। रक्तत्वं वानं च वेद् अन्यतः सिद्धं तदा पटमिति विधीयते। वानं च पटमिति च सिद्धं चेत् तदा रक्तत्वमात्रं विधेयम्। पटभवनं हि भव्याय साध्याय रक्ततावगमनायोपदिष्टमिति रक्ततावगमनपरत्वं वाक्यस्येत्यर्थः। क्वचित्तु रक्तत्वं

पटत्वं च द्वयं विधेयम्। क्वचित्तु साक्षाच्छब्देनैव त्रयं विधेयम्। उपात्तस्यैवेति। उक्तस्यैव शब्दस्य संबन्धिन्यर्थेऽभिधेये तात्पर्यं, न तु निमित्तान्तरेण प्रतीतमात्रे व्यङ्ग्येऽप्यर्थे तात्पर्याकाशः। अपराद्यर्थेऽपीति। पूर्वशब्दस्य सापेक्षशब्दत्वाद् अपराद्यर्थोऽपि प्रतीयत इति तत्रापि तात्पर्यं स्यात्; न चैतद् वाक्यद्वयमित्याह—चकार इति। तथा हि चैमिनिः—

**विभागे सति साकाङ्क्षं चेद् भवेत् तत एकं वाक्यमर्थैकत्वात्।**

यदि तु विभागो निराकाङ्क्षौ (?क्षः)तदा द्वे वाक्ये अर्थद्वयवत्त्वात्।

## विवेकः

अथ तत् परमुद्देश्यं यस्यासौ तत्परस्तस्य भावस्तात्पर्यं, शब्दस्य व्यङ्ग्यपरत्वं निर्विवादमाह 'यत्परः शब्दः स शब्दार्थ' इति न्यायात्। [यथा] धनुष्मता मुक्तः शरः शत्रोः कवचत्वङ्मांसादिकं निर्भिद्यैकयैव प्रवृत्त्या व्याप्रियते तथैव शब्दोऽपि दीर्घदीर्घाभिधाव्यापारैः स्वार्थाभिधानमर्थान्तरप्रतीतिश्च तात्पर्यतः करोतीति किमत्र व्यापारान्तर-कल्पना गौरवेणेति ये ब्रुवते तान् प्रति साटोपपरिहासमाह येत्विति। तात्पर्यवाचोयुक्तिः वाचकत्वम्। देवानांप्रियाः पशवः षष्ठ्या अलुक् (पा. ६.३.२१ वा:)। तथाहीति तेन बुद्धिस्थेन प्रकारेणोपपाद्यते ह्येतदित्यर्थः। सिद्धं परार्थत्वादप्रधानं, साध्यं त्वपरार्थत्वात् प्रधानम्। न च गुणप्रधाने(न)भावमन्तरेण वाक्ये पदानां समन्वयो भवति। तत्र साध्यत्वात् प्रधानं क्रिया, सिद्धत्वादप्रधानं कारकाणीत्यर्थः। एवञ्च परिनिष्पन्नरूपत्वादात्मलाभनिरपेक्षस्य सिद्धात्मनः साधनभावो घटते, न तूक्तविपरीतस्येति। यद्यपि कारकपदार्थाः सिद्धात्मानस्तथापि कुर्वत् कारकं नाकुर्वत्, इतरथा प्रधानक्रियां प्रति तस्याननुकूलत्वादित्याह भूतेत्यादि। न तत्समस्तस्यैव वाक्यार्थस्य साध्यसा-धनभावेनान्वयसिद्धस्यापि साध्यमानता ऽध्यवसीयते। अतएव प्रथमदाहेऽदग्धस्य भागस्य दहनाय पुनर्दाहो यथा तथा च [य]दन्यतोऽनधिगतसिद्धिकं तत्रैव भगवती तात्पर्यशक्तिर्निविशते, क्वचिद्विशेषणामात्रे, क्वचित् कार-कमात्रे, क्वचिद्विशिष्टे यथा लोहितोष्णीषादिषु। यदि पुनः प्रतीतिमात्रे तात्पर्यं स्यात्तदाऽतिप्रसङ्ग इत्याह एवं हीति। आदिपदात् पारावार-ह्रस्व-दीर्घादयाः साक्षेयाः द्रष्टव्याः।

## दीपिका

अथैकदेश्यन्तराणां युक्तिद्वयं परस्परोपकारकमुपन्यस्य दूषयति येत्विति। यथा खल्विषुर्धनुष्मता मुक्त एकेनैव वेगव्यापारेण वैरिणा कवचत्वगादिकं सर्वमेव निर्भिनत्ति, तथा शब्दोऽप्येकेनैवाभिधाव्यापारेण यावदुद्देश्यं प्रकाशयति। यत्परः यदुद्देश्येन प्रयुक्तः शब्दः स शब्दार्थः शब्देनावश्यबोध्यः, अन्यथा तत्प्रयोगवैयर्थ्यप्रसङ्गात् शब्दस्यैवंविधस्थले विवादविषयवस्त्वत्वलङ्कृतिप्रधानत्वस्य निर्विवादत्वात्। तन्मुखप्रेक्षिणा तेनान्तरविश्रामर-हितेन झटित्येव तात्पर्यप्रतीतिः क्रियत इति किमत्र व्यापारान्तरकल्पनया। विधिरेवेत्येवकारो व्यत्ययेन योज्यः। अत्र 'निःशेष' इत्यादौ विधिर्वाच्य एवेत्यर्थः। तत्तेन बुद्धिस्थप्रकारेण तात्पर्यवाचोयुक्तेस्तात्पर्यशब्दस्य तात्पर्यज्ञा-नविषयवेदिनो देवानांप्रियाः पशवः।

एतदेवोपपादयति—तथा हीति। अयमत्र तात्पर्यार्थः—किमेकया वृत्त्या युगपदेव तावत्पर्यन्तप्रतीतिः, क्रमेण वा? नाद्यः, पदार्थस्मृतिवाक्यार्थप्रतीतिव्यङ्ग्यप्रतीतीनां हेतुफलभावाङ्गीकारात्, एकवेदनपक्षे च तदभा-

वात्। एककालवेदनं न त्वेकवेदनमिति चेत्? न, वेदनानामेकाधिकरणानामेककालीनत्वाभावात्, भावेऽपि पूर्वापरकालीनत्वलक्षणहेतुफलताविरोधात्। द्वितीये तु विरम्यापि पुनरुज्जीवति शक्तिरविरतैव वा क्रमशो विज्ञानमुत्पादयति? आद्ये सिद्धान्तव्याकोपः। न द्वितीयः, ज्ञानजननस्यैव विरामार्थत्वात्। अन्यथाऽभिधयैवाविरतया संसर्गयोग्योऽर्थं उपनेष्यत इति परिहारलक्षणाङ्गीकृतिव्यसनम्। तदिदं कुरुभक्तभोजिनः पाण्डवकार्यकरणं यदयं भवद्भिः प्रयत्नपरिपालितोऽपि विरम्यव्यापारनिषेधोऽस्मदीयपक्षमुज्जीवयतीति। भवतु तर्हि तात्पर्यं नाम द्वितीयं लक्षणाऽपरपर्यायं भट्टादितन्त्रप्रसिद्धमेव शक्त्यन्तरम्, न त्वदृष्टाश्रुतं व्यञ्जनमिति चेत्? न तस्यापि तावत्पर्यन्तप्रसारविरहात्।

तदिदमाह—भूतेत्यादि। भूतानि कारकाणि सिद्धरूपाणि भवत् क्रियारूपं साध्यं तेषां समुच्चारणे समभिव्याहारेण तद्वाचकपदानामुच्चारणे भव्यतया समुदितकारकात्मकसाध्यपरतया अन्वीमानाः स्वसन्निवेशेन विस्पष्टाकारतामुपनयन्तः।

स्वक्रियेति। 'सव्यापारं कारकम्' इति रीत्याऽर्थक्रियाद्वारा प्रधानक्रियायामभिसम्बन्धात्। साध्यायमानतामिति। यद्यपि कारकस्वरूपं पूर्वसिद्धमेव, तथापि क्रियावत एव कारकत्वात् क्रियायाश्चाभूत्वाभावित्वात् तान्यपि तदाकाराणि न पूर्वसिद्धानीति भावः।

तथा हि—'गामानय' इत्यादौ गोविषयकमानयनं यथा पूर्वसिद्धम्, तथानयनविशिष्टापि गौरिति द्वयोरप्यपूर्वत्वं विशिष्टाकारस्य घटितोभयशरीरत्वात्। किमतो यद्येवमित्याह—ततश्चेति। सत्यपि पूर्वपदार्थानां विध्यर्थत्वे योऽर्थः प्रमाणान्तरेणाप्रसिद्धः स एव विधीयते प्राधान्येनोपदिश्यते, अन्यत्र तु दग्धे दहनवदुपदेशस्य वैयर्थ्यात्। तदुक्तम्—"अप्राप्ये हि शास्त्रमर्थवत्"।

एतदेव प्रपञ्चयति—यथेति। एकविधिरित्यादावेकद्विसर्वाप्राप्तिदशायाम्। एवं पूर्वपक्षिणः पक्षस्थलीकृत्य परिहारमाह—ततश्चेति। तात्पर्य वाक्यस्यार्थसमर्पणम्, शेषाणां पदार्थानां तदवच्छेदकमात्रत्वात्।

तथा हि—'दध्ना जुहोति' इत्यादौ दधिकरणस्य होमस्य यद्यपि विधेयता, तथापि सूक्ष्मदृशाऽङ्गानां प्राधान्याप्राधान्यचिन्तने शब्दशक्त्या विशेषरूपस्य होमस्य प्राधान्येपि तस्यान्यतः प्रतीतेर्व्यपदेशवैयर्थ्येन करणभूतस्य दध्न एवावगत्याऽप्राधान्यम्, ततश्च तादृश एवार्थे भगवती तात्पर्यशक्तिर्विश्रान्तिमर्हति, न पुनरनुपात्तवाचकपदे वाक्यार्थप्रत्ययानन्तरं यतः कुतश्चित् प्रतीयमानेऽर्थान्तर इति भवद्भिरुपगन्तुं युक्तम्, तथा सत्यतिप्रसङ्गादित्याह—एवं हीति। अपराद्यर्थेऽपि पूर्वाद्यर्थविधिभावेनाक्षिप्ते—क्वचिदिति। भवताऽपि तात्पर्यविषयतयाऽनङ्गीकृते प्रधानभूते वाक्यार्थे। तात्पर्यवृत्तिश्च प्रकृतमात्रापेक्षया यथाकथञ्चित्। वस्तुतस्तु पूर्वोक्तमेवानुसन्धेयम्।

नन्वपराद्यर्थसाधारणयोर्वस्त्वलङ्कृत्योर्मा भूत्तात्पर्यम्, प्रधानभूतायास्तु कुतो न स्यादिति चेत्? सत्यम्, अनुपात्तवाचकत्वात्तयोर्वाचकानुपादानेऽपि तयोः प्राधान्यं निर्विवादमेवेति प्रसरत्येव तत्र तात्पर्यमिति चेत्? किमिदं तात्पर्यं नाम? वाक्यप्रयोगतादर्थ्यं वा, तात्पर्याख्यशब्दव्यापारविषयत्वं वा? आद्ये नीरसदशायां न विवादः, रसवति तु रसस्यैव प्राधान्यात्तदपि विचारकुक्षिनिक्षिप्तम्। तिष्ठतु रसस्थलम्। नीरसे भवेत्तयोः प्राधान्यादेवमस्तु द्वितीय इति चेत्? न विकल्पासहत्वात्।

तथा हि—भट्टादिप्रसिद्धद्वितीयलक्षणातात्पर्यवृत्यन्तरमेव वा तन्नामकम् ? नाद्यः, तस्योपात्तपदार्थ संसर्गमात्रे संसृष्टाकारप्रधानपदार्थे वा परिक्षीणत्वात् । न द्वितीयः, नाममात्रेणैव विसंवादातु ।

**दर्पणः**

सम्प्रति तदेकदेशान्तंराणां परस्परोपकारकशक्तिद्वयमुपन्यस्य दूषयति ये त्विति । यथा खलु धनुष्मता प्रयुक्तो बाणः एकेनैव घातेन शत्रोः कवचयुग्मादिकमनेकं निर्भिनत्ति तथैव शब्दस्याभिधाव्यापारो तद्वदवश्यं बोधयति । यत्परः यदुद्देशेन प्रयुक्तः शब्दः स शब्दार्थः शब्देनावश्यं बोध्यः इति हेतोरत्र निःशेषेत्यादौ विधिर्वाच्य एव, इत्येवकारस्य व्यधषयोजना [?] इति । ये तु, ये पुनरभिदधति तेऽतात्पर्यज्ञास्तात्पर्यवाचोयुक्तेस्तात्पर्यप्रयोगस्य देवानां प्रियाः पशवः । तात्पर्यप्रयोगं न जानन्तीत्यर्थः । कुत इत्याह तथा हीति । भूतानि सिद्धरूपाणि कारकाणि भव्यं साध्यं क्रियारूपम् एषां समुच्चारणे तद्वाचकपदानां समभिव्याहारे भव्याय साध्यरूपताया कारकपदार्था लोहितोष्णीषा इत्यादयाः । स्वक्रियाः स्वस्येवान्तर्लीना या क्रिया तदभिसंबन्धात् । यद्यपि कारकस्वरूपं पूर्वसिद्धमेव तथापि क्रियावत एव कारकत्वात्, क्रियायाश्च साध्यरूपत्वात्, कारकाण्यपि साध्यरूपाणीति भावः । अदग्धस्य भागस्य पुनर्दाहो यथा तथा सर्वपदार्थानां विध्यहेतुत्वेऽपि योऽर्थः प्रमाणान्तरेण प्राप्तः स एव विधीयते प्राधान्येनोपदिश्यते । प्राप्ति तूपदेशवैयर्थ्यात् । तथाहि । दग्ध एव प्राधान्यम् । अत्रैव तात्पर्यशक्तिविश्रान्तिरिति न पुनः प्रतीतिमात्रे ।

अनुपात्त एव पदे वाक्यार्थप्रत्ययान्तरबोध्येऽर्थे एव हानिप्रसङ्गः इत्याह एवमिति । अपराद्यर्थे पूर्वाद्यर्थेनावधिभावेनाक्षिप्ते भवतापि तत्पर्यविशेषतयाऽनङ्गीकृत इति भावः । अयमाशयः वाच्यार्थव्यङ्ग्यार्थप्रतीत्योर्हेतुफलभावाङ्गीकारात् नैयायिकाभिधया तात्पर्येण वा वृत्त्या युगपत् प्रतीतिः । क्रमप्रतीत्यङ्गीकारे तु लक्षणाङ्गीकारस्याप्यनुचितत्वात् अङ्गीकृततात्पर्याणां च विरम्य व्यापारस्वीकरणात् न केवलमपराद्यनु साधारण्योर्वस्त्वलङ्कारयोस्तात्पर्यं न प्रसज्यति [?], किन्तु वाचकत्वात् प्रधानभूतयोरपीति भावः ।

**साहित्यचूडामणिः**

अथात्र केचित् तात्पर्यमवलम्ब्य प्रत्यवतिष्ठन्ते, तान् विधुरयितुमाह—येत्विति । दूषयितुं तावदनुभाषते सोऽयमिति । वाच्यावगमोपक्रमः प्रतीयमानार्थान्तरावसायपर्यन्तोऽयमेक एव व्यापारो द्राधीयाननुवर्तते, यथैक एव सायकः शत्रोरुरश्छदमुरश्च भित्वा प्राणानपहरति तथा शब्दोऽपि सकृदेव प्रयुज्यमानः स्वार्थाभिधानामर्थान्तरप्रतिपत्तिं च करोति । एवं च 'यत्परः शब्दः स शब्दार्थः' । इतरथा शब्दप्रयोगस्यानर्थक्यप्रसङ्गात् । अतश्च विधिरेवात्र वाच्य इति । त इत्यादिना तेषामुपालम्भः । देवानांप्रियाः गावः । शैली खल्वियं व्याख्यातृणाम् । अतात्पर्यज्ञाः तात्पर्यशब्दस्य तात्पर्यं न जानते इति स्ववचनविरुद्धमेषामभिधानमभग्ननालिकेरकल्पं यथाश्रुतग्रन्थग्रहणिकामात्रव्यापृतत्वादिति ।

अथ विषमोऽयं शरदृष्टान्तोपन्यासः, येन शरस्य व्यापारः स्वाभाविकत्वादपर्यनुयोज्यः शब्दस्य सङ्केताद्युपाधिप्रयुक्त इति [महिमाचार्यस्य] आशयेन दूषयितुमुपक्रमते—तथाहीति । भूतानां सिद्धविषयाणां, भव्यानां साध्यविषयाणां च शब्दानामुपादानें प्रथमं द्वितीयायोपदिश्यते, कारकाणां भूतत्वं क्रियायाश्च भव्यत्वमिति व्यव-

स्थायां पूर्वस्योत्तरत्र तात्पर्यम्। ननु कारकाणामपि क्वचिद् भव्यत्वमनुभूयते तत्र कथं सिद्धत्वविभाग इत्यत्राह— साध्यायमानतामिति। कारकपदार्थाः स्थालीकाष्ठादयः क्रियापदार्थेन पाकादिनान्वीयमानाः प्रधानक्रियायाः पाकरूपायाः संपादनव्यापृताः स्वेषां याः क्रियाः काष्ठस्य ज्वलनं स्थाल्या धारणम् ओदनस्य क्लेदनमित्यादयः ताभिरवान्तरभूताभिरप्यभिसंबन्धात् साध्यायमानतां प्राप्नुवन्ति, न मुख्यं साध्यत्वं नापि सिद्धत्वम्। अदग्धेति। अर्धदग्धनिर्वापिते काष्ठादौ पुनराशुशुक्षणिप्रक्षेपे यावददग्धं तावद् दह्यते नाधिकामिति न्यायेन यावदप्राप्तं तावद् विधीयते। ऋत्विक्प्रचरणस्य प्रमाणान्तरप्रतिपन्नत्वाल्लोहितोष्णीयत्वमात्रं विधेयम्।

हवनस्य जुहोत्यर्थस्य प्रमाणान्तरात् प्रसिद्धेर्दध्यादेः कारणत्वमात्रं विधेयं, न तु हवनमपि, भूतंपूर्वत्वात् तस्य। न च विधेयत्वमेकस्यैवेति नियम इत्याह—क्वचिदिति। वयेति प्रथमो विधिः, पटमिति द्वितीयः, रक्तमिति तृतीयः। एकसिद्धौ द्विविधिः द्विसिद्धावेकविधिः। एवमन्यत्। ततश्च यदेव विधेयं तत्रैव तात्पर्यं न पुनरन्यत्र प्रतीतमात्रे। अथ प्रमेयोपयुक्तमंशमाह—उपात्तस्यैवेति। उच्चारितस्यैव शब्दस्यार्थे तात्पर्यम्। विपर्यये बाधमाह एवं हीति। पूर्वापरयोर्ह्रस्वदीर्घवदन्योन्यसापेक्षत्वादेकतरोक्तावन्यतरप्रतीत्यवश्यम्भावः न तु तात्पर्यशक्तेः। एवञ्च घटशब्दोच्चारणेऽघटाद्यर्थेऽपि तात्पर्यप्रसङ्गः।

### सम्प्रदायप्रकाशिनी

अथैकदेश्यन्तरमतमुपन्यस्य दूषयति—ये त्वभिदधतीत्यादिना। सोऽयमिति (च ?)। 'निश्शेषच्युते' त्यादौ येन तदन्तिकमेव गतासीति विधिः प्रकाश्यते, सोऽयमिषोरिव दीर्घदीर्घोऽभिधाव्यापार एव न तु व्यापारान्तरमिति भावः। अनेन व्यञ्जकाभिमतस्य शब्दस्य वाचकत्वमेवेति दर्शितम्। अथ व्यङ्ग्याभिमतस्याप्यर्थस्य वाच्यतां दर्शयितुमाह—यत्परः शब्द इति। सर्वथा हि शब्दस्य व्यङ्ग्ये तात्पर्यमङ्गीकार्यम्। तदङ्गीकारे तु 'यत्परः शब्दः स शब्दार्थ' इति नयेन व्यङ्ग्याभिमतोऽपि वाच्य एव स्यादिति भावः। यत इत्थमतो विधिरेवात्र वाच्यः। अत्र 'निश्शेषच्युते'ति श्लोके। विधिः तदन्तिकमेव गतासीत्येवमात्मकः। तदेतद् दूषयति—तदतात्पर्यज्ञा इत्यादिना। तदिति, ये त्वेवमभिदधति, तदतात्पर्यज्ञा एवाभिदधतीत्यर्थः। तात्पर्यवाचोयुक्तेरित्यादिना सोल्लुण्ठमतात्पर्यज्ञत्वमेवानूदितं विशेषज्ञापनार्थम्। वाचोयुक्तिर्व्यापकता। देवानांप्रियाः पशवः।

अतात्पर्यज्ञा इति यत् प्रतिज्ञातं तदुपपादयति—तथा हि भूतभव्येत्यादिना। भूतं सिद्धं कारकमित्यर्थः। तथा भव्यं साध्यं क्रियेत्यर्थः। क्रियाकारकात्मकवाक्यसमुच्चारणे हि कारकं क्रियार्थमुपदिश्यते। अतः कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः प्रधानभूता या क्रिया आख्यातवाच्या तस्या अभिनिर्वर्तिकाया अभिव्याप्य निष्पादिकायाः स्वक्रियाया अभिसम्बन्धात् साध्यायमानतां प्राप्नुवन्ति, प्रधानक्रियावत् स्वयमपि साध्यायन्ते। सर्वत्र हि वाक्ये क्रियाकारकाणां योऽयमन्वयः, स क्रियां प्रति कारकाणां कुर्वता। तानि प्रति तु क्रियायाः कार्यता। इत्थं च सति सर्वेषामेव कारकाणां प्रधानक्रियाभिनिर्वर्तिकाः सन्त्येव स्वक्रियाः। तदभावे कुर्वत् कारकमिति संज्ञैव न स्यात्। एताभिः स्वक्रियाभिः सह प्रधानक्रियायाः साध्याया योऽभिसम्बन्धस्तेन हेतुना स्वयमपि साध्यायन्ते। इत्थं सिद्धानामपि कारकाणां साध्यायमानत्वमुपपन्नं यतः, अतो यावदप्राप्तं तावद् विधीयते, अदग्धदहनन्यायात्। उपपादितमर्थमुदाहृत्य हृदयङ्गमीकरोति—यथा ऋत्विक्प्रचरण इति। 'लोहितोष्णीषा ऋत्विजः प्रचरन्ती' त्यत्र वाक्ये ऋत्विक्प्रचरणस्य प्रमाणान्तरतः सिद्धौ लोहितोष्णीषत्वमात्रं विधेयत्वेन व्यवस्थाप्यते। अनेन कारकस्य

विशेषणमपि साध्यतया दर्शितम् । कारकस्यापि साध्यतां दर्शयति—हवनस्यान्यत इत्यादि । इत्थमेकैकत्र वाक्ये कारकस्यैवैकैकस्य साध्यत्वं प्रदर्श्यैकस्मिन् वाक्ये अनेकेषां दर्शयितुमाह—क्वचिदुभयविधिरित्यादि । तदुदाहरति—यथा रक्तमित्यादि । 'रक्तं पटं वये'त्यत्र हि वाक्ये यदि वानं तन्तुषु रक्तत्वं च प्रत्यक्षादिप्रमाणसिद्धं, तदा शाटिकादिव्यावृत्त्यै पटत्वमेव विधीयते, एवमेकविधिः । यदा वानमात्रं सिद्धं तदा रक्तत्वं पटत्वं चेति द्विविधिः । यदा पुनस्त्रितयमप्यसिद्धं, क्रेतृविक्रेतृसाम्मुख्यमात्रं सिद्धं, तदा त्रीण्यपीति त्रिविधिः । यदीत्थं प्रकृते किमायातमित्यत आह—ततश्च यदेवेत्यादि । यत इत्थं विधेयांश एव तात्पर्यं वाक्यस्य, अतो वाक्यत्वेनोपात्तस्यैव शब्दस्यार्थे तात्पर्यं, न तु शब्दबहिर्भूते प्रतीतमात्रे अर्थे । यदि प्रतीतमात्रे तात्पर्यं, तदायं दोष इत्याह—एवं हि पूर्व इति । न तु 'पूर्वो धावती'त्यस्य वाक्यस्य प्रतियोगित्वेन प्रतीतमात्रे अपरो न धावतीत्यर्थे तात्पर्यं, तदर्थमप्रयोगात् । ननूपात्तस्यैव शब्दस्यार्थे तात्पर्यमित्युक्तम् ।

### मधुमती

भट्टलोल्लटाद्यभिमतं मतमाशङ्कते—येऽपि त्विति । यथा नोदनात् आद्यं इषोः कर्म, ततो वेगः, ततः कर्म, ततो वेगः, इति लक्ष्यप्राप्तिपर्यन्तं न विरामः; तथा—प्रथमं पदार्थज्ञानात् पदार्थस्मृतिः, ततः तात्पर्यग्रहः, ततो वाक्यार्थधीः इति व्यङ्ग्यप्रतीतिपर्यन्तं नात्रापि विरामः इति भावः ।

यत्तु—"धूमेत्यादौ यथा अनुमानेन तात्पर्यनिर्वाहः, तथा व्यङ्ग्येऽपि अनुमानादेव निर्वाहे किं व्यञ्जनया ?" इति मतं दूषयितुं उपन्यस्यतीति कृत्वा प्रकृतग्रन्थोत्थानं पितृचरणैरुक्तम्—तत्र 'इति मतम्' इत्यस्य इत्यपि मतमित्यर्थः । तेन च 'अपि' ना अभिधया तल्लाभोऽपि समुच्चीयते । अन्यथा "शब्दश्रुतेरनन्तरं यावान् अर्थः लभ्यते तावति शब्दस्य अभिधैव व्यापारः" इति आगामिवृत्तिदर्शनेन पूर्वापरविरोधः स्यात् इति द्रष्टव्यम् ।

यत्परः इति । न हि शक्यमात्रं अभिधा उपस्थापयति, अन्वयाप्रतीतिप्रसङ्गात् । एवं च यथा आकाङ्क्षादिसहकारेण अन्वयं प्रतिपादयति, तथा तात्पर्यसहकारेण व्यङ्ग्यत्वाभिमतमपीति भावः । यदाहुः—

**'तात्पर्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः ।**
**यावत्कार्यं प्रसारित्वात् तात्पर्यं न तुलाधृतम् ।'**

इति । देवानाम्प्रियाः पशवः इत्यर्थः । अशक्यमपि शक्यसम्बद्धमेव अभिधा प्रतिपादयति, स्वरूपसतः शक्यसम्बन्धस्यैव अतिप्रसङ्गनियामकत्वात्, न त्वन्यत् इति हृदि निधायाह—तथाहीति । सर्वं हि वाक्यं उद्देश्यविधेयभावापन्नार्थकम्, क्रियापरिसमाप्तं च । तत्र कारकं सिद्धम्, साध्या च क्रिया इति, तदर्थ एव वाक्यार्थः, तथैव च तात्पर्यमित्यर्थः । क्रियापदार्थेनेति । आख्यातिकक्रियापदार्थेनेत्यर्थः । कार्तिकक्रियापदार्थस्य सिद्धत्वेनैव प्रतीतेः इति द्रष्टव्यम् । साध्यायमानतामिति । कारकस्य सिद्धत्वेऽपि प्रधानक्रियानुकूलव्यापारवत्तया साध्यता । तथा च स्वतः तस्य विधेयत्वेऽपि प्रधानक्रिया विधेयतोपरागात् विधेयतेति तदपि तात्पर्यविषयः इति भावः । अदग्धेति । यथा—

**'अदग्धं दह्यते वस्तु न तु दग्धमथो पुनः ।'**

इति, तथा अप्राप्तमेव विधीयते न तु प्राप्तमपि इत्यर्थः। यथेति। एतच्च लौकिकं वाक्यमधिकृत्योक्तम्। वेदे तु—'सोष्णीषाः ऋत्विजः' इति श्रवणात् ऋत्विक्प्रचरणवत् उष्णीषसम्बन्धस्यापि अन्यत एव प्राप्तिः, लौहित्यमात्रं विधीयते इत्यर्थः। हवनस्येति। इदमुपलक्षणम्—दध्नोऽप्यन्यतः प्राप्तेः इति द्रष्टव्यम्। तेन 'करणत्वमात्रं विधेयम्' इत्यग्रेतनं सङ्गच्छते। तत्रैव तात्पर्यमिति। अभिधानिर्वाह्यमिति शेषः। अन्यथा—'धूमोऽस्ति' इति वाक्यस्य वह्निपरता न स्यात्, एवम्—

**'गच्छ गच्छसि चेत् कान्त! तत्रैव स्यात् जनिर्मम।'**

इत्यादौ च वारणादिपरता, विधेयत्वाभावात्। एवं 'उपात्तस्यैव शब्दस्य अर्थे तात्पर्यम्' इत्यत्रापि पूर्वक एव शेषः।

### विस्तारिका

दूषयति—तेऽपीति। त इत्यर्थः। तात्पर्यवाचोयुक्तेस्तात्पर्यशब्दप्रयोगस्य। अतात्पर्यज्ञाः किमुद्दिश्य 'यत्परः शब्दः' इति प्रयुज्यते? इत्यस्यानभिज्ञाः, देवानांप्रिया पशवः। वाचोयुक्तिरिति देवानांप्रिया इति चालुक् समासः। तात्पर्यविषये शब्दः प्रमाणामित्युपात्तशब्दप्रतिपाद्येष्वर्थेषु यदंशे विधेयत्वम्, तत्रैव तात्पर्यम्, न तु प्रतिपाद्यमात्रे।

अत एव सिद्धार्थानामप्रामाण्यमिति विधेयापेक्षया शब्दप्रामाण्यनियामकं तात्पर्यमित्यत्रैव 'यत्परः शब्दः स शब्दार्थः' इत्यस्य तात्पर्यमिति सिद्धान्तयति—तथा हीत्यादि। भूतं सिद्धम्, भव्यं साध्यम्, समुच्चारणेन समभिव्याहारेण। भव्याय तदन्वयोपपत्तये। 'प्रधानेत्यादि। 'घटमानय' इत्यत्रानयनं समीपदेशसंयोगः प्रधानक्रिया। तस्या अभिनिवर्तिका हेतुभूता या अस्य घटस्य क्रिया पूर्वदेशसंयोगध्वंसहेतुभूतविभागजनकः स्पन्दः घटपटरूतासिद्धावपि स्पन्दाश्रयत्वेन साध्यायमानत्वम्। विशेष्ये बाधे स्पन्दस्यैव तथात्वमिति क्यङ्प्रयोगः। अदग्धमिन्धनम्, दग्धं भस्म वह्निः काष्ठमेव दहति, न भस्म, तद्वदित्यर्थः। 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यत्र विधौ प्रचरणं सञ्चारः। प्रमाणान्तरं प्रत्यक्षम्। उष्णीषः शिरोवेष्टनवस्त्रम्। अन्यतो 'दर्शपौर्णमासाभ्यां यजेत' इत्यतः प्रधानविधेरुभयविधिः।'ब्राह्मणं स्नातं भोजयित्वा समानय' इत्यत्र स्नानं प्राप्तं भोजनानयनयोर्विधानम्। अत्रैव 'स्नापयित्वा' इत्युक्तौ त्रिविधिः। दृष्टान्तमाह—यथेत्यादि। एकाप्राप्तावुभयप्राप्तौ त्रितयाप्राप्तौ चैका विधिर्द्विविधिस्त्रिविधिः। प्रकृतमनुसरति ततश्चेति। सर्वेषां शब्दानां कार्यपरत्वादित्यर्थः। उपात्तस्योच्चारितस्य। अर्थ वृत्तिविषये। तात्पर्यं प्रामाण्यनियामकम्। अतिप्रसङ्ग वारणायाह—न त्विति। इष्टपत्तिं परिहरति—एवं चेति। अपराद्यर्थे पूर्वादिप्रतियोगित्वेनार्थापत्त्या गम्येऽन्यलभ्यत्वेनापदार्थे तात्पर्यम्, तद्विशेषो वृत्तिसाधक इत्यर्थः।

### सारबोधिनी

मतान्तरमवतारयति सोऽयमिषोरिवेति। यथा बलवता प्रेरित इषुरेकेनैव वेगाख्येन व्यापारेण वर्मभेदमुरोभेदं प्राणहरणं च रिपोः करोति तथा शब्दः एकेनैव शक्तिव्यापारेण पदार्थस्मृतिं, वाक्यार्थबुद्धिं, व्यङ्ग्यप्रतीतिं च विधत्ते। ततो व्यङ्ग्यस्य वाच्यत्वमेवेत्यर्थः। विधिरेवेति। निःशेषेत्यादौ गतासीति विधिर्वाच्य एवेत्यर्थः। दूषयति त इति। तात्पर्यवाचोयुक्तेस्तात्पर्यशब्दप्रयोगस्यातात्पर्यज्ञाः, किमुद्दिश्य यत्परः शब्दः शब्दार्थ इति प्रयुज्यते

इत्यस्यानभिज्ञाः देवानां प्रियाः पशवः। वाचोयुक्तेरिति। देवानां प्रिया इति चालुक् समासः। तात्पर्यविषये शब्दः प्रमाणमित्यस्य उपात्तशब्दैः प्रतिपाद्येष्वर्थेषु यदंशे विधेयत्वं तत्रैव तात्पर्यमित्यत्रैव यत्परः शब्दः स शब्दार्थ इत्यस्य तात्पर्यमिति सिद्धान्तयति तथा हीति। भूतं सिद्धं, भव्यं साध्यम्। समुच्चारणे समभिव्याहारे। यद्यपि कारकपदार्थाः सिद्धस्वभावास्तथापि कुर्वदेव कारकं नाकुर्वदन्यथा प्रधानक्रियां प्रति नानुकूलं स्यात् अतः क्वचित्तत्रापि तात्पर्यमित्याह कारकपदार्था इति। प्रधानेति। घटमानयेत्यत्रानयनं समीपदेशसंयोगध्वंसहेतुविभागजनकस्पन्दः। घटस्य स्वरूपतः सिद्धावपि स्पन्दाश्रयत्वेन साध्यत्वम्। विशेष्ये बाधे स्पन्दस्यैव तथात्वमिति क्यङः प्रयोगः। तत इति उक्तन्यायादित्यर्थः। अदग्धेति। अदग्धमेव दहनेन दह्यते यथेत्यर्थः। अप्राप्तमेवेति प्राप्तस्याप्राप्तप्रापणरूपविधानासंभवादित्यर्थः। प्रणवसञ्चारः प्रमाणान्तरादतिदेशात्। अन्यतः प्रधानविषयकवाक्यात् वहनस्य सिद्धिः।

उभयविधिः। ब्राह्मणं स्नातं भोजयित्वा तमानयेत्यत्र स्नानप्राप्तौ भोजनानयनयोर्विधानम्। अत्रैव स्नपयित्वेत्युक्तौ त्रिविधिः। लोकेऽप्युदाहरति यथेति। रक्तत्वपटवयनानां मध्ये एकस्य द्वयोस्त्रयाणां वा असिद्धौ एकविधिर्द्विविधिस्त्रिविधिरित्यर्थः। प्रकृतमनुसरति ततश्चेति। अर्थे वृत्तिविषये तस्यैव विधेयत्वादित्यर्थः। तात्पर्यं प्रामाण्यनियामकमिति शेषः। अतिप्रसङ्गवारणायाह न त्विति। इष्टापत्तिं परिहरति एवं हीति। अपराद्यर्थे पूर्वादिप्रतियोगित्वेनार्थापत्त्या गम्येऽन्यलभ्यत्वेनापदार्थे तात्पर्यवृत्तिसाधकं स्यादित्यर्थः।

[मात्रशब्दव्यावर्त्यमाह क्वचिदिति। उदाहरति यथेति। रक्तत्वं वा न वेदं नान्यतः सिद्धं तदा पटमात्रं विधेयम्। पटो वा न वेत्युभयमन्यतः सिद्धं तदा पटमात्रं विधेयम्। क्वचित्तु साक्षाच्छब्देनैव त्रयं विधेयम्।]

## काव्यप्रदीपः

अथ "सोऽयमिषोरिव 'दीर्घदीर्घतरो व्यापारः' इति, 'यत्परः शब्दः शब्दार्थः' इति च 'निःशेष—' इत्यादौ विधिरेव वाच्यः" इति भट्टमतोपजीविनः। अस्यार्थः—यथा बलवता प्रेरित इषुरेकेनैव वेगाख्येन व्यापारेण धर्मच्छेदमुरोभेदं प्राणहरणं च रिपोर्विधत्ते तथैक एव शब्द एकेनैवाभिधाख्यव्यापारेण पदार्थस्मृतिं वाक्यार्थानुभवं व्यङ्ग्यप्रतीतिं च विधत्ते। अतो व्यङ्ग्यत्वाभिमतस्यार्थस्य वाच्यत्वमेव। किंच यत्र शब्दस्य तात्पर्यं स शब्दार्थ इति 'निःशेष'—इत्यादौ तात्पर्यविषयतया विधिर्वाच्य एवेति। ते तात्पर्यवाचोयुक्तेस्तात्पर्यमजानन्तः पशवः। तद्वाक्यवर्तिपदोपस्थापित एव हि तात्पर्यमुच्यते न प्रतीतमात्रे। तथाहि भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यत इति सिद्धान्तः। अस्यार्थे:—भूतं सिद्धं भव्यं साध्यं तयोः समभिव्याहारे भूतं सिद्धं भव्याय साध्यायोपदिश्यत इति। कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः सिद्धा अपि प्रधानक्रियानुकूलया साध्वीभूतया स्वक्रियया योगात्साध्यायमानतामाप्नुवन्ति। स्वरूपेण सिद्धा अपि साध्यक्रियाविशिष्टतया साध्या इव भवन्ति। ततश्च यथा दहनेनादग्धमात्रं दह्यते न तु दग्धमपि तथा यावदेवाप्राप्तं तावदेव शब्देन विधीयते न तु प्राप्तमपि। यथा ऋत्विक्प्रचरणेऽन्यतः प्राप्ते 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इत्यनेन लोहितोष्णीषत्वमात्रं विधीयते न तु ऋत्विक्प्रचरणं वा। उष्णीषस्यापि प्राप्तौ तु लौहित्यमात्रम्। हवनस्यान्यतः सिद्धौ च 'दध्ना जुहोति' इत्यनेन दध्नः करणत्वं न तु दधि हवनं वा। एवं 'रक्तं पटं वय' इत्यादौ रक्तत्वपटवयनानां मध्ये एकस्य द्वयोस्त्रयाणां वा असिद्धावेकविधिर्द्विविधिस्त्रिविधिर्वा। ततश्च यावदेव विधेयं तावत्येव तात्पर्यम्। विधेयं च शब्दोपात्तमेवेति सुष्ठूक्तं 'शब्दोपात्त एव

तात्पर्यम्' इति। यदि च प्रतीतमात्रे तात्पर्यं तदा 'पूर्वो धावति' इत्यादौ पूर्वादिसमानसंवित्संवेद्यतया प्रतीतेऽपराद्यर्थेऽपि कदाचित्तात्पर्यं स्यात्। ननु तद्वाक्यवर्तिपदोपस्थापित एव तात्पर्यमिति न व्याप्तिः।

### आदर्शः

व्यङ्ग्यार्थेऽप्यभिधेयार्थबोधिकामभिधामेव व्यापारे दृष्टान्तेन साधयतां मतमाह—ये त्विति। अत्र मते एकलक्ष्यभेदनार्थं प्रतिसंहितेषुर्वेगो यथा तल्लक्ष्यं भित्वा लक्ष्यान्तरभेदनार्थमप्रतिसंहितोऽपि सन् दीर्घतरीभूय लक्ष्यान्तरमपि भिनत्ति तथा एकैव अभिधा ज्ञाता सती वाच्यार्थं बोधयित्वा व्यङ्ग्यार्थप्रति अज्ञातैव दीर्घतरीभूता तमर्थं बोधयत्यतो न शक्तिग्राहककोषाद्यपेक्षेत्यतो न पूर्वोक्तदोषावकाश 'इति सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः' इत्यन्तस्यार्थः। ननु व्यङ्ग्यस्य तादृशाभिधाबोध्यत्वे किं प्रमाणमित्यत आह—यत्पर इति। यत्परः यत्तात्पर्यकः शब्दः, स तच्छब्दस्य वाच्यार्थ एव इत्येवमर्थकम् इदमभियुक्तवाक्यमेव प्रमाणमित्यतो निःशेष इत्यादौ तदन्तिकगमनविधौ तात्पर्यात् सोऽर्थो वाच्य एवेत्यर्थः। ते न तात्पर्यज्ञा इति समीचीन एव पाठः। तदतात्पर्यज्ञा इति क्वचित् पाठे तु तदित्यव्ययं, ते इत्यर्थकम्। 'तात्पर्यवाचः' यत्पर इत्यादितात्पर्यवाक्यस्य या युक्तिः विषयविभागः, तद्विषयतात्पर्यस्यानभिज्ञा इत्यर्थः; 'देवानांप्रियाः' पशवः। पश्वर्यकमिदम् अलुक्समस्तं पदम्। यत्पर इत्यादिवाक्यस्य अन्य एव विषयविभाग इति दर्शयति—तथा हीति। गामानयेति वाक्ये प्रमाणान्तरग्राह्यो गौः 'भूतः' सिद्धः, तदीयमानयनन्तु अप्राप्तवेन 'भव्यं' साध्यम्, तदर्थं भूतो गौः 'उपदिश्यते' उच्चार्यते इत्यर्थः। नन्वेवं कथं गोरपि साध्यत्वानुभव इत्यत आह—कारकेति। 'प्रधानक्रिया' आनयनम्, तन्निष्पादिका 'स्वक्रिया' गोश्चलनम्, तत्सम्बन्धादित्यर्थः। ततश्चेति, तृणमिश्रिते भस्मराशावग्निर्यथाऽदग्धं तृणमेव दहति न भस्म, तथा सिद्धांशमपहाय असिद्धांश एव वाक्येन विधीयते इत्यर्थः। तथाच विधेयांश एव शब्दस्य 'प्रामाण्यनियामकोऽर्थ इत्येवमेव यत्पर इत्यादेरर्थः, न तु व्यङ्ग्यरूपोऽर्थः शब्दस्य वाच्यार्थ इति तदर्थ इति भावः। यावदप्राप्तमिति सामान्यनिर्देशात् क्वचित् क्रिया प्राप्ता कारकमप्राप्तं तदेव विधीयते इत्युक्तम्। तदेव च उदाहरति—यथा ऋत्विगिति, यज्ञे ऋत्विजां प्रचरणं वाक्यान्तरात् प्राप्तम्, यज्ञविशेषे तु ऋत्विजां लोहितोष्णीषत्वं विधीयते इत्याह—लोहितेति। ऊष्णीषं शिरोवेष्टनम्। लोहितत्कत्वमत्र कर्तृकारकविशेषणं विधेयम्। क्वचित् करणकारकस्यापि विधेयत्वमाह—हवनस्येति। द्विविधेरुदाहरणम्—एवं स्नातं भोजयेत्यूह्यम्।

त्रिविधिमाह—रक्तं पटमिति। अत्र रक्तत्वपटत्ववयनानां त्रयाणामपि विधिः। उक्तमेवोपसंहृत्याह—एकेति। प्रकृते यत्पर इत्यत्र तदेव योजयति—ततश्चेति। तात्पयशब्दप्रामाण्यप्रयोजकमिति शेषः, न त्वनेन व्यङ्ग्यार्थे तात्पर्याभावो दर्शितः। उपात्तस्यैवेति उपात्तस्य शब्दस्यार्थ एवेत्यन्वयः, अर्थश्च गृहीतशक्तिक एव बोध्यः। तात्पर्यमित्यत्र च शब्दप्रामाण्यनियामकं बोध्यम्। तादृशं तात्पर्यं व्यङ्ग्यार्थे नास्तीत्याह—न त्विति। एवमिति पूर्वत्वप्रतीतेरवधित्वेन अपरत्वविषयकत्वात्। अत्रापि तात्पर्यं' शब्दप्रामाण्यनियामकम् बोध्यम्।

### सुधासागरः

अथ 'भट्टलोल्टाद्यभिमतं पक्षमाशङ्क्य खण्डयति येत्वित्यादि। अयमाशयः—'सोऽयमिषोरिव दीर्घदीर्घतरो व्यापारः' इति, 'यत्परः शब्दः स शब्दार्थः' इति च निःशेषेत्यादौ विधिरेव वाच्य इति भट्टमतोपजीविनः। अस्यार्थः—यथा बलवता प्रेरित इषुरेकेनैव वेगाख्येन व्यापारेण वर्मच्छेदमुरुभेदं प्राणहरणं च रिपोर्विधत्ते तथा एक

एव शब्द एकेनैवाभिधाख्यव्यापारेण पदार्थस्मृतिं वाक्यार्थानुभवं व्यङ्ग्यप्रतीतिं च विधत्ते । अतो व्यङ्ग्यत्वाभिमतस्यार्थस्य वाच्यत्वमेव । किञ्च यत्र शब्दस्य तात्पर्यं स शब्दार्थ इति निःशेषेत्यादौ तात्पर्यविषयतया विधिर्वाच्य एवेति ।

तेऽप्यतात्पर्यज्ञा इत्यादि । व्याजस्तुत्या दूषयति । तात्पर्यवाचोयुक्तस्तात्पर्यशब्दप्रयोगस्यातात्पर्यज्ञाः, किमुद्दिश्य 'यत्परः शब्दः स शब्दार्थः' इति प्रयुज्यते इत्यस्यानभिज्ञाः देवानांप्रियाः पशवः । वाचोयुक्तेरिति देवानांप्रिया इति चालुक् समासः । तात्पर्यविषये शब्दः प्रमाणमित्यस्य उपात्तशब्दैः प्रतिपाद्येष्वेवार्थेषु यावत् । यदंशे विधेयत्वं तत्रैव तात्पर्यं न तु प्रतिपाद्यमात्रे । अत एव सिद्धार्थानामप्रामाण्यमिति विधेयापेक्षया शब्दप्रामाण्यनियामकं तात्पर्यमित्यत्रैव 'यत्परः शब्दः स शब्दार्थः' इत्यस्य तात्पर्यमिति सिद्धान्तयति तथाहीत्यादि । अयमाशयः—तद्वाक्यवर्त्तिपदोपस्थापित एव हि तात्पर्यमुच्यते न प्रतीतिमात्रे । तथा हि 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति सिद्धान्तः । अस्यार्थः—भूतं सिद्धम्, भाव्यं साध्यम्, तयोः समभिव्याहारे भूतं सिद्धं भव्याय साध्यायोपदिश्यते' इति कारकपदार्थाः क्रियापदार्थेनान्वीयमानाः सिद्धा अपि प्रधानक्रियानुकूलया साध्यीभूतया स्वक्रियया योगात्साध्यायमानतामाप्नुवन्ति । स्वरूपेण सिद्धा अपि साध्यक्रियाविशिष्टतया साध्या इव भवन्ति । घटमानयेत्यादौ किलानयनं समीपदेशसंयोगः प्रधानक्रिया । तस्याः निर्वर्त्तिका स्वस्य घटस्य क्रिया पूर्वदेशसंयोगध्वंसहेतुविभागजनकस्पन्दः । घटस्य स्वरूपतः सिद्धावपि स्पन्दाश्रयत्वेन साध्यत्वम्, विशेष्यबोधे स्पन्दस्यैव तथात्वमिति क्यङः प्रयोगः । ततश्च यथा दहनेनादग्धमात्रं दह्यते न तु दग्धमिति, तथा यावदेवाप्राप्तं तावदेव शब्देन विधीयते, अंशान्तरे त्वनुवादः । प्राप्तस्याप्राप्तप्रापणरूपविधानायोगात् । यथा ऋत्विक्प्रचरणेऽतिदेशात्प्राप्ते लोहितोष्णीषा ऋत्विजः प्रचरन्तीत्यनेन लोहितोष्णीषत्वमात्रं विधीयते, न तु ऋत्विक् प्रचरणं वा । उष्णीषस्यापि प्राप्तौ तु लौहित्यमात्रम् । हवनास्यान्यतः सिद्धौ च दध्ना जुहोतीत्यनेन दध्नः करणत्वं न तु दधि हवनं वा । लोकेऽप्येवं रक्तं पटं वयेत्यादौ रक्तत्वपटवयनानां मध्ये एकस्य द्वयोस्त्रयाणां वाऽसिद्धौ एकविधिर्द्विविधिस्त्रिविधिर्वा । ततश्च यावदेव विधेयं तावत्येव शब्दप्रामाण्यनियामकं तात्पर्यम् । विधेयं च शब्दोपात्तमेवेति सुष्ठूक्तं शब्दोपात्त एव तात्पर्यमिति । यदि च प्रतीतमात्रे तात्पर्यं तदा पूर्वो धावतीत्यादौ पूर्वादिसमानसंवित्संवेद्यतया प्रतीतेऽपराद्यर्थेऽपि कदाचित्तात्पर्यं स्यादिति ।

यत्तु 'विषं भक्षय मा चास्य गृहे भुङ्क्थाः' इत्यत्र 'एतद्गृहे न भोक्तव्यम्' इत्यत्र तात्पर्यमिति स एव वाक्यार्थ इति । उच्यते—तत्र चकार एकवाक्यतासूचनार्थः । न चाख्यातवाक्ययोर्द्वयोरङ्गाङ्गिभाव इति विषभक्षणवाक्यस्य सुहृद्वाक्यत्वेनाङ्गता कल्पनीयेति 'विषभक्षणादपि दुष्टमेतद्गृहे भोजनमिति सर्वथा मास्य गृहे भुङ्क्थाः' इत्युपात्तशब्दार्थे एव तात्पर्यम् ।

---

### सङ्केतः

क्वचित् प्रतीतमात्रेऽपि तात्पर्यं स्यात् इत्याशङ्क्याह—यत्त्विति । भुङ्क्थाः इत्यत्रेति । अत्र वाक्यद्वये । न भोक्तव्यमित्यत्रेति । अत्र अर्थे । उच्यते इत्याद्याचार्योत्तरम् । तत्र भवदुक्ते 'विषं भक्षय' इत्यादि वाक्यद्वये । न चैतत् वाक्यद्वयमित्याह—चकार इति । यथाऽऽह जैमिनिः—

**'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेत् विभागे स्यात् ।'**

['विभागे सति साकाङ्क्षं चेत् भवेत् ततः एकं वाक्यम् अर्थैकत्वात् ।']

इति । अत एव—

**'न दूये नः पूर्वं नृपति अनरण्यं यदवधीः ।'**

इत्यादौ द्विवाक्यत्वेऽपि साकाङ्क्षत्वेन एकवाक्यतायां वस्नसादयः सिद्धाः । यच्छब्दादिश्च साकाङ्क्षताहेतुः । यदि तु विभागेऽपि निराकाङ्क्षौ, तदा द्वे वाक्ये; अर्थद्वयवशात् । उपात्तेति । न हि मित्रादौ हितमिच्छुः कोऽपि भोजननिषेधं कुर्वाणः विषमनुमन्यते इति, ज्ञातवक्तृादिस्वरूपः बोद्धा गरग्रसनानुमत्या 'तद्गृहे भोजनं अतिदुष्टं' इति तात्पर्यतो जानातीति, अत्रापि उपात्ते एव शब्दार्थे तात्पर्यम् ।

### बालचित्तानुरञ्जनी

विषं भक्षयेत्यत्र व्यभिचारादित्याशङ्क्याह यत्त्विति । विषं भक्षयेत्येतद्वाक्यस्य पुत्रं प्रति मात्रोक्तस्य मा चास्य गृहे भुङ्क्था इति तात्पर्यादनुपात्तेऽपि तात्पर्यमिति पूर्वपक्षिणोऽभिप्रायः । उच्यत इति यत् तत्रेति संबन्धः चकारादेकवाक्यतावगमान् । आख्यातयोरङ्गाङ्गिभावाभावेनैकवाक्यतायामसम्भवात् विषभक्षणवाक्यस्यास्य गृहे न भोक्तव्यमिति कृदन्तवाक्यत्वकल्पनेनाङ्गाङ्गिभावो विषभक्षणवाक्यस्यास्य गृहे न भोक्तव्यमिति कृदन्तवाक्यत्वकल्पनेनाङ्गाङ्गिभावो विषभक्षणादपि दुष्टमेतद्गृहभोजनमिति सर्वथा मास्य गृहे भुङ्क्था इति उपात्तशब्द एव तात्पर्यमिति सिद्धान्ताभिप्रायः ।

## काव्यादर्शः

विषभक्षणादपीति । न हि मित्रादौ हितमिच्छुः कोऽपि भोजननिषेधं कुर्वाणोऽकस्माद् विषभक्षणमनुजानातीत्यवगतवक्तृप्रकरणादिस्वरूपः प्रतिपत्त्या विषभक्षणानुज्ञानादेतद् गृहभोजनस्यात्यन्तमकरणीयत्वं तात्पर्यशक्त्या प्रत्येतीत्यत्रापि उपात्त एव शब्दार्थे तात्पर्यम् ।

## विवेकः

नन्वेवं विषं भक्षयेत्यादौ विधेयत्वेन युतत्वाद्विषभक्षणेऽपि तात्पर्यं स्यात्, अतोऽत्र का गतिरित्यत आह यत्त्विति । अत्र प्रकरणात् सुहृदि वक्तरि विषभक्षणनियोगस्यानुपपत्तेः, 'भिक्षामट गाञ्चानये'तिवन्न वाक्यद्वयमित्याह तत्र चकार इति । तदिह विषं भक्षयेत्येतावति न विश्रान्तः, किं तर्हि माऽस्य गृहे भुङ्क्था इत्यत्र, आख्यातार्थस्य साध्यस्वभावस्य प्राधान्यमपरार्थत्वात्, । न च प्रधानयोरुपसर्जनयोरिव वा सम्बन्धो घटते, मिथोऽनपेक्षत्वादित्युक्तमेव । अतश्चैकवाक्यताद्योतकचकारबलादवश्यमत्र गुणप्रधानभावः कल्पनीयः । ततश्चाख्यातं साव्ययकारकमविशेषं वाक्यमत्र पुरुषाश्रितसंख्याऽऽख्यातपदाशङ्कानिरासार्थम् एकतिङत्यादि (पा. २/१/१ भा. वा.) वार्त्तिककारलक्षणानुसारेण । विषंभक्षयेत्यस्य स्वरूपवस्थितौ प्रधानार्थत्वासिद्धेः 'कृदभिहितो भावो द्रव्यवत् प्रकाशमानः क्रियया समवायं गच्छति, तिङभिहितस्तु न गच्छती'ति (म. भा. ३/१/६७) भाष्यवचनात् क्रि(कृ)द्वाच्यत्वेन गुणभावो गुणानाञ्च यत् प्रधानभूतं तदेव कथं नाम विशिष्टं प्रतीयतामित्येवमर्थमुपादानादनयोः परस्परमुपकार्योपकारकभावेनावस्थानादेतद्गृहभोजनस्यात्यन्तमकरणीयत्वे तात्पर्यं पर्यवस्यतीत्याह इति सर्वथेति । एवं वाक्यानामपि परस्परमुपमानोपमान-(मुपमानोपमेय) भावादिभिरिवादिशब्दप्रयोगे मुक्तकसन्दानितकानिष्ठे(दिष्वे)कार्था (र्थी) भावो द्रष्टव्यः ।

## दीपिका

ननु यद्यनुपात्तपदेऽर्थे तात्पर्यं न व्याप्रियते किं तर्ह्युपात्तपद एव । तदा 'विषं भुङ्क्ष्व' इत्यादौ विषभक्षण एव तात्पर्यं स्यादित्याह—यत्त्विति । स एव वाक्यार्थो वाक्योद्देश्य इति तत्र तात्पर्यं शब्दस्य तत्प्रवणत्वमित्युच्यत इति योजना । चकार इति । 'विषं भुङ्क्ष्व' इत्येवं सकृदुच्चरितं हि नैतावन्मात्रेण निराकाङ्क्षमिति समनन्तरमुच्चरितेन 'मा च' इत्यादिनैकवाक्यभूयं भजते । तच्च विशिष्टाकारैकार्थबोधकत्वेनैव ।

यदाह भगवान् जैमिनिः—"अथैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति (७/०) । एकार्थप्रतिपादकता चावान्तरवाक्योर्द्वयोरपि प्राधान्येन निर्वहतीति यत्तद्वाक्यवदङ्गाङ्गिभावः कल्पनीयः । तत्रापि च 'मा च' इत्याद्यर्थस्याप्राकरणिकतया विधेयभावात् प्राधान्येनाङ्गित्वम्, इतरस्य तु विपर्ययादनूद्यत्वेनाङ्गत्वं सुहृद्वाक्यत्वेनानूद्यवाक्यत्वेन । अङ्गाङ्गिभावः परस्परापेक्षया प्रकर्षनिकर्षनियत एव । प्रकर्षनिकर्षौ च प्रकृते विधिनिषेधवशान्निन्दाविषयावेव । ततश्चैतल्लभ्यत इत्याह—विषभक्षणादिति । दुष्टं निन्दितम्, दुष्टमेतद्गृहे भोजनमितीत्यनन्तरं व्यङ्ग्यमिति शेषः ।

तत्रापि पार्यन्तिकीं कक्षामाह—सर्वथेति । सर्वावस्थास्वपीत्यर्थः । भुङ्क्त्था इत्यनन्तरमित्यपि व्यङ्ग्यमिति शेषः । इत्यनेन नयेनोपात्तानामेव शब्दानामर्थे संसर्गमात्रे संसृष्टाकारे वा समवभानमात्रे तात्पर्यं द्वितीयलक्ष-

णाख्यं पर्यवस्यति विवादविषये त्वर्थे तात्पर्यविषयत्वाभिधानं व्यञ्जनाया एव नामान्तराभिप्रायेणेति भावः। सरलयोजना तु 'तद् भुङ्क्ष्व' इत्युपात्तपदस्य भक्षणादपीत्ययं न साक्षादर्थं इति निरस्ता।

### दर्पणः

ननु यद्युपात्तस्य वाचकस्यैवार्थे तात्पर्यं प्रसज्यति [तदा] विषं भक्षयेत्यादिवाक्ये का गतिरित्याह यत्त्विति। स एव वाक्यार्थो वाक्योद्देश्य इति तत्र तात्पर्यात् उच्यत इति संबन्धः। चकार इति अर्थैकत्वात् एकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति [पू० मी० २/१/४७] जैमिनिवचनात्। विषं भुंक्ष्वेत्यादिवाक्ये तावन्मात्रस्याकस्मादुच्चरितस्य साकाङ्क्षत्वात्। समनन्तरोच्चारितेन मा चेत्यादिना एकवाक्यता। सा चकारेण सूच्यत इति भावः। न चेति। कृद्वाच्यत्वेनानुवाद्यत्वम्, आकस्मिकतया विधिवाक्यस्याङ्गता। अर्थवादान्ते इत्यर्थः। तत्र किमित्याह विषभक्षणादपीति। दुष्टं अधिकदोषावहम् इत्यनेन नयेन उपात्तानामेव शब्दानामर्थे सङ्गमान्न संसृष्टाकारेण तात्पर्यं पर्यवस्यति न तु व्यर्थे तद्वतस्तत्र [?] भुंक्ष्वेति पदस्य भक्षणादपीति न साक्षादर्थः किन्तु व्यङ्ग्य एव इत्यभियुक्तानां मतम्।

### साहित्यचूडामणिः

ननु 'अनुपात्तस्यापि शब्दस्यार्थे क्वचित् तात्पर्य पश्यामः येन 'विषं भक्षये'-त्यादीनां शब्दानामन्यत्रानभिमतगृहेषु न भोक्तव्यमिति तात्पर्यम्, न चात्र द्वितीयवाक्योपादानम्' इत्याशङ्क्याह—यत्त्विति। 'विषं भक्षय मा चास्य गृहे भुक्थाः' इत्येकं वाक्यम्। तत्र चकारस्तयोरैक्यं वाक्ययोः प्रकटयति, अन्यथा तस्य नैरर्थक्यापत्तेः। नन्वाख्यातशब्दवाच्ययोरुभयोः कथमङ्गाङ्गिभावो घटते? सत्यं न घटते इति। तत्रैकतरस्य कृद्वाच्यतयाङ्गता कल्पनीया। तत्र भुजक्रियानिषेधस्यान्यर्थायतुमशक्यत्वाद् विषभक्षणवाक्ये कृद्वाच्यत्वं विश्राम्यति। सर्वथेति। मास्य गृहे भुक्था इत्येतावदुच्यताम् अलं विषभक्षणवाक्येनेति न युज्यते वक्तुम्। विभीषिकोत्पादनेनापि विमतगृहभोजनस्य निषेधनीयत्वात्।

### सम्प्रदायप्रकाशिनी

न तदस्ति, क्वचिद् व्यतिरेकमनुपश्याम इत्यत आह—यत्तु विषमित्यादि। 'विषं भुङ्क्ष्व मा चास्य गृहे भुक्था' इत्यत्र हि वाक्ये सुहृदुपदेशात्मनि रिपोरस्य गृहे न भोक्तव्यमित्यत्रार्थे तात्पर्यं, न पुनरनुपदेश्ये विषभक्षणरूपे। अतः प्रतीतमात्रः सन्नपि तात्पर्यविषयीभूतत्वा (न्न ?न्ना) वाक्यार्थो भुवितुमर्हतीति स एव वाक्यार्थ इत्युच्यते, सर्वैरिति शेषः। न ह्यव्युत्पन्नोऽप्यत्र सन्देग्धि। अत्र शब्दसामञ्जस्यायाह—तत्र चकार इत्यादि। अत्र हि 'मा चास्ये'ति चकारोऽर्थद्वयमन्वाचिन्वन्नेकवाक्यतां सूचयति। एवमेकवाक्यतायां सिद्धायां 'विषं भुङ्क्ष्व मास्य गृहे भुक्था' इत्याख्यातपदवाच्ययोर्विधिनिषेधयोराख्यातपदवाच्यत्वादेव नाङ्गाङ्गिभावो घटते। इत्थं न प्रधानयोर्मिथोऽन्वय इति नीत्या आख्यातवाच्ययोरङ्गाङ्गिभावाभावाद् विषं भक्षयेत्येतस्य वाक्यस्य विषभक्षणादिति कृद्वाच्यतापरिकल्पनम्। विषभोजनादपि कष्टमेतद्गृहे भोजनं यतः अतोऽस्य गृहे मा भुंक्था इत्युत्तरवाक्यत्वेनोपात्तस्य शब्दस्यार्थे तात्पर्यम्। सर्वथेत्यनेन पूर्ववाक्यविशिष्टतामाविष्करोति। इत्थं पूर्ववाक्यार्थविशिष्ट उत्तरवाक्यार्थे तात्पर्यव्यवस्थायामाख्यातार्थस्य कृद्वाच्यताकल्पनामात्रेण वाक्यबहिर्भूतेऽर्थे तात्पर्यमिति यदाशङ्कितं तत् तात्पर्य-

वाचोयुक्तेर्देवानांप्रियत्वमेवाविष्करोतीति भावः । 'यत्परः शब्दः स शब्दार्थ' इति परमार्थपराङ्मुखं प्रलयपन्त्येव ते, न पुनरुपात्तस्यैव शब्दस्यार्थे तात्पर्यमिति न्यायतः सविशेषमवगन्तुमीशते । कथमीशतां, द्विपाद्गणंनाबहिर्भूता हि त इत्युपालम्भनिष्कर्षः ।

### मधुमती

ननु 'विषं भक्षय' इत्यादौ यथा—उपात्तशब्दार्थातिरिक्ते 'विषभक्षणादप्येतद्गृहे भोजनं दुष्टम्' इत्यत्र 'विषं भक्षये' त्यादिवाक्यस्य तात्पर्यं कल्प्यते, तथा अत्रापि स्यात् इत्यत आह—यत्त्विति । अत्रेति । तथा च अर्थैक्यं आवश्यकम् । आख्यातवाक्ययोः—'भुङ्क्षव, मा भुङ्क्थाः' इत्यनयोः अव्याख्यातवाक्ययोः । यथाश्रुते तयोरपि ऐक्यं न सम्भवति । अत्र भोजनविधायकतया प्रतीयमानं वाक्यं अङ्गं इति उन्नीयते । यत्र तु 'विषं भुङ्क्ष' इत्येतावदेवोच्यते, तत्र सुहृद्वाक्यस्य विषभक्षणविधानानुपपत्त्या सुहृदभिप्रायस्थः 'विषभक्षणादप्येतद्गृहे भोजनं दुष्टम्' इत्याकारकः शब्दः कल्प्यते । स च उपात्तशब्दार्थ एवेति न दोषः । न चात्र तथा बाधकमस्ति, येन तथा कल्प्यते । न च विषभक्षणविधायकवाक्यमेव निष्फलं स्यादिति वाच्यम् । आभिप्रायकशब्दकल्पकत्वेनैवोपयोगात् ।

### विस्तारिका

ननु क्वचिदनुपात्तशब्दार्थस्याप्यन्वयप्रतियोगित्वदर्शनाद् 'व्यङ्ग्यत्वाभिमतस्य तत्त्वमस्तु, क्व दृष्टमित्याह—यत्त्वित्यादि । 'अत्रैतद्गृहभोजननिषेधो वाक्यार्थः, अनुपात्तशब्दार्थे चास्मिन् यथा अभिधा, तथा व्यङ्ग्येऽपि स्यादिति पूर्वपक्षदलार्थ इति यदुच्यत इत्यन्वयः । आख्यातवाक्ययोरिति—आख्यातक्रिययोर्द्वयोरपि प्राधान्यात् । चकारद्वयसूचितैकवाक्यत्वमङ्गाङ्गिभावं विना न निर्वहतीति कस्याङ्गता कल्पनीयेत्याह—विषभक्षणेत्यादि । विषभक्षणे सुहृदुपदेशस्य बाधाद् विषभक्ष्णप्रतियोगिकत्वे लक्षणा बलवदनिष्ठानुबन्धित्वं 'मा भुङ्क्थाः' इत्यस्यार्थः । विशिष्टवाक्यार्थस्तु एतद्गृहभोजनं विषभोजनादपि बलवदनिष्ठानुबन्धीत्याह विषभक्षणादपीत्यदि । उपसंहरतीत्युपात्तेत्यादि ।

### सारबोधिनी

ननू'पात्तस्यैव शब्दस्यार्थे तात्पर्यं न तु प्रतीतिमात्रे' इति यदुक्तं तदसङ्गतम् । यत्त्विति । विषं भक्षयेत्येतद्वाक्यस्य नास्य गृहे भोक्तव्यमित्यत्र तात्पर्यादुपात्तशब्दादन्यत्र तात्पर्यं प्रसक्तमिति पूर्वपक्षिणोऽभिप्रायः । परिहरति तत्र चेति । विषं भुंक्ष्वेत्येतावन्मात्रस्याकस्मादुच्चरितस्य साकाङ्क्षत्वात् समनन्तरोच्चारितेन मा चेत्यादिना एकवाक्यता । सा च चकारेण सूच्यत इत्यर्थः । न चेत्यादि । अत्र द्वयोराख्यातवाक्ययोरसंबन्धः समत्वात् स्यात् । अत उभयोः संबन्धार्थमेकस्य गुणीभावः क्ल्पनीयः । तत्र विषं भुंक्ष्वेत्येतस्य सुहृद्वाक्यत्वेन तथाविधनियोगानुपपत्त्या गुणभावो युज्यते । गुणानां च परार्थत्वात्, परार्थैकानुबन्धितया स्वार्थयोगो युक्त इति एतद्गृहभोजनस्यात्यन्तगर्हिततत्वपरत्वमस्य वाक्यस्यावगम्यते, तथाहि विषं भुंक्ष्वेत्येतस्य विषभक्षणप्रतियोगित्वे लक्षणबलवदनिष्टानुविधेत्याह[?] । विषभक्षणादपीत्याह दुष्टमिति । बलवदनिष्टानुबन्धीत्यर्थः । अत्र विषभक्ष-

णादपीति स्वार्थः। दुष्टमित्यादिस्तु परार्थः। ततस्तदन्विततया स्वार्थबोधे उपात्तशब्दस्यार्थ एव तात्पर्यमिति दीर्घदीर्घाभिधानं दूषयति।

### काव्यप्रदीपः

'विषं भुङ्क्ष्व, मा चास्य गृहे भुङ्क्थाः' इत्यत्र विषं भुङ्क्ष्वेति वाक्यस्य मा चेत्यादिवाक्यार्थे तात्पर्यादिति मैवम्। यत एतदेकमेव वाक्यम्। चकारस्यैकवाक्यतासूचकत्वात्। अन्यथ, तद्वैयर्थ्यप्रसङ्गात्। न चाख्यातवाच्य-क्रिययोः साक्षादन्वयः संभवति। 'गुणानां च पदार्थत्वादसंबन्धः समत्वास्यात्' इति न्यायात्। सुहृद्वाक्यं चैतत्। अतो भवितव्यमत्रान्वयेन। ततो विषभक्षणादप्येतद्गृहभोजनमनिष्टहेतुरतः सर्वथा नास्य गृहे भुङ्क्था इति वाक्यार्थः। तथा च तद्वाक्यस्य पदोपस्थापित एव तात्पर्यमिति सिद्धम्। तस्मात् 'यत्परः शब्दः' इत्यादि यदुक्तं तत्तात्पर्योज्ञानात्।

### आदर्शः

नन्वेतावता उपात्तशब्दस्य गृहीतशक्तिक एवार्थे प्रामाण्यनियामकं तात्पर्य नाऽगृहीतशक्तिक इत्युक्तम्, तच्च व्यभिचारि, क्वचिदुपात्तशब्दस्य अगृहीतशक्तिकेऽप्यर्थे तादृशतात्पर्यदर्शनात् इत्याशङ्कते—यत्तु विषमिति, अत्र वरमित्यपि बोध्यम्। तथाच वरं विषम् भुङ्क्ष्व मा चाऽस्य गृहे भुङ्क्था इति वाक्ये विषभक्षणमेव गृहीतशक्तिकम्, तत्र च न तादृशं तात्पर्यम्, किन्त्वगृहीततच्छब्दशक्तिके एतद्गृहभोजनाभाव एवेत्याह—एतद्गृह इत्यादि। समाधत्ते—तत्रेति। अङ्गता कल्पनीयेति, भुङ्क्ष्व इत्यत्र भुङ्क्था इत्यत्र च आख्यातद्वयार्थत्यागेनेति भावः। तथाच वाक्यार्थं 'रचयति—विषभक्षणादपीति। आख्यातद्वयार्थत्यागेन विषभक्षणमेतद्गृहभोजनञ्च धात्वर्थः, अप्यर्थश्च आक्षिप्त वरं शब्दलभ्यः पञ्चम्यर्थस्तु संसर्गः, दुष्टमिति तु 'मा' शब्दार्थः, तथाच ईदृशवाक्यार्थे यत्तात्पर्यं तद् गृहीततच्छब्दशक्तिकेऽर्थ एवेति नोक्तदोष इति भावः। तादृशार्थलभ्यं पर्याप्तमर्थमाह—सर्वथेति। इत्युपात्तशब्दार्थ एवेति, उपात्तो यो विषं भुङ्क्ष्वेति शब्दस्तस्यार्थे गृहीतशक्तिके विषकर्मकभक्षणरूप एव प्रामाण्यनियामकं तात्पर्यम्, न त्वगृहीततच्छब्दशक्तिक इत्यतो नानियम इति भावः। यद्यपि विषभक्षणं दुष्टावधित्वेनोपात्तमुद्देश्यमेव न तु विधेयम्। तथाऽपि साध्यान्वयित्वेन साध्यायमानत्वात् तत्रापि तादृशतात्पर्यविषयत्वमभ्युपगम्योक्तम् व्यङ्ग्यार्थे तादृशतात्पर्याभावस्यैव प्रतिपादनीयत्वात्।

### सुधासागरः

ननूपात्तस्यैव शब्दस्यार्थे तात्पर्य न तु प्रतीतमात्रे इति यदुक्तम्, तदसङ्गतम्। विषं भक्षयेत्यत्र व्यभिचारादित्याशङ्क्य समाधत्ते-यत्त्वित्यादिना। अयमाशयः।

---

यदि शब्दश्रुतेरनन्तरं यावानर्थो लभ्यते तावति शब्दस्याभिधैव व्यापारः, ततः कथं ब्राह्मण पुत्रस्ते जातः, ब्राह्मण कन्या ते गर्भिणी' इत्यादौ हर्षशोकादीनामपि न वाच्यत्वम् कस्माच्च लक्षणा लक्षणीयेऽप्यर्थे दीर्घदीर्घतराभिधाव्यापारेणैव प्रतीतिसिद्धेः किमिति च श्रुति-लिङ्गवाक्य-प्रकरण-स्थान-समाख्यानां पूर्वपूर्वबलीयस्त्वम् इत्यन्विताभिधानवादेऽपि विधेरपि सिद्धं व्यङ्ग्यत्वम्।

---

**सङ्केतः**

हर्षेति। हर्षादिकं हि पुत्रस्ते जातः इत्यादिवाक्यार्थप्रतीत्या जन्यते। न च शब्दस्य जनकत्वं प्रकाशकत्वात्, किन्तु ज्ञापकत्वमिति जननादिभन्नं व्यञ्जनम्। कथं न वाच्यत्वमिति। अयं भावः—संङ्केतापेक्षी हि शब्दः अर्थ वक्ति, न निरपेक्षः। अस्य च यत्रैवार्थे सङ्केतः, तत्रैव अभिधाव्यापारः युक्तः, नार्थान्तरे। तत्र सङ्केताभावादिति। मीमांसकं प्रत्याह—कस्माच्चेति। श्रुतीति। यस्य हि अभिधेयेनार्थेन सह नैकट्यम्, स बलीयान्। यस्य च व्यवहितत्वम्, स दुर्बलः। व्यवहितत्वं अव्यवहितत्वं, वा न अभिधाव्यापारगम्यम्, किन्तु व्यङ्ग्यमेव। एतच्च त्वया नेष्यते यदि, तत् कथं एकस्य बलीयस्त्वम्? श्रुत्यादीनां अभिधाव्यापारस्य समानत्वात्। प्रकृतिप्रत्ययश्रुत्योः स्वार्थाभिधायकत्वेन, पदस्य कारकविभक्तीनां च विनियोजकत्वेन, लिङादीनां विधिसामर्थ्येन वा इति, क्रमेण अभिधात्रीविनियोक्त्रीविधात्रीसंज्ञा तिस्रः श्रुतयः। यदर्थस्याभिधानं शब्दश्रवणमात्रादेवावगम्यते सा श्रुतिः। अङ्गत्वापादनं प्रधाने श्रुत्यादीनां अर्थः।

क्रमेण उदाहरणानि—

"ऐन्द्रया गार्हपत्यमुपतिष्ठते।" अत्र—गार्हपत्योपस्थाने ऐन्द्याः ऋचः विनियोगः तृतीयया उक्तः इति विनियोक्त्री श्रुतिः॥

"बर्हिर्देवसदनं दामि।" अत्र—दामीति लवनलिङ्गादेव आश्रयो दर्भः अनेन मन्त्रेण लूयते इति प्रतीयते।

"श्वेतं छागमालभेत।" अत्र एकवाक्योपादानात् श्वेतगुणस्य छागावच्छेदकत्वेन क्रियाङ्गभावो गम्यते। यथा वा—"अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति।" अत्र—अरुणादीनां क्रयेण सम्बन्धः श्रौतः। अरुणैकहायन्यादीनां मिथः पुनः वाक्यीयः।

दर्शपूर्णमासप्रकरणे "समिधो यजति। तनूनपातं यजति। इडो" यजति। बर्हिर्यजति। स्वाहाकारं यजति इति पञ्च प्रयाजाः उक्ताः। ते च दर्शपूर्णमासयोरेव क्रियन्ते इति तदङ्गत्वमवगम्यते इत्यर्थः। "(१) अग्निरस्यान्नपतिः तस्याहं देवयज्ययाऽन्नस्यान्नपतिर्भूयासम्। [अग्नेरहं देवयज्ययाऽन्नादो भूयासम्।] (२) दब्धिरस्यदब्धो भूयासं तदमुंदभेयम्। (३) अग्नीषोमौ वृत्रहणौ तयोर्देवयज्यया वृत्रहा भूयासम् [अग्नीषोमयोरहं देवयज्यया वृत्रहा भूयासम्।]" इति मन्त्र त्रयात् (१) आग्नेयो यागः (२) उपांशुयागः (३) अग्नीषोमीयो यागश्चेति यागत्रयं क्रमेण

स्थितम् । तत्र प्रथमतृतीयमन्त्राभ्यां देवयज्यालक्षणात् लिङ्गात् आद्यन्तौ यागौ आक्षिप्येति । द्वितीयेन मन्त्रेण द्वितीयो यागस्तु उपांशुयागः स्फुरदोष्ठमुद्रस्वरः स्थानवशात् ।

"उद्गाताऽध्वर्युर्होता ।" अत्र उद्गायतीति समाख्यया अन्वर्थसंज्ञाबलात् सामयजुर्ऋग्वेदेषु अधिकृतः उद्गाता इति निश्चीयते । तेषु चाङ्गभाव इत्यर्थः ।

श्रुतिलिङ्गादिविकल्पसम्भवे तु श्रुत्यर्थ एव क्रियते, न तु लिङ्गाद्यर्थः अर्थविप्रकर्षात् । यथा "ऐन्द्या गार्हपत्यमुपतिष्ठते ।" इत्यत्र ऐन्द्र्याः ऋचः इन्द्रप्रकाशसामर्थ्यलक्षणात् लिङ्गात् इन्द्रोपस्थानविनियोगः 'गार्हपत्य'-मिति द्वितीयाश्रुत्या बाध्यते । तेन ऐन्द्र्याऽप्येतया गार्हपत्यस्यैव उपस्थानं भवति ।

अथवा—इत्थमपि श्रुत्यादीनां पूर्वपूर्वबलीयस्त्वम्—यथा—"भोः सैन्धवमानय" इत्यत्र समाख्यया नाम्ना सैन्धवशब्दः लवणादिस्वार्थः सन् स्थानेन रसवत्या समाख्यां बाधित्वा लवणयुक्तार्थः कृतः । अतः स्थानं बलीयः । स्थानेऽपि यदा अश्ववार्ताप्रस्तावः तदा स्थानोचितलवणबाधेन अश्वार्थः कृतः । अतः प्रस्तावः(= प्रकरणं) बली । प्रस्तावार्पितमपि अश्ववसामान्यं त्यक्त्वा कर्मरूपे विशेषे वर्तते इति प्रस्तावात् वाक्यं बलीयः । वाक्यार्पितमपि सामान्यं कर्मत्वं त्यक्त्वा चित्तलादिना स्त्रीपुंस्त्वादिना वा लिङ्गेन विशिष्टे अश्वे वर्तते इति वाक्यात् लिङ्गं बलीयः । लिङ्गात् लब्धेऽप्यश्वविशेषे यदा आनयेत्यत्र उदात्तश्रुतिः तदा—आनयेति विधेयम्, सर्वमप्यन्यत् अनुवाद्यम्—इति सर्वेभ्यः श्रुतिः अधिका । श्रुतिः निरन्तरार्थ निष्ठः शब्दव्यापारः ।

यद्वा—अयमेवार्थः प्रकारान्तरेण कथ्यते । यथा—

**"जितोच्चैश्श्रवसं तेजसा भान्तं वल्गोपेतं सुभगं**

**श्वेतं कटकयोग्यं मन्दुरायाः सैन्धवमानय ।" इति ।**

अत्र पूर्वपूर्वबलीयस्त्वं स्फुटमेव ॥

विधेरपीति । 'निःशेषच्युते' त्यत्र यो विधिः सर्वसम्मतः तस्यापि इत्यर्थः ।

### संङ्केतः (रुय्यकः)

श्रुतीति ऐन्द्रया "गार्हपत्यमुपतिष्ठत" इत्यत्र गार्हपत्योपस्थाने ऐन्द्रया विनियोगस्तृतीयया प्रतिपादित इति श्रौतः । "बर्हिर्देवसदनं दामी" ति देवाश्रयदर्भच्छेदनेऽयं मंत्रो 'दामीति' लिंगादंगात्प्रतिपाद्यते । क्रियया योऽपि सम्बन्धः स श्रुतिप्रापितस्तयै (व लिंगेन प्रतिपादितः) आश्रयाश्रयिणोर्वाक्यान्नियमस्त्ववतिष्ठते ( ?) इति "अरुण-यैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इत्यत्रारुणादीनां परस्परं पुनर्वाक्यीयः । दर्शपूर्णमासप्रकरणे प्रयाजा उक्ता इति प्रकरणाद्दर्शपूर्णमासयोरेव क्रियन्ते । "अग्निरन्नस्यान्नपतिस्तस्याहं" "देवयज्ययाऽन्नस्यान्नपतिर्भूयासम्" "व्यदब्धिरस्य भूयासममुं दभेयम्" "अग्नीषोमे वृत्रहणे तयाऽहं देवयज्यया वृत्रहा भूयास" मिति मन्त्रोक्त्या यदाग्नेयो याग उपांशुयागोऽग्नीष्टोमीययागश्चेति यागत्रयं क्रमेण स्थितम् । तत्र प्रथमतृतीयाभ्यां मन्त्राभ्यां लिंगाद्यदाद्यन्ती यागावाक्षिप्येते द्वितीयेन मंत्रेण द्वितीयो यागस्ततस्थानवशात् । उद्गता ऋत्विगध्वर्युरित्यादेरु-द्गातेत्यादिसमाख्यावशात् सामवेदादावधिकृत इति निश्चीयते ।

## बालचित्तानुरञ्जनी

अनुपात्तेऽपि तात्पर्यकल्पनायामतिप्रसङ्गमाह यदि चेति। शब्दो हि सङ्केतसापेक्षः स्वार्थमभिधत्ते, न निरपेक्षः। अतो यत्रैवास्य सङ्केतस्तत्रैवाभिधाव्यापारः, नार्थान्तरे। तत्र सङ्केताभावात्। अन्यथा 'ब्राह्मण पुत्रस्ते जातः, कन्या ते गर्भिणी' इत्यादिवाक्यश्रवणानन्तरं प्रतीयमानहर्षशोकादीनां वाच्यत्वं स्यादिति भावः। अनुपात्तेऽपि तात्पर्यकल्पनायां लक्षणा न स्यादिति भावः। तत्रैव दूषणान्तरमाह किमिति चेति। श्रुत्यादीनां लक्षणानि त्वस्माभिरनन्तरोक्तप्रकरणे दर्शितानि। यथा

**श्रुतिः शब्दानपेक्षः स्यादभिधातुं पदान्तरे।**
**श्रुतसर्वार्थसामर्थ्यं लिङ्गमित्युच्यते बुधैः॥**

**पदद्वयं मिलित्वा कृकवाकामितीति[?]**
**प्रधानवाक्यमङ्गोक्त्याकाङ्क्षं प्रकरणं मतम्।**

**स्थानं समानदेशत्वं समाख्या यौगिको रवः।**
**एतेषां पारदौर्बल्यं विरोधे पूर्वधर्मतः।**
**अर्थस्य विप्रकर्षेण विप्रकर्षस्तु कथ्यते॥**

**पञ्चभिः स्याद् व्यवहिता सा समाख्या पुनः....**
**वाक्यं द्वयेन चैकेन लिङ्गं स्यात् केवला श्रुतिः॥**

**बाध्यैव स्यात् समाख्या [तु] बाधिकैव श्रुतिः पुनः।**
**बाध्यबाधकरूपेण लिङ्गादीनि यथोचितम्॥**

एतेषामुदाहरणानि प्रदीपिकायां प्रदर्शितानि। यथा-तत्र तावत् श्रुतिलिङ्गयोर्बलाबलत्वे चिन्ता। तत्र 'कदाचन स्तरीरसि नेन्द्र सश्चति दाशुषे' इत्यादिका ऐन्द्री ऋक्। 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इति द्वितीयारूपा श्रुतिः। ननु इन्द्रस्यैवोपस्थानं उत इन्द्रस्य गार्हपत्यस्य वा, किं वा उभयोः उत गार्हपत्यस्येति विशेषहेतोरभावात् संशयः। तत्र इन्द्रस्य प्रकाशनसामर्थ्यरूपाल्लिङ्गात् मन्त्रस्य इन्द्रविषयक्रियासाधनत्वं गम्यते। अन्यथा अनेन इन्द्रप्रकाशनं व्यर्थं स्यात्। अत एव मन्त्रकरणक्रियां प्रति इन्द्रः प्रधानमिति एवंविधबुद्ध्युत्पादनं लिंङ्गविनियोगः। का क्रियेति विषयजिज्ञासायां ऐन्द्र्योपतिष्ठत इत्यनेनाधिकपदद्वयरूपेण वाक्येन उपस्थानक्रियायां पर्यवसानं क्रियायाः। एतदुक्तं भवति—ऐन्द्र्येण मन्त्रेण द्वन्द्वमुपतिष्ठतमिति [?] गार्हपत्यमित्यनया द्वितीयान्तपदरूपया श्रुत्या गार्हपत्यः प्रधानं गम्यते। तद्गुणीभूय [त] किञ्चित्करणकक्रियामन्तरेण न सम्भवति। ततस्तादृशीं काञ्चन क्रियां प्रति गार्हपत्यः प्रधानमित्येतद्-बुद्ध्युत्पादनं श्रुतिविनियोगः। ऐन्द्र्योपतिष्ठत इति पदद्वयेन मन्त्रविशेषक्रियाविशेषयोः पर्यवसानं भवति। एवञ्च सति ऐन्द्र्येण मन्त्रेण गार्हपत्यमुपतिष्ठत इत्यर्थो भवति। तदेवं श्रुतिलिङ्गयोर्विरोधे सति श्रुतिवदेव लिङ्गादेरपि मानत्वाविशेषात् तदर्थप्रतीतेः श्रुतिलिङ्गाधीनत्वादिन्द्रोपस्थानस्य लिङ्गाधिगतिसमये श्रुत्या गार्हपत्योपस्थानावगमात् ब्रीहियववद् विकल्पेन द्वयोरुपस्थापनमित्येकः पक्षः। गुणानां प्रति प्रधानव्या [मा ?] वृत्तरुपस्थानद्वयेऽपि मन्त्रावृत्तेरुपपत्तेः। श्रुतिबलीयस्त्वेऽपि विरोधाभावेन लिङ्गस्य बाधात्

उपस्थानसमुद्भव इति पदान्तरलिङ्गस्य सामर्थ्यरूपत्वेन श्रुत्यपेक्षया बलवत्त्वात्। अशेषशब्दप्रवृत्तेर्वस्तुशक्त्यनु-सारित्वात् इन्द्रस्यैव लिङ्गादुपस्थानमित्यपरः पक्षः। मन्त्रेण तदर्थप्रतिपादनात् पुनः शक्तिं निरूप्य मन्त्रस्याकाङ्क्षा-वशात् इन्द्रशेषत्वे श्रुतिर्यावत् कल्प्यते तावत् श्रुत्या गार्हपत्याङ्गत्वे मन्त्रस्यावगते सति आकाङ्क्षोपशान्तेः श्रुतिकल्पनाया निर्मूलत्वात् अतिशीघ्रवृत्तं श्रुत्या मन्त्रगतेन्द्रप्रकाशनसामर्थ्ये [न] लिङ्गं बाध्यते। न च लिङ्गस्य विरोधाभावात् अबाध इति वाच्यम्। प्रामाण्यस्याकाङ्क्षाधीनत्वात्। आकाङ्क्षायाश्च श्रुत्या प्रत्याख्यानाद् विरोधसिद्धिः। विरोधेन प्रत्यक्षेणेवानुमानं श्रुत्या लिङ्गं दुर्बलत्वेन बाध्यते। तस्मादिन्द्रोपस्थानमेव श्रुतिवशेन वक्तव्यमिति सिद्धान्तः।

लिङ्गवाक्योर्विरोधस्योदाहरणम्—'स्योनं ते सदनं करोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते प्रतितिष्ठ ब्रीहीणां मेध सुमनस्यमानः' इति दर्शपूर्णमासयोः श्रूयते। हे पुरोडाश तव समीचीनं स्थानं करोमि। तत्स्थानं घृतस्य धारया सुष्ठु सेवितुं योग्यं कल्पयामि। हे ब्रीहि सारभूत त्वं समाहितमनस्कः तस्मिन् समीचीने सदनस्थितो भवेत्यर्थः। तत्र सकलो मन्त्रः सदनकरणे पुरोडशसादने च विनियोक्तव्यः। किं वा कल्पयामीत्येतत् सदनकरणे तस्मिन् सीदामृतेत्यादि पुरोडाशासादन इति वाक्यैकत्वपदत्वाभ्यां संशयः। सति सम्भवे वाक्यभेदस्यान्याय्यत्वात्, तस्मिन्निति पूर्वसापेक्षत्वात् वाक्यैक्यादुभयत्र समासो [?] मन्त्रो विनियोक्तव्यः अथवा लिङ्गवाक्ययोः समानबलत्वात् मानत्वाविशेषात् न्यस्तस्य [?] वा विकल्पेन उभयत्र विनियोग इति पूर्वः पक्षः। लिङ्गवाक्ययोर्द्वयोरपि श्रुतिद्वारा विनियोजकत्वाविशेषेऽपि लिङ्गेन साक्षादेव श्रुतिकल्पनावाक्येन [तु] किं लिङ्गद्वारा तत्कल्पना कृता। श्रुतिविप्रकर्षादितरस्य च तत्सन्निकर्षेण बलवत्त्वात् पूर्वार्द्धस्य सदनकरणे परापेक्षाम-न्तरेण सामर्थ्यावगमात्। उत्तरार्द्धस्यापि तस्यैव पुरोडाशप्रसादने सामर्थ्यस्य क्लृप्तत्वात् अर्थभेदे नानावाक्यत्वा-वगमात् विसृज्य विनियोगो लिङ्गबलीयस्त्वादिति सिद्धान्तः।

वाक्यप्रकरणयोर्विरोधोदाहरणम्—सूक्तवाकनिगदैः तत्र अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् इत्यादिश्रुतौ इदं हविरजुषेतामित्यादीनि देवतापदेन एकवाक्यभूतानि। तत उपस्थितप्रकरणविशे-षात् अन्यत्रापि सर्वत्र प्रयोक्तव्यानि। किं वा देवतापदैकवाक्यतया तथैव व्यवस्थितानीति प्रकरणस्य वाक्यतो बलीयस्त्वाबलीयस्त्वाभ्यां संशयः। प्रधानाकाङ्क्षमप्रधानमिति न्यायेन सर्वस्व प्रधानार्थत्वमङ्गीकर्तव्यम्। तथा च वाक्याद् विनियोगात् प्राकरणिकविनियोगो बलवानिति पूर्वः पक्षः। वाक्येन सामर्थ्यं बुद्धय [?] श्रुतिं कल्पयित्वा तया विनियोगे गम्यमाने प्रकरणाद् वाक्यादिपरम्परया विनियोगस्य विप्रकृष्टत्वेन प्रकरणस्य ततो दुर्बलत्वम्। अतो वाक्यीयो विनियोगो बलवानिति सिद्धान्तः।

प्रकरणस्थानयोर्विरोधोदाहरणम्—राजसूये बहुषु यागेषु फलवस्तुसमप्रधानेषु अभिषेचनीय संज्ञः सोम-यागः [पठितः] तत्सन्निधावक्षर्दीव्यति राजन्यं जिनातीत्यादिना देवनादयो धर्माः श्रुताः। ते किं सर्वस्य राजसूय-स्याङ्गभूता उत अभिषेचनीयस्यैवेति प्रकरणसन्निधिभ्यां संशयः। सन्निधिविशेषात् अभिषेचनीयाङ्गत्वम्। प्रकरणानुसरणे सन्निधिविशेषस्य निरर्थकत्वं स्यात्। सन्निध्यनुरोधात् प्रकरणं विशेषसङ्कुचितमपि सावकाशम्। अतो देवनादयः अभिषेचनीयस्याङ्गानीति पूर्वः पक्षः। देवनादीनां प्रकरणविशेषात् सर्वार्थत्वात् अविशेषतः सर्वा-काङ्क्षायामपि यावत [?] सन्निधि विशेषात् अभिषेचनीयस्य विशेषाकाङ्क्षां कल्पयित्वा तादर्थ्यकल्पनायाः

क्लृप्तत्वात् आकाङ्क्षातः सर्वार्थतावगमस्य सन्निकृष्टत्वात् आङ्क्षाकल्पनयाऽभिषेचनीयार्थत्वस्य विप्रकृष्टत्वात् एतेऽर्थाः सर्वार्था इति सिद्धान्तः ।

क्रमसमाख्ययोर्विरोधोदाहरणम्—पौरोडाशिकसमाख्याने दर्शपूर्णमासकाण्डे सान्नाय्यपात्रसंस्कारक्रमे समाम्नातः शुन्धध्वं दैव्याय कर्मण इत्यादिमन्त्रः । स किं समाख्याया बलीयस्त्वात् पुरोडाशपात्राङ्गं किं वा क्रमस्य बलवत्त्वात् सान्नाय्यपात्राङ्गम् आहोस्विदविशेषादुभयाङ्गमिति संशयः । विशेषाग्रहणात् उभयोरपि क्रमसमाख्यो-स्तुल्यबलत्वेन उभयाङ्गं सम्बन्धवचनत्वेन समाख्याया बलीयस्त्वात् पुरोडाशपात्राङ्गमिति पूर्वः पक्षः । दण्डी पुरुषः [अत्र] प्रकृत्या दण्डस्य उक्तत्वात् प्रत्यये न पुरुषस्याभिधानात् मिथो योगस्य समभिव्याहारकल्पनया वाक्याभा-वात् इहापि समाख्यायाः सम्बन्धवचनत्वानङ्गीकारात् । तद्वचनत्वेऽपि तस्यास्तत्राप्रमाणत्वात् तामवलंब्य पुरोडाश-स्वरूपस्य काण्डस्वरूपस्य च सामान्यसम्बन्धं परिकल्प्य अपेक्षावशात् एकवाक्यत्वमुपेत्य ततः सामर्थ्यकल्पनया ततः श्रुतिं कल्पयित्वा तया विनियोगो यावदगम्यते तावत् क्रमकृतसम्बन्धमात्रस्य प्रत्यक्षत्वात् तस्मादारभ्य श्रुत्यर्थप्रतिपत्तेः सन्निकर्षात् शुन्धध्वम् इति मन्त्रः सान्नाय्यपात्राङ्गमिति सिद्धान्तः । तदुक्तं श्रुतिलिङ्गवाक्यप्रकरण-स्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति । श्रुत्यादीनां समवायः समानविषयत्वेनैकार्थसन्निपातः । तत्र परस्य दौर्बल्यं तस्य पूर्वानुमानद्वारा तत्सम्बन्धात् तेनार्थसाधकस्य ततो विध्युत्कर्षात् पूर्वस्य प्राबल्यम् । तस्यार्थसाधने परापेक्षाभावात् तेन सन्निकर्षादिति सूत्रार्थः । अत्रोदाहरणं आचार्य सुन्दरपाण्ड्येन दर्शितमिति ।

**विरोधिनोस्तदैको हि तत्फलं प्राप्नुयात्तयोः ।**
**निःश्रेण्यारोहणं प्राप्य प्राप्तिमात्रो दवाति च [?] ।**
**एकमेव फलं प्राप्तुमुभावारोहतो यदा ॥**

**एकसोपानवर्त्त्येको भूमिष्ठश्चापरस्तयोः ।**
**उभयोस्तु जवस्तुल्यः प्रतिबन्धश्च नान्तरा ॥**

**प्रथमे तद् गृहीतेऽस्मिन् यस्मिन्नेव तरे मुधा इति ।**

[प्रथमेन गृहीतेऽस्मिन् पश्चिमेवेतरन्मुधा] अत्रापि दीर्घदीर्घाभिधाव्यापारेणैव शेषशेषिभावप्रतीतेः सर्वेषां सामान्यात् सबलदुर्बलभावो न स्यादिति भावः ।

## काव्यादर्शः

हर्षशोकादीनामिति । ते हि वाक्यार्थप्रतिपत्त्या क्रियन्ते, न च ज्ञापकस्य शब्दस्य कारकत्वं भवति । 'पुत्रस्ते जातः' इत्यतो वाक्यार्थसामर्थ्याद् हर्षो जायत इति जननव्यतिरिक्तं ध्वननम् । न वाच्यत्वमिति । शब्दो हि संकेतसापेक्षः स्वव्यापारमारभते, न स्वभावतः । यत्रैव चास्य संकेतस्तत्रैव अभिधाव्यापारो युक्तः, नार्थान्तरविषय-स्तत्र संकेताभावात् । कस्माच्चेति । लक्षणा हि मीमांसकैरप्यङ्गीकृता । श्रुतिलिङ्गेति । यस्य ह्यभिधेयेनार्थेन सह नैकट्यं, स बलीयान् । यस्य च व्यवहितत्वं स दुर्बलः । यदाहुः—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यनां पददौ-र्बल्यमर्थविप्रकर्षात् ।' न च व्यवहितत्वमव्यवहितत्वं वाभिधाव्यापारगम्यं, किं तु निमित्तत्ववैविध्याद् व्यङ्ग्यमेव ।

तच्च यदि नाभ्युपगम्यते तत् कथमेकस्य बलीयस्त्वं, सर्वेषां श्रुत्यादीनामभिधाव्यापारस्य समानत्वात्। प्रधाने चाङ्गत्वापादनं श्रुत्यादीनामर्थः। श्रवणं श्रुतिः। यदर्थस्याभिधानं शब्दश्रवणमात्रादेवावगम्यते।

**अभिधात्री श्रुतिः काचिद् विनियोक्त्र्यपरा तथा।**
**विधात्री च तृतीयोक्ता प्रयोगो यन्निबन्धनः॥**

प्रकृतिप्रत्ययश्रुत्योः स्वार्थाभिधायकत्वम्। पदस्य कारकविभक्तीनां च विनियोजकत्वम्। लिङादीनां विधिसामर्थ्यम्। तत्र विनियोजिकायाः श्रुतेः, यथा—'ऐन्द्र्या गार्हपत्यमुपतिष्ठते।' अत्र गार्हपत्योपस्थाने ऐन्द्र्या ऋचो विनियोगस्तृतीयाप्रतिपादित इति श्रौतः। ऐन्द्र्या अङ्गभावः प्रतिपाद्यत इत्यर्थः।

'बर्हिर्देवसदनं दामि' इति । देवाश्रयदर्भच्छेदनेऽयं मन्त्र इति। 'दामि' इति लवनलिङ्गाद् अनेन मन्त्रेण बर्हींषि लुनीयादिति प्रतीयते। वाक्यतो यथा—'श्वेतं छागमालभेत।' अत्रैकवाक्योपादानाच्छ्वेतगुणस्य च्छागावच्छेदकत्वेन क्रियाङ्गभावो गम्यते। यथा वा 'अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इत्यत्र अरुणादीनां क्रमेण संबन्धः श्रौतः। अरुणैकहायन्यादीनां परस्परं पुनर्वाक्यीयम्।

दर्शपौर्णमासप्रकरणे 'समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजति' इति पञ्च प्रयाजा उक्ताः, ते च दर्शपौर्णमासयोरेवक्रियन्ते। तदङ्गत्वमवगम्यत इत्यर्थः।

**'अग्निरन्नस्यान्नपतिस्तस्याहं देवयज्ययान्नस्यान्नपतिर्भूयासम्'**
**'दधिरस्यदर्धो भूयासं तदमुं दभेयम्।'**

**'अग्नीषोमौ वृत्रहणौ तयोर्देवयज्यया वृत्रहा भूयासम्।'**

इति मन्त्रत्रयात् आग्नेयो याग उपांशुयाज आग्नीषोमीयो यागश्चेति यागत्रयं क्रमेण स्थितम्। तत्र प्रथमतृतीयमन्त्राभ्यां देवयज्यालक्षणालिङ्गाद् आद्यन्तौ यागौ आक्षिप्येते, द्वितीयेन मन्त्रेण द्वितीयो यागस्तु, आग्नीषोमीयलक्षण उपांशुयाजः स्फुरदोष्ठमुद्रस्वरः स्थानवशात्। 'उद्गाताऽध्वर्युर्होता' इति। उद्गायतीत्यादिसमाख्ययाऽन्वर्थं संज्ञाबलात् सामयजुऋग्वेदेष्वधिकृत इति निश्चीयते तेष्वङ्गभाव इत्यर्थः। श्रुतिलिङ्गादिविकल्पसंभवे तु श्रुत्यर्थ एव क्रियते, न लिङ्गाद्यर्थोऽर्थविप्रकर्षात्, यता 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यत्रैवैन्द्र्या ऋच इन्द्रप्रकाशनसामर्थ्यलक्षणाल्लिङ्गाद् इन्द्रोपस्थापनविनियोगो गार्हपत्यमिति द्वितीयया श्रुत्या बाध्यते, तेन ऐन्द्र्ययाप्येतया गार्हपत्यस्यैवोपस्थानं भवति। श्रुत्यादयश्च क्वचित् समस्ताः, क्वचिद् व्यस्ता एव विनियोजयन्ति।

समस्ता यथा—

**अनेन कल्याणि करे गृहीते महाकुलीनेन महीव गुर्वी।**
**रत्नानुविद्धार्णवमेखलाया दिशः सपत्नी भव दक्षिणस्याः॥**

विधेरपीति। योऽयं विधिः सर्वैर्वाच्य एवेत्यभ्युपगतस्तस्यापीत्यर्थः॥

## विवेकः

अथ केवलाभिधाव्यापारवादिनं प्रति दूषणान्तरमाह यदि चेति । 'ब्राह्मण पुत्रस्ते जात' इत्यादि वाक्यश्रवणान्तरं ये हर्षादय उत्पद्यन्ते ते वाच्या इति तेनापिनाऽभ्युपगतम्, यतोऽमी वाक्यार्थप्रतिपत्त्या क्रियन्ते । न च शब्दस्य कारकत्वं, ज्ञापकत्वात्तस्य । अतः शब्दोऽत्र हर्षादीन् प्रति तरु (रोः) कुसुमविकाशान् प्रति कुलालादि च (कुठारादिवत्) कारणकारणीभूतः । यदि चैषामपि शाब्दत्वमभ्युपगन्तव्यं तदा शब्दादेव केवलात् सकलार्थप्रतिपत्तिनिष्पत्तेः श्रुतार्थापत्त्यादिप्रमाणान्तराङ्गीकरणमपि वृथा स्यात् । एवञ्चाभिधयैव क्रोडीकृतत्वाद्द्वितीयकक्षापातिन्या लक्षणाया अप्यङ्गीकारे [न] विशेषं पश्याम इत्याशयवान् पृच्छति कस्माच्चेति । किञ्च यदि दीर्घदीर्घाभिधैव व्यापारस्तदा श्रुत्यादिविनियोगः श्रुत्यादिबलाबलञ्चेति क्रियाऽपि वाक्यार्थविशेषप्रतिपत्तिहेतुर्भवदनुमताऽपि न स्यात्, एकनिष्पत्तेः सर्वेषां समत्वप्रसङ्गादित्याह किमिति चेति । तत्र द्वितीयान्तं पदं श्रुतिस्तृतीयान्तमपीति । नाद्यः (नाम्ना ?) पदार्थे सामर्थ्यं लिङ्गम् । एकार्थपरः पदसमूहः म (सं)हत्यार्थमभिदधति पदानि वा वाक्यम् । कर्तव्यस्येतिकर्तव्यताऽकाङ्क्षा प्रकरणम् । यथासंख्यं स्थानम् । यौगिकं नाम समाख्या । तैः प्रधानेऽङ्गत्वोपपादनं श्रुत्यादिविनियोगः । तत्र श्रुतितो यथा दर्शपौर्णमासयोः 'व्रीहीनवहन्ती'त्यादि । अत्रावघाते व्रीहीणां विनियोगो द्वितीयाप्रतिपादित इति श्रौतः । तथा 'पशुना रुद्रं यजेते'-त्यत्र पशुनेति तृतीयाश्रुत्या रुद्रयागे पशोरङ्गभावः प्रतिपाद्यते । लिङ्गतो यथा 'बर्हिर्देवसदनं दामी'त्यत्र लवनलिङ्गादनेन मन्त्रेण बर्हीं'षि लूनीयादिति प्रतीयते । वाक्यतो यथा 'श्वेतं छागमालभेत' । अत्रैकवाक्योपस्थानात् श्वेतगुणाख्यच्छागावच्छेदकत्वेन क्रियाऽङ्गभावो गम्यते । प्रकरणतो यथा 'समिधो यजति', 'तनूनपातं यजति,' 'द्रुहो [बर्हि] र्यजति', 'स्वाहाकारं यजती'त्यादि प्रयोजनानां [प्रयाजानां] दर्शपौर्णमासाप्रकरणपठितानां तदङ्गत्वमवगम्यते । स्थानतो यथा मार्जनाघमर्षणोपस्थानजपहोमादिस्थानेषु पठितानां मन्त्राणां यथाक्रमं तत्रेवाङ्गभावो भवति । श्रुत्यादयश्च क्वचित् समस्ता क्वचिद्व्यस्ता एव विनियोजयन्ति । समस्ता यथा––अनेन कल्याणि करे गृहीते महाकुलीनेन महीव गुर्वी । रत्नानुविद्धार्णवमेखलाया दिशः सपत्नी भव दक्षिणस्याः ॥ (र. वं. ६/६३) व्यस्ता यथा––स क्षत्रियस्त्राणसहः सतां यस्तत् कार्मुकं कर्मसु यस्य शक्तिः । वहन् द्वयीं यद्यफलेऽर्थजाते करोत्यसंस्कारहतामिवोक्तिम् ॥ (किं. अ. ३/४८) 'श्रुत्यादीनां समवाये पारदौर्बल्यमर्थविप्रकर्षादि'ति (जै. सू. ३/३/१४) श्रुत्यादिबलाबलम् । तत्र लिङ्गपेक्षया श्रुतेर्बलीयस्त्वं यथा 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इत्यादि बलादत्र ऐन्द्र्या ऋचा (ऋ. सं. ८/६/५१) इन्द्रप्रकाशनसामर्थ्यलक्षणाल्लिङ्गादिन्द्रोपस्थाने विनियोगो गार्हपत्यमिति द्वितीयाश्रुत्या बाध्यते । तेनैन्द्र्याऽपेक्षितया गार्हपत्यस्यैवोपस्थानं भवति । एवमितरत्रापि पारदौर्बल्यात् पूर्वपूर्वबलीयस्त्वं द्रष्टव्यम् । तदिह निमित्ततावैचित्र्यमेव समर्थकम्, अन्यथा मुख्याल्लाक्षणिकस्यापि न भेदः स्यात् । तदित्थमेवंविधत्वान्निमित्ततविचित्र [वैचित्र्य] मनुमन्यसे [चेत्] तर्ह्यस्मन्नये कः प्रद्वेष इत्युपसंहरति इत्यन्विताभिधानवादेऽपीति ।

## दीपिका

एवमियता प्रबन्धेन 'यत्परः' इत्यादि पश्चादुक्तमपि दृढप्रायतया पूर्वं परिहृत्य 'सोऽयम् इत्यादि परिहृतप्रायमपि प्रकारान्तरेण परिहरति––यदि चेति । अनन्तरमिति पश्चान्मात्रे न पुनरव्यवहितोत्तरकाले । हर्षेति । तेऽपि हि वाक्यार्थप्रतीतिजनिताः सामग्र्या अवगम्यन्ते ।

ननु भवत्पक्षेऽपि तादृशहर्षादिप्रतीतेः शाब्दत्वं कुतो नाङ्गीक्रियते ? हर्षाद्युत्पत्तिविघ्नितप्रसरः शब्दव्यापारसन्तानो न पुनरुज्जीवतीति चेत् ? तर्हि मत्पक्षेऽप्ययं न्यायो न दण्डबाधित इत्याशङ्क्यास्तामन्वाचयमात्रमेतदिति बुद्ध्या परिहारान्तरमाह—कस्माच्चेति । पृथगुच्यत इति शेषः । यदि नाऽभिधायास्तात्पर्यस्य वा लिङ्गेन शब्दार्थप्रत्यायनसामर्थ्यं तदाश्रुत्यादिप्रमाणद्वारेण विनियोगनियमः, तेषाञ्च समवाये पारदौर्बल्यम्, पूर्वपूर्वापेक्षयोत्तरोत्तरेषामर्थविप्रकर्षादिति प्रक्रियाकल्पनं निरर्थकमेव, तत एव विनियोगनियमासिद्धेः सर्वत्राविशेषादित्याह—किमितीति । यद्वा लिङ्गादिभिः कल्पनीयायाः श्रुतेरपदार्थत्वेन व्यङ्ग्यत्वमेव युक्तम् । तच्च व्यञ्जनाऽनङ्गीकारेण निर्वहतीत्याह—किमितीति । अस्मिन् पक्षे कुतो हेतोरित्यर्थः ।

**"श्रुतिर्द्वितीया क्षमताऽथ लिङ्गं वाक्यं पदान्येव तु संहतानि ।**
**सा प्रक्रिया या करणस्य काङ्क्षा स्थानं क्रमो योगबलं समाख्या ।"**

इति श्रुत्यादिनिरुक्तिः । तत्र श्रुत्यादीनां विनियोगनियामकता यथा दर्शपौर्णमासयोः 'व्रीहीनवहन्ति' इत्यादौ व्रीहीनामवघाते विनियोगो द्वितीयाप्रतिपन्न इति श्रौतः । बर्हिर्देवसदनं "दामि" इत्यत्र दामि इति पदार्थसामर्थ्येन लवनलिङ्गेन बर्हिश्च्छेदेऽयं मन्त्रोऽवगम्यते । 'श्वेतच्छागमालभेत' इत्यादावेकवाक्योपात्ततया श्वेतस्य छागावचछेदकता । 'समिधं यजति' 'तनूनपातं यजति' इत्यादीनां दर्शपौर्णमासप्रकरणपठितानां प्रकरणाकाङ्क्षया प्रकरणात्तत्रैव विनियोगः । याज्याऽनुवाक्यायुगले 'इन्द्राग्नी रोचना दिवः' इत्यादौ यथासंख्यं क्रमेणाङ्गता । हौत्रमौद्गात्रमाध्वर्येवमित्यादौ समाख्यया विनियोग इति, समवाये पारदौर्बल्यम् । यथा "ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति ऐन्द्र्या ऋच इन्द्रार्थप्रकर्षसामर्थ्यलक्षणाल्लिङ्गादिन्द्रोपस्थानप्राप्तिर्गार्हपत्यमिति द्वितीयाश्रुत्या बाध्यते । एवमितरत्रापि । पूर्वपूर्वबलवत्तया श्रुतेः सर्वबाधकत्वम् । यदुक्तमत्रभवद्भिः—

**"बाधिकैव श्रुतिर्नित्या समाख्या बाध्यते सदा ।**
**मध्यमानाञ्च बाध्यत्वं बाधकत्वं त्वपेक्षया ॥"इति ।**

उपसंहरति इतीति । न केवलमभिहितान्वयेऽन्विताभिधानवादेऽपि प्राचीनानामिदानीन्तनानाञ्च मते । 'निःशेष' इत्यादौ विधेरपि न केवलं सर्ववाक्यार्थस्यालङ्कृतिध्वनिस्थले चालङ्कृतेरित्यर्थः ।

### दर्पणः

एवं यत्परः शब्दः स शब्दार्थ इति पक्षस्य निरासेनापि सेयमिषोरित्यादिपक्षं प्रकारान्तरेणापि परिहरति यदि चेति । हर्षेति । हर्षादयो हि न तेनापि वाच्यत्वेनाभ्युपगम्यन्ते यतोऽमीवाच्यार्थप्रतीत्या क्रियन्ते । न खलु शब्दस्य कारकत्वम्, पूर्वोक्तरीत्यादिना ज्ञापकत्वात् । तस्माच्छब्दवाक्यार्थः निष्पत्तिः [?] प्रतीयते । तत्प्रतिपत्त्या हर्षापुपमि [?] एवमपि च शब्दाङ्गीकारे शब्दादेव केवलात् सकलार्थप्रतिपत्तिः । श्रुतार्थापत्त्यादिप्रमाणान्तरस्वीकारेणापि निरर्थकं स्यात् । लक्षणेत्यनन्तरं पृथगुच्यत इति शेषः । यद्यभिधायास्तात्पर्यस्य वा लिखितशब्दार्थप्रत्यायनसामर्थ्यं तदा श्रुत्यादिप्रमाणान्तर विकस्य [?] समवाये पारदौर्बल्यमित्यपकर्षादिति भवतः प्रक्रिया कल्पनीयेति उपपद्यते । सर्वेषां समनुपसङ्गादित्याह [?] किमिति चेति । द्वितीयान्तं पदं श्रुतिः । तृतीयान्तमपीति भट्टः । पदार्थसामर्थ्यं लिङ्गं यथा लिङ्गस्यातं [?] यौगिकं नाम समाख्याता शब्देत्येवं एषां समवाये पूर्वस्य

बलीयस्त्वम् तत्रोत्तरोत्तरेषां दौर्बल्यं अर्थविप्रकर्षात् । यथा दर्शपूर्णमासयोः ब्रीहीनवहन्तीत्यादौ यौगिकसमाख्यया विनियोगः । तत्र लिङ्गापेक्षया श्रुतेर्बलीयस्त्वं यथा ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति । अत्र ऐन्द्र्या च इन्द्रप्रकाशन-सामर्थ्यात् लिङ्गलक्षण [?] लिङ्गात् इन्द्रोपस्थाने विनियोग्यो गार्हपत्यमिति द्वितीयया श्रुत्या बाध्यते । अयमाशयः—ऐन्द्र्येत्यादौ श्रुतौ यतः श्रुतेर्बलीयस्त्वं तदपदार्थत्वेन व्यञ्जनानङ्गीकारेण निर्वहतीति उपसंहरतीति । अपिशब्दात् अभिहितान्वयवादादौ विधेर्निःशेषेत्यादि व्यङ्ग्यस्यापि [?] ।

## साहित्यचूडामणिः

एवं तात्पर्यवादे स्ववचनविरोधमुपपाद्य दोषान्तरमप्युद्भावयितुं व्याप्यमभ्युपगमयति—यदि चेति । व्यापकं प्रसञ्जयति—तत् कथमिति । 'पुत्रस्ते जातः' इत्यस्मादाकर्णयितुः प्रमोदः, 'कन्या ते गर्भिणी' इति कुलकलङ्कशङ्कया शोकः । तावन्तमवधिं विशृङ्खलस्तात्पर्यप्रसर इति हर्षशोकयोरपि वाच्यत्वप्रसङ्गः ययोरुत्पाद्यत्वम् । किञ्च तात्पर्ये विजयमाने किमर्थं लक्षणास्वीकार इत्याशङ्क्याह—कस्माच्चेति । इतोऽपि युक्त्यन्तरमाह—किमिति चेति । 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये परदौर्बल्यमर्थविप्रकर्षादि'ति सूत्रम् । अत्र श्रुतिरनन्यसाकाङ्क्षः शब्दो लिङ्तव्यदादिः । वस्तुसामर्थ्यं लिङ्गम् । पदान्तरमभिव्याहारो वाक्यम् । वाक्यस्य वाक्यान्तरेणान्वयः प्रकरणम् । स्थानं सन्निधानम् । समाख्या पुरातनी परिभाषा । यदाहुः—

**एक-द्वि-त्रि-चतु-पञ्च-वस्त्वन्तरणकारितम् ।**
**श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते ॥**

इति । एतेषां तात्पर्यैकनिबन्धनत्वे कथं प्राबल्यदौर्बल्यतारतम्यम् । उदाहरणं तु तन्त्रत एवानुसन्धेयं शृङ्गारप्रकाशाद् वा । विधेरपीति । न केवलमलङ्काररसध्वन्योः, यावद् वस्तुमात्ररूपस्य विधेरपीति अपिशब्दार्थः ।

## सम्प्रदायप्रकाशिनी

इत्थमविचलाभिरुपपत्तिभिः सुदृढमुपालभ्य विपक्षबाधोपन्यासेनापि भूयस्तरामुपालभते—यदि च शब्दश्रुतेरित्यादि । शब्दश्रुतिसमनन्तरावगतस्य सर्वस्यैवार्थस्याभिधाव्यापारसमधिगम्यत्वं चेदभ्युपगम्यते, तदा 'ब्राह्मण पुत्रस्ते जात' इत्यादौ वाक्ये यदिदं हर्षादि प्रतीयते तस्यापि वाच्यत्वं प्रसज्येत । न ह्येतदभिमतं, कार्ये व्युत्पत्तिवादिनस्त इति भावः । स्वाभ्युपगमविरोधप्याविष्कृत्योपहसति—कस्माच्च लक्षणेत्यादिना । गौणो मुख्यश्च शास्त्रार्थ इत्युद्घोषयता लक्षणादिविवेचनाय च संरभमाणेन येयमविचलमङ्गीकृता लक्षणा सा तवेत्थं प्रलपतः कुतः प्रमाणात् सिध्यति । लक्षणीयेऽप्यर्थे इषुवद् दीर्घदीर्घोऽभिधा व्यापार एव धुरन्धरतासाम्राज्यमनुभवतु, म्रियतामियं वराकी लक्षणेति यावत् । इत्थमन्विताभिधानवादिनः प्रौढवादैरुपालभ्य तत्सिद्धान्तस्य मूलमेवोच्छेत्तुमाह—किमिति च श्रुतिलिङ्गेति । द्वितीयातृतीयान्तयोरन्यतरत् पदं श्रुतिः । पदार्थसामर्थ्यं लिङ्गम् । वाक्यमवान्तरम् । कर्तव्यस्येतिकर्तव्यताकाङ्क्षा प्रकरणम् । यथासंख्यं स्थानम् । लौकिकी संज्ञा समाख्या । षड्भिरेभिर्हि प्रमाणैर्वाक्येषु यथायोगं प्रधानाङ्गत्वमापाद्यत इति तान्येतानि ते सिद्धान्ते प्रमाणत्वेनोपयुज्यन्ते । तत्र 'व्रीहीनवहन्ती'त्यादौ श्रुतिः । 'बहिर्देवसदनं दामि' इत्यादौ लिङ्गम् । 'श्वेतं छागमालभेते' त्यादौ वाक्यम् । 'समिधो यजति' 'तनूनपातं यजती' त्यादौ प्रकरणम् । याज्यानुवाक्यायुगले 'इन्द्राग्नी रोचना दिव' इत्यादौ स्थानम् । 'आध्वर्यवं

हौत्रम् औद्गात्रम्' इत्यादौ समाख्या। एतैः प्रधानाङ्गत्वापादनरूपे विनियोगे यदा सन्निपातस्तदा परदौर्बल्यमुपर्युपर्यर्थविप्रकर्षात्। तदिदं ह्युदुघोषयस्याभिनिवेशेन—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां परदौर्बल्यमर्थविप्रकर्षादि' ति। तदेतत् परदौर्बल्यं कथमुपपद्यतां परदुर्बलत्वे हेतुर्योऽर्थविप्रकर्षः, महेषुवद् दीर्घदीर्घे तवास्मिन्नभिधाव्यापारे जीवति, तस्यैवासम्भवात्। तत्र श्रुत्यादीनां लिङ्गादिसन्निपाते परदौर्बल्यम् 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इत्यादिषु घण्डापथत्वेन व्यवस्थितमुत्सन्नसंकथं स्यात्। इत्थमन्विताभिधानदृशापि निरूप्यमाणं व्यङ्ग्यसिद्धसाम्राज्यं निस्सपत्नमेव।

## मधुमती

ननु शब्दश्रुतेरनन्तरं प्रतीयमानेऽपि, तत्रैव अभिधाख्या प्रतीयते, यत्र न लिङ्गाद्यनुसन्धानम्। इह तु मुखप्रसादादिकं अदृष्ट्वा हर्षादीनां अज्ञानात् तदसिद्धम् इत्यस्व रसादाह—कस्माच्चेति। शक्ये इव लक्ष्येऽपि तात्पर्यसत्त्वात्। इयान् परं भेदः—यत् शक्ये तत् औत्सर्गिकम्, लक्ष्ये तु मुख्यार्थबाधप्रतिसन्धानकल्प्यं इति। ननु मुख्यार्थबाधस्य लक्षणामूलत्वात् तत एव अभिधापरिच्छेदेन नाभिधोपस्थापिका। अत्र एवात्र न लक्ष्यक्रमत्वम् इत्यस्वरसादाह—किमिति चेति। सर्वत्रैव अभिधाप्रसङ्गे उत्तरस्य दौर्बल्ये बीजाभावादिति भावः।

तत्र श्रुतिलिङ्गादयः षट् इह विनियोजकाः। तत्र विरुद्धयोः एकत्रोपनिपाते समुच्चयो न सम्भवतीति एकेन अपरस्य बाधो वक्तव्यः। स च बलवता दुर्बलस्येति स्थितिः। दौर्बल्यप्रतिपादकं सूत्रं च—"श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यं अर्थविप्रकर्षात्।" इति। सूत्रार्थस्तु—श्रुत्यादीनां समवाये एकत्रोपनिपाते, तेषां मध्ये यदपेक्षया यत् परं तदपेक्षया तत् दुर्बलम्। कुतः? अर्थविप्रकर्षात्—पूर्वापेक्षया विलम्बेन अर्थप्रत्यायकत्वात् इति। यथा चैतत् तथा उदाहरणे स्फुटीकरिष्यते।

तत्र—श्रुतिः 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते।' इत्यादौ द्वितीयान्तं पदम्। विभक्तिमात्रस्य अर्थानुपस्थापकत्वात्—

**"प्रकृतिप्रत्ययौ सम्भूयार्थं ब्रूतः इति स्थितिः।"**

इति व्युत्पत्तेः। तथाहि—कर्मत्वबोधिका द्वितीया। कर्मत्वं च क्रियाजन्येष्टफलभागित्वम्। तत्र क्रिया शेषः, तज्जन्यं फलम्। किञ्चिदंशः तदाश्रयः शेषी। अत एव द्वितीयान्तपादेन शेषशेषिकिञ्चिदंशावगमः क्रियते इति वृद्धाः। न च एतत् तृतीयायामप्यस्ति। "अरुणया" इत्यादौ साध्यत्वस्य द्राक् अप्रतीतेः। तत्र अरुणागतेन तृतीयार्थसाधनत्वेन क्रयगतं साध्यत्वं आक्षिप्यते इति प्राञ्चः। वाचस्पतिमिश्रास्तु—"द्वितीयातृतीयाश्रुती हि द्वे अपि कारकविभक्तितया क्रियां प्रति प्रकृत्यर्थस्य कर्मकरणभावमवगमयतः इति ते द्वे अपि विनियोजिके। क्रियां प्रति हि कर्मणः शेषित्वम्, करणस्य शेषत्वमिति हि विनियोगः। पदान्तरानपेक्षे च क्रियां प्रति शेषशेषित्वे श्रुतिमात्रात् प्रतीयेते इति श्रौते" इति भामत्यां वेदान्तटीकायां आहुः। वस्तुतस्तु—विधेयार्थबोधने शब्दान्तरनिरपेक्षं शब्दमात्रमेव श्रुतिरिति बोद्धव्यम्।

लिङ्गपदार्थः सामर्थ्यम्।

वाक्यं—परस्परसापेक्षाणां पदानां समभिव्याहारः।

प्रकरणं—कर्तव्यस्य विनियोगादेः 'केन स्यात्? कथं स्यात्? इत्यादीतिकर्तव्यताकाङ्क्षा।

स्थानं—सहावस्थानम्। सन्निधिरिति यावत्। एतदेव 'स्थानं क्रमः' इत्यत्र क्रमशब्देनाभिधीयते।

समाख्या—यौगिकं बलम्। यथा—काठकं, कालापकं, हौत्रं, औद्गात्रं इत्यादि। तत्र—

**"श्रुतिस्तु बाधिका नित्यं समाख्या बाध्यते सदा।**
**मध्यमानां तु बाध्यत्वं बाधकत्वं विवक्षया॥" इति सङ्ग्रहः॥**

अथ एषां विशेषोदाहरणानि—

तत्र—श्रुतिः लिङ्गात् बलवती। तथाहि—"ऐन्द्र्या गार्हपत्यमुपतिष्ठते।" इति श्रूयते। अत्र इन्द्रप्रकाशन-सामर्थ्यरूपात् लिङ्गात् "कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे।" इत्यादेः मन्त्रस्य इन्द्रोपस्थानक्रियासाधनत्वं प्रतीयते। अन्यथा इन्द्रप्रकाशनं व्यर्थमापद्येत। तथा च एतन्मन्त्रकरणक्रियां प्रति इन्द्रः प्रधानमिति व्युत्पादने लिङ्गस्योपयोगः। काऽसौ क्रिया? इति जिज्ञासायां 'ऐन्द्र्या उपतिष्ठते' इति पदद्वयात्मकवाक्येन उपस्थानक्रियायां पर्यवसानं भवति। एवं सति इन्द्रमात्रेण इन्द्रमुपतिष्ठेत इत्यर्थः पर्यवस्यति। एवं 'गार्हपत्यं' इति श्रुत्या द्वितीयान्त-पदात्मिकया गार्हपत्यस्य प्राधान्यं प्रतीयते। तच्च गुणभूतं किञ्चित्करणक्रियामन्तरेण न सम्भवतीति, 'ऐन्द्र्योप-तिष्ठते' इति पदद्वयेन मन्त्रविशेषक्रियाधिशेषयोः पर्यवसानं भवति। तथासति ऐन्द्रेण मन्त्रेण गार्हपत्यमुपतिष्ठेत इत्यमर्थः प्रतीयते। तथाच लिङ्गात् इन्द्रः शेषी, श्रुतेस्तु वह्निः शेषी प्राप्तः इत्यभयोर्विरोधे, प्रधानत्वाविशेषात् व्रीहियववत् विकल्प एव स्यात् इन्द्रगार्हपत्ययोः प्राधान्याविशेषात् उपस्थानस्य च गुणत्वात् 'प्रतिप्रधानं गुणावृत्तिः' इति न्यायेन उपस्थानावृत्त्या श्रुतिलिङ्गयोः समुच्चयात् देवतयोरपि समुच्चयोऽस्तु इति पूर्वः पक्षः। सिद्धान्तस्तु—प्रवर्तमानमपि लिङ्गं शेषिणं इन्द्रं विना न पर्यवस्यति। अतः 'इन्द्रं' इति श्रुतिकल्पनं आवश्यकमिति उपजीव्यजा-तीयत्वात् आवश्यकत्वाच्च, 'गार्हपत्यं' इति साक्षादुपात्तश्रुतिरेव गार्हपत्यस्य वह्नेः शेषित्वं बोधयति। 'ऐद्र्या' इत्यत्र श्रूयमाणं इन्द्रंपदं स्वोचितक्रियायां अध्वर्युगुणयोगेन मुख्येन्द्रसदृशवह्निपरमेव। न च विनिगमकाभावात् गार्हप-त्यपदमेव इन्द्रपरं लक्षणायाऽस्तु इति वाच्यम्। 'प्रधानाप्रधानयोः प्रधाने झटित्यवगमः' इति न्यायात् प्रथमप्रवृत्त-श्रुत्या वह्नेः शेषित्वं प्रतीयते। तदानीं अनुपपत्त्यभावात्, मुख्ये शब्दस्वरसाच्च। उत्तरकालं तु प्रतीयमानात् ऐद्र्येति लिङ्गात् प्रथमप्रतीतार्थानुगुण्येन गौण्या वृत्त्या वह्निरेव इन्द्रशब्दार्थः कल्प्यते, न तु वैपरीत्यम्। तस्मात् वह्न्युपस्थाने मन्त्रः श्रुत्या विनियुज्यते, न तु इन्द्रोपस्थाने लिङ्गेन। इति श्रुत्या लिङ्गबाधः।

लिङ्गं वाक्यात् बलवत्। तथाहि—दर्शपूर्णमासयोः श्रूयते—"स्योनं ते सदनं कृणोमि, घृतस्य धारया सुशेवं कल्पयामि, तस्मिन् सीदामृते प्रतितिष्ठ, व्रीहीणां मेध! सुमनस्यमानः।" इति। अस्यायमर्थः—भोः पुरोडाश! तव स्योनं—समीचीनं स्थानं कृणोमि —करोमि। तच्च स्थानं घृतस्य धारया सुशेवं—सुष्ठु सेवितुं योग्यं कल्पयामि। घृतप्लुतानां कपालादीनां पुरोडाशेन सुखसेव्यत्वात्। भो व्रीहीणां मेध—(मेदः)—सारभूत! त्वं सुमनस्यमानः—समाहितमनस्कः सन्, तस्मिन् अमृते—अनपायिनि समीचीने सीद—उपविश। तत्रैव च प्रतितिष्ठ—स्थिरो भव इति। अत्र च—'तस्मिन्' इति तच्छब्देन प्रस्तुतप्रत्यवमर्शनात्, यत्पदसमभिव्याहारेण विभज्यमानसाकाङ्क्षात्वात् एकमिदं वाक्यम्। तथा च मन्त्रद्वैताभावात् सर्वोऽप्ययं मन्त्रः स्थानकरणस्याङ्गम्। तत्र च विनियोजिका श्रुतिः कल्पनीया—'सर्वेणानेन मन्त्रेण स्थानं कर्तव्यम्' इति। एवं 'सर्वेण पुरोडाशः स्थापनीयः'

इत्यपि श्रुतिः। स्थानक्रियाङ्गत्ववत् प्रतिष्ठापनक्रियाङ्गत्वस्यापि तद्वाक्यबोधित्वात्। एवं च सदनसादनयोः अस्य मन्त्रस्य विकल्पः समुच्चयो वा स्यात् इति पूर्वः पक्षः। सिद्धान्तस्तु—न पदमात्रसमुदायः वाक्यम्। अपि तु यावन्ति पदानि प्रधानमेकमर्थं बोधयितुं समर्थानि, विभागे साकाङ्क्षाणि च, तावतां समुदायः। मन्त्रेषु च अनुष्ठेयोऽर्थः प्रकाश्यमानः प्रधानम्। अत्र च मन्त्रे सदनकरणं पुरोडाशासादनं चेति द्वे अपि अनुष्ठेयतया प्रधाने। तयोश्च कल्पयाम्यन्तो मन्त्रः सदनकरणे समर्थः। तस्मिन्नत्यादिस्तु पुरोडाशासादने। तथा च उत्तरार्धस्य पुरोडाशासदने प्रथमार्धस्य सदनकरणे च शक्तिं कल्पयित्वा नैकवाक्यता, न वा कृत्स्नः सदनसादनयोः विनियोक्तुं शक्यते इति, यावदेकवाक्यतां कल्पयित्वा सामर्थ्यमुन्नीयते तावत् प्रत्यक्षसिद्धं सामर्थ्यं, एकैकविनियोजिकां 'सदनं कर्तव्यम्, सादनं कर्तव्यम्' इत्याकारिकां श्रुतिं कल्पयति, यावच्च वाक्यकल्पितं पदार्थसामर्थ्यरूपं लिङ्गं श्रुतिं कल्पयति, तावत् प्रत्यक्षसिद्धसामर्थ्यकल्पिता श्रुतिः विनियोगं गृह्णातीति।

प्रकरणात् वाक्यं बलात्। तथाहि—ज्योतिष्टोमप्रकरणे श्रूयते—"द्वादशोपसदोऽहीनस्य।" इति। अत्र 'उपसत्' पदं स्तुतिवाचकम्। 'अह्नः खः क्रतौ।' इत्यनुशासनात् 'अहीन'पदं यागविशेषवाचकम्। एवं च—प्रकरणात् ज्योतिष्टोमे एव द्वादशोपसदन्वयः, न तु अहीनयागे इति पूर्वः पक्षः। सिद्धान्तस्तु—प्रकरणस्य वाक्यघटित्वात्, यावत् प्रकरणेन एकवाक्यता कल्पनीया, तावत् प्रत्यक्षसिद्धेन वाक्येन लिङ्गं कल्पनीयम्। यावच्च कल्पितवाक्येन लिङ्गं कल्पनीयं, तावत् प्रत्यक्षवाक्यकल्पितलिङ्गेन श्रुतिकल्पनम्। यावच्च कल्पितवाक्योपस्थापितलिङ्गेन श्रुति-कल्पनं, तावत्, प्रत्यक्षवाक्यकल्पितलिङ्गोन्नीतश्रुतिः विनियोगं गृह्णातीति, अहीनयाग एव द्वादशोपसदन्वयः, न ज्योतिष्टोमे इति।

प्रकरणं स्थानात् बलवत्। तथाहि—नानेष्टिपशुसोमसमुदायः राजसूयः। तत्र यास्विष्टिषु सोमयागाः बहवः प्रधानभूताः, तत्र अभिषेचनीयाख्यः कश्चित् सोमयागः। तस्य सन्निधौ देवतादयः श्रूयन्ते—"अक्षैर्दीव्यति। राजन्यं जिनाति। शौनश्शेफमाख्यापयति" इति। जिनाति—जयति। बह्वृचब्राह्मणे कथिते शुनःशेफविषयं उपाख्यानं शौनश्शेफम्। तदपि बह्वृचब्राह्मणे पठ्यते—यथा—"शुनःशेफः किल ऋषिपुत्रः हरिश्चन्द्र पुत्रेण पुरुषमेधे पशुत्वेन क्रीतः। स च वरुणाय स्वस्यालम्भे कर्तुमारब्धे वरुणं तुष्टाव। स च तुष्टः एवं ररक्ष।" इति। तत्र सन्निधिबलात् देवनादयः अभिषेचनीयाङ्गम् इति पूर्वः पक्षः। सिद्धान्तस्तु—राजसूयस्य कथंभावाकाङ्क्षायां अनुवृत्तायां देवनादयः प्रकरणेन राजसूयशेषाः प्रतीयन्ते। राजसूयश्च बहुयागात्मकः इति तत्रत्यसर्वयागाङ्गत्वं देवनादीनाम्। तदुक्तम्—

**"अविच्छिन्ने कथंभावे यत् प्रधानस्य पठ्यते।**
**अविज्ञातफलं कर्म तस्य प्रकरणाङ्गता॥"**

इति। कथंभावे—कथं भावना निष्पद्यते इत्यपेक्षायाम्। इतिकर्तव्यताकाङ्क्षायामिति यावत्। यद्यपि आकाङ्क्षावत् सन्निधिरपि अपेक्षणीयः। तथापि हवित्रनामकयागमारभ्य क्षत्रधृतिपर्यन्तप्रकरणिनः राजसूयस्य सदा बुद्धिस्थत्वात् बौद्धेन सन्निधिना नित्यसंनिकृष्टतया तत्संनिधिः अकल्पनीयः। तथाच—राजसूयाकाङ्क्षारूपं महाप्रकरणं क्रमत्वादेव आकाङ्क्षया संनिकृष्यते। तथाच—यावदभिषेचनीयसंनिधिपाठेन आकाङ्क्षा उत्थाप्या, तावत् सिद्धाकाङ्क्षेण राजसूयेन एकवाक्यता कल्प्यते। यावच्च अभिषेचनीयाकाङ्क्षया तदेकवाक्यता कल्प्यते,

तावत् क्लृप्तया रासूयैकवाक्यतया तदुपकारकत्वेन लिङ्गं कल्प्यते। यावत् क्लृप्तवाक्येन लिङ्गं कल्प्यते, तावत् क्लृप्तलिङ्गं विनियोजिकां श्रुतिं कल्पयति। यावद्वाक्यकल्पितलिङ्गेन श्रुतिः अभिषेचनीये कल्प्यते, तावत् क्लृप्तया श्रुत्या विनियोगपरिग्रहः इति।

स्थानं समाख्यातो बलवत्। यथा—याज्ञिकैः पौरोडाशिकाभिधायकमन्त्रबाहुल्यात् पौरोडाशिकमिति समाख्याते काण्डे आग्नेयादीनां कर्मणां मन्त्राः क्रमेण समाम्नाताः। तत्र आमावास्यिकसांनाय्यसंनिधौ "शुन्धध्वं दैव्याय कर्मणे" इति शुन्धनार्थो मन्त्रः समाम्नातः। पुरोडाशशब्देन पुरोडाशसम्बन्धीन्युच्यन्ते। तान्यधिकृत्य प्रवृत्तं काण्डं पौरोडाशिकम्। तत्र यावत् संनिधिना प्रकरणाद्यनुमानपरम्परया सानाय्यपात्रसंबन्धः मन्त्रस्य प्रतिपादनीयः, तावत् समाख्यया पुरोडाशपात्रसम्बन्धः प्रतीपाद्यते। एवं च तत्काण्डोक्तानां उलूखलमुसलजुह्वादीनामपि शोधने मन्त्रोऽयं अङ्गं भवति, समाख्याबलात् इति पूर्वः पक्षः। सिद्धान्तस्तु—-समाख्यया सामान्यतः सम्बन्धावगमः, शेषशेषिरूपेण तदनभिधानात्। एवं च—पुरोडाशपात्राणां सन्निधिः न प्रत्यक्षसिद्धः। किन्तु पौरोडाशिकविशिष्ट-त्वान्यानुपपत्त्या। अन्यथा तत्प्रतिपादककाण्डस्य पौरोडाशिकमिति समाख्यां न स्यात्। तस्मात् काण्डसमाख्यया संनिधिः। तेन च आकाङ्क्षारूपं कृत्स्नं पात्रप्रकरणम्, तद्द्वारा वाक्यलिङ्गश्रुतीनां कल्पनम्। सांनाय्यपात्राणां तु संनिधिः प्रत्यक्षसिद्धः। तथाहि—बर्हिस्सम्पादनस्य मुष्टिनिर्वापस्य च अन्तराले सांनाय्यपात्राणां देशः उक्तः। मन्त्रस्तु तदुभयविषयः मन्त्रार्थानुवादकयोर्मध्यः मध्यमेऽनुवाऽके पठ्यते। तत्र प्रत्यक्षसंनिधिना प्रकरणादीनां चतुर्णामेव कल्पनात् सांनाय्यपात्राणामेव शुन्धने मन्त्रान्वयः न सर्वपात्राणामिति। अत्र वाक्योदाहरणं प्राभाकरो-क्तम्। शेषाणि भट्टोक्तानि लिखितानीति ध्येयम्।

एवं च पूर्वोक्तः इषुदृष्टान्तः अनुपपन्नः वैषम्यात्। तत्र हि वेगव्यापारस्य स्वरूपसत एव जनकतया दीर्घदीर्घतरत्वं सम्भवति। अभिधायास्तु तथा न संभवति। अस्याः ज्ञाताया एवानुकूलत्वात् व्यङ्ग्यनिष्ठतया विज्ञानात्। एवं च अन्विताभिधानवादेऽपि 'निःशेषेत्यादौ निषेधस्य वाच्यत्वे विधेः व्यङ्ग्यत्वमेवेति स्थितम्।

**विस्तारिका**

दीर्घदीर्घाभिधानं दूषयति—यदि चेत्यादि। हर्षशोकादीनां मुखप्रसादाप्रसादानुमितानां कन्याया अनू-ढाया गर्भाच्छोकः। अनन्यलभ्येष्वेव वृत्तिरित्याह—कस्माच्चेत्यादि। लक्षणीये मुख्यार्थबाधात् प्रतीयमाने। नन्वेवं लक्ष्यार्थस्यापि मुख्यार्थतायां मुख्यार्थबाधज्ञानं न सम्भवतीत्याह—किमिति चेत्यादि। यदाह जैमिनिः— "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्" इति।

समवायो विप्रतिषेधः, विप्रकर्षो विलम्बादुपस्थितिः। शब्दश्रुत्यनन्तरं प्रतीयमानानां सर्वेषामर्थानामभि-धेयत्वेनोपस्थितौ विलम्बाभावाद् विप्रकर्षविरहेण पूर्वपूर्वस्य बाधकत्वमुत्तरोत्तरस्य बाध्यत्वमिति व्यवस्था न स्यादित्यर्थः। किमिति पूर्वपूर्वबलीयस्त्वमित्यन्वयः।

**अभिधातुं पदेऽन्यस्मिन्ननपेक्षो रवः श्रुतिः।**
**सर्वत्रावगता शक्तिर्लिङ्गमित्यभिधीयते॥**

**संहत्यार्थं ब्रुवद्वृन्दं पदानां वाक्यमुच्यते।**
**प्रधानवाक्यस्याङ्गोक्त्याकाङ्क्षा प्रकरणं मतम्॥**

**स्थानं समानदेशत्वं समाख्या यौगिको रवः॥**

अभिधातुमित्यादि। अभिधातुं प्रकृत्यर्थेन सह स्वार्थान्वयमनुभावयितुम्, पदान्तरविषयाकाङ्क्षाशून्यो रवः शब्दः। अत एव श्रवणमात्रेणार्थमनुभावयन्ती श्रुतिरुच्यते। ताश्च कारकविभक्त्यः, उपपदविभक्तयस्तु सहार्थतृतीयादयः सहादिसापेक्षा इति न तास्तथा। एतन्मूलकमेवोपपदविभक्तिभ्यः कारकविभक्तिर्बलीयसीति वचनम्। श्रुतिर्यथा—'ब्रीहीनवहन्ति' इत्यत्र द्वितीयाश्रवणमात्रेण व्रीहीणामवहननक्रियायां विनियोगोऽवगम्यते। 'मासं गुडधानाः' 'क्रोशं कुटिला नदी' इत्यत्र द्वितीया न, श्रुतिरन्तर्भूतक्रियासापेक्षत्वात्। सर्वत्रेति शक्तिः क्षमता। यथा दाहे वह्नेर्योग्यता लिङ्गमित्यर्थः। उदाहरणं यथा—'बर्हिदेवसहनं 'दामि' इति। दामीति 'दा प्लवने' इत्यस्य रूपे योग्यताबलाद् बर्हिश्छेदे अस्य मन्त्रस्य विनियोगः। संहत्येति। संहत्य विशेषणविशेष्य भावेन; तेनाकाङ्क्षादिपरिग्रहः। यथा—'श्वेतं छागलमालभेत' इत्यत्राश्वेतंस्य छागस्य प्रत्येकमालम्भनक्रियान्वयित्वेऽप्याकाङ्क्षादिमहिम्ना श्वेतस्य छागावच्छेदकता। प्रधानेत्यादि। यथा 'दध्ना जुहोति'इत्यत्र दधियागस्य दर्शपौर्णमासाङ्गतावगमाद् 'दर्शपौर्णमासाभ्यां यजेत' इत्यस्य प्रधानवाक्यस्य कथमित्याकाङ्क्षायां तदभिधानात्। स्थानमिति। समानदेशत्वे यो यद्देशस्तद्देशे तस्य विनियोगः। तच्च द्विविधम्—सन्निकर्षः क्रमश्च। यथा 'हव्यकव्ये स्वाहा स्वधा'। इत्यत्र हव्ये स्वाहेत्यस्य, कव्ये स्वधेत्यस्य विनियोगः, तुल्यक्रमत्वात्। समाख्येति। योगेनावयवशक्त्यार्थं प्रत्याययतीति यौगिको रवः शब्दः। यथा 'हौत्रमौद्गात्रमाध्वर्यवम्' इति। होतुरिदमित्यादियोगबलेन हवनं होतरि, गानमुद्गातरि विनियुज्यते।

न चेदं लिङ्गम्, गानेऽपि होतुः क्षमत्वात्। तत्र श्रुतिलिङ्गविरोधो यथा "ऐन्द्र्या गार्हपत्यमुपतिष्ठते" इत्यत्र ऐन्द्र्या ऋचा गार्हपत्यमग्निविशेषमुपतिष्ठते, आराधयति। उपान्मन्त्रकरणे इत्यात्मनेपदम्। अत्र द्वितीयाश्रुतिश्रवणमात्रेण स्वप्रकृत्यार्थस्याराधनक्रियायां विनियोजनात्। सकर्मकक्रियाकर्मणोराकाङ्क्षाया औत्सर्गिकत्वात्। ऐन्द्र्येत्यनेनैन्द्र्या ऋचः करणत्वमवगम्यते। तच्चेन्द्राराधने लिङ्गम्, तत्रैव तस्य योग्यत्वात्। गार्हपत्याराधने त्वसमवेतम्। तथाहि "कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे" इत्यैन्द्री ऋक्।

अस्यार्थः—हे इन्द्र नोऽस्माकं कदाचिदपि न स्तरीरसि, न हिंसकोऽसि, दाशुषे आहुतिं दत्तवते जनाय सश्चसि प्रीणासि, इत्यनेन मन्त्रेण लिङ्गेनेन्द्रस्य प्रकाशनं श्रुत्या च गार्हपत्यस्येति श्रुतिलिङ्गयोर्विरोधः, विवक्षितस्यैन्द्रीकरणकगार्हपत्यकर्मकाराधनस्य शेषशेषिभावेनान्वयस्यानुपपत्तेः।

अत्रोच्यते—नानयोर्विरोधेः, श्रुत्यर्थबाधेनेन्द्रपदस्य परमैश्वर्येण योगेन गार्हपत्यपरतया शेषशेषिभावोपपत्तेः। स्वपरप्रकाशनं दाहवरशापादौ स्वक्रियायां गार्हपत्यस्याप्यैश्वर्यात्। रूढ्यर्थं विहाय योगमात्रानुसरणे लक्षणा स्यादिति चेत्, स्यादेव; बाधकाभावात्। न च लिङ्गानुरोधेन गार्हपत्यपदस्यैवेन्द्रपरता, औत्सर्गिकाकाङ्क्षया सकर्मकक्रियाकर्मणोरन्वये वृत्तेः। तद्गार्हपत्यस्याराधनं कथमित्याकाङ्क्षाया विहितं करणं तद्विरोधाय नालम्, उपजीव्याव्याहतिप्रसङ्गात्। प्रतीतेरबाधाच्चेति। करणस्य योगेन श्रुत्यर्थान्वयानुप्रवेशे लिङ्गत्वम्, न स्वरूपेणेति श्रुत्या लिङ्गस्य बाधः। तया तस्य स्वरूपप्रच्यावनादिति।

अथ लिङ्गानुगुणत्वेन क्लृप्तया 'इन्द्रमुपतिष्ठते' इति श्रुत्या सह शेषशेषिभावेनान्वये कथं बाध्यतेति चेन्न, अर्थविप्रकर्षेण बाध्यताया आवश्यकत्वात्। तथाहि प्रथमतः प्रकृतान्वये ऐन्द्र्या करणत्वे बाध्या प्रतिसन्धानम्, ततस्तदनुगुणश्रुतिकल्पनम्, तत आकाङ्क्षादिज्ञानम्, ततः शेषशेषिभावेनान्वय इति यावदेवं परम्परा भवति, तावन्निखिलासंख्यादिसामग्रीसम्पन्नया प्रत्यक्षकृत्या विवक्षितान्वयोपार्जनमित्यधिकबलया हीनबलस्य बाधनम्। क्लृप्तवेन कल्प्यत्वेन च बलस्याधिकत्वन्यूनत्वे।

एवञ्च कल्पनीयश्रुत्याद्यर्थानां लिङ्गश्रवणानन्तरं प्रतीयमानानां लिङ्गशक्त्यानुमितौ द्राक् प्रतीतेर्विप्रकर्षे-विरहेण बाध्यता न स्यात्, शक्य प्रतीतौ विलम्बविरहादिति प्रकृतसङ्गतिः सर्वत्रोहनीया।

लिङ्गवाक्ययोर्विरोधो यथा—"स्योनन्ते सदनं कृणोमि घृतस्य धारया सुषेवम्" सुखेन सेव्यं सम्पादयामि, तस्मिन् सीदामृते प्रतिष्ठेति मन्त्रे पुरोडाशं सम्बोध्येयमुक्तिः।

हे पुरोडाश ! स्योनं समीचीनं सदनं स्थानं कृणोमि, करोमि। तदेव सदनं घृतस्य धारया स्निग्धत्वेन सुखेन सेव्यं सम्पादयामि। तस्मिन् सदने सीद तिष्ठ। अमृते प्रतितिष्ठ, अमृतीभवेत्यर्थः।

'स्योनन्ते सदनम्' इत्यादिमन्त्रे लिङ्गेन कल्पयाम्यन्तरभागस्य सदनकरणे प्रतितिष्ठेदिति विभज्य विनि-योजकं वाक्यमिति लिङ्गवाक्ययोर्विरोधः।

अत्रायं विचारः—अखण्डवाक्यस्य खण्डार्थे विनियोगे योग्यताज्ञानगावश्यं वाच्यम्, शाब्दबोधे तस्य तन्त्रत्वात्। विद्यमानस्य तस्याभावात् कल्पनीयत्वम्। एवं च योग्यताकल्पनेनैवाखण्डस्य विनियोगे विप्रकर्षः कल्पकावतारविलम्बात्। ततश्च यावद् योग्यताज्ञानान्तरमवतारयति, तावद्विद्यमानं लिङ्गद्वयमबाधितार्थद्वये भाग-द्वयं विनियोजयतीति लिङ्गेनाविप्रकृष्टेन विप्रकृष्टं वाक्यं बाध्यत इति।

वाक्यप्रकरणयोर्विरोधो यथा—दर्शपौर्णमासयागे दर्शयागप्रकरणे श्रूयते "अग्नीषोमाविदं हविरजुषे-ताम्, अवीवृधेताम्, महो ज्यायोऽक्राताम्" इति मन्त्रः। "पौर्णमासे च इन्द्राग्नी इदं हविरजुषेतामविवृधेताम्" इत्यादिमन्त्रः। अत्रेन्द्राग्नी अमावास्यायां देवते अग्नीषोमौ पौर्णमास्यामिति वस्तुस्थितिर्यथाक्रमं पुनरसमवेतार्थ-कतयापरमन्त्रः। पूर्वं पूर्वमन्त्रश्च परत्र प्रयुज्यते। तत्र प्रकरणमसमवेतार्थकत्वभयेन अग्नीषोमाविति इन्द्राग्नी इति च देवतापदभागमेव त्यजति, नापरं भागम्, तस्य समवेतार्थकत्वात्। वाक्यन्तु यथास्थानादाकृष्यमाणं न कञ्चनाप्यंशं जहाति, विशेषणविशेष्यभावेनैकतामापन्नस्य तस्यांशभेदाभावादिति वाक्यप्रकरणयोर्विरोधः।

अत्रेयं व्यवस्था—झटिति प्रवृत्तेन वाक्येन विप्रकृष्टं प्रकरणं बाध्यते। तथाहि नह्येतावतो वाक्यादवतरति प्रकरणम्, अपि तु वाक्यान्तराणामनुसन्धानादिति तेषामनुसन्धानम्। ततस्तदर्थावगमः। ततः प्रकरणावतार इति विप्रकर्षपरम्परातः प्रागेवोपस्थितानामखण्डवाक्यानामाकाङ्क्षादिमहिम्नैकत्वं जायत इति। परतश्चावतीर्णं प्रकर-णमकिञ्चित्करं जातत्वात् तस्य, तदुक्तम्—

विरोधिनोस्तदेको हि फलं न लभते तयोः।
प्रथमेन गृहीतेऽस्मिन् पश्चिमे वेतरन्मुधा॥ इति।

न वा योग्यताज्ञानात् कथमेकत्वं वाक्यानामिति वाच्यम्, प्रकरणवतारेणैव तदवतारात्। प्रकरणस्य विलम्बितत्वमित्युक्तत्वादिति।

प्रकरणस्थानयोर्विरोधो यथा—राजसूययागे पुनरिष्टिपशुसोमयागाः प्रधानभूताः फलवन्तो विधीयन्ते। तदन्तःपातिनोऽभिषेचनीयाख्यस्य सोमयागस्य सन्निधावक्षैर्दीव्यति, राजन्यं जिनाति, शौनःशेपमाख्यापयतीति श्रूयते। जिनाति जयति। शुनःशेपस्येदमाख्यानं शौनःशेपम्, तञ्च शुनःशेफनामा कश्चिदृषिपुत्रो हरिश्चन्द्रपुत्रेण पुरुषमेधार्थं पशुत्वेन क्रीतः। स च वरुणाय स्वस्यालम्भने क्रियमाणे वरुणं तुष्टाव।स चैनं ररक्षेति। तच्च देवनादित्रयमिष्टिपशुसोमयागानां सर्वेषामङ्गम्। एतत्त्रितयानतिरिक्तस्य राजसूयस्य कथंभावाकाङ्क्षायामभिधानात्। तच्च नोपपद्यते, समानदेशत्वेन सान्निध्येनाभिषेचनीयस्यैवाङ्गतावगतेः। उच्यते—सन्निधिपाठेन तदङ्गता स्यात्, 'कुतोऽन्येषामसङ्गतत्वम्? तत् सन्निधावपाठादित्यनुमानादिति चेत्, यावदनुमितिसामग्री व्याप्त्यादिज्ञानं नावतरति, तावदेव राजसूयात्मकत्वेन प्रकृतानां सर्वेषां विद्यमानप्रकरणबलाद् देवनादिष्वङ्गतावगमः। सर्वेषामेव बुद्धौ सान्निध्याद् बुद्धिसन्निधेरेव प्रकरणत्वादित्यविप्रकृष्टेन प्रकरणेन विप्रकृष्टः क्रमो बाध्यत इति।

क्रमसमाख्ययोर्विरोधो यथा—"शुन्धध्वं देव्याय कर्मणे" इति मन्त्रे 'शुन्ध शुद्धौ' देव्याय देवसम्बन्धिने। अस्य मन्त्रस्य लिङ्गेन पात्राणां शोधने विनियोगः। तानि तु पुरोडाशानामामावासिकसान्नाय्यानां वा तत्र स्वनिकटपाठेन हविःपात्राणि समाकर्षन्ति, समाख्याबलेन पुरोडाशपात्राणि। सा च ततश्चाप्यनुपौरोडाशिकमित्युपक्रम्य तत्काण्डे तन्मत्रस्य पाठात् पौरोडाशिकपदप्रयोगविषयत्वात्। पुरोडाशस्यैतानि पात्राणि पौरोडाशानि, तान्यधिकृत्य प्रवृत्तं काण्डं पौरोडाशिकं मन्त्रजातम्। तत्र यदि हविःपात्रशोधनाङ्गता स्यात्, तदा पौरोडाशिकपदेनाभिधानवैकल्यं स्यादिति क्रमसमाख्ययोर्विरोध उच्यते। हविःपात्रशोधनं केन मन्त्रेण इत्याकाङ्क्षया सन्निधौ प्राप्योऽयं मन्त्रस्तत्र विनियुज्यते। तदितरेषु मन्त्रेषु पर्यवसिता समाख्या क्रमप्रत्यायितं तदङ्गत्वं न बाधितुमीष्टे। न च पौरोडाशपात्रशोधनेऽप्येवमाकाङ्क्षा स्यात्, मन्त्रान्तरैः परिपूरणात्। ततश्चाभयपौराडाशिकमित्यधिकारमन्त्रान्तराणां च प्रतिसन्धानाद् यावत् समाख्याऽवतरति, तावदतीर्णः क्रमो विनियोजयतीति क्रमेण समाख्याया विषयसङ्कोचनाया बाधनम्।

नन्वधिकृतार्थस्य बुद्ध्यवच्छेदे कथं विप्रकर्षे इति चेन्न, सान्नाय्यपात्रशोधनाभिधानेन व्यवधानाभावात्। न तर्हि मन्त्रे व्यवधानात् समाख्यापीति चेत् न; प्रकरणपरिपठितानां सर्वेषामेव मन्त्रणाम् काण्डत्वेन तत्प्रसक्तेर्व्यवधानस्याकिञ्चित्करत्वात्। तेन श्रुतेः सर्वस्य बाधकत्वं समाख्यायाश्च बाध्यत्वम्। तदुक्तम्—

**बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा।**
**मध्यमानां तु बाध्यत्वं बाधकत्वं व्यपेक्षया॥ इति।**

उपसंहरतीत्यन्वितेत्यादि। एकदेशिमतोपसंहारोऽयम्, मतान्तरं तु प्रागुपसंहृतम्। ननु 'निःशेष' इत्यादौ तदन्तिकमेव रन्तुं गतासीत्यर्थः प्रतीयते स, चान्वयरूपोऽप्राप्तया विधेयत्वेन तात्पर्यविषय इति। तत्राभिधैवास्तु, किं वृत्त्यन्तरेण? न चान्वयबोधाद् वाक्यस्य विरतिर्विवक्षितवाक्यार्थबोधाजननात्।

## सारबोधिनी

कन्या कुमारी अनूढा, तस्या गर्भाच्छोकः । हर्षशोकादीनां मुखप्रसादाप्रसादानुमितत्वेन । नन्वलभ्येष्वेव वृत्तिरिति न तेषु परिवृत्तिरित्यतो दोषान्तरमाह कस्माच्चेति । लक्षणीये मुख्यार्थबाधात् प्रतीयमाने । नन्वेवं लक्ष्यार्थस्य मुख्यार्थतायां मुख्यार्थबाधज्ञानं न सम्भवतीति अस्वरसादाह किमिति चेति । यदाह जैमिनिः—श्रुति-लिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति । विप्रकर्षो विलम्बेनोपस्थितिः । श्रुत्य-नन्तरं प्रतीयमानानां सर्वेषामेवार्थानामभिधीयत्वेनोपस्थितेर्विलम्बभावात् विप्रकर्षविरहेण पूर्वपूर्वस्य बाधकत्वं उत्तरोत्तरस्य बाध्यत्वमिति व्यवस्था न स्यादित्यर्थः । तदुक्तम्—

**बाधिकैव श्रुतिर्नित्यं समाख्यां बाध्यते सदा ।**
**मध्यमानां तु बाध्यत्वं बाधकत्वं व्यवस्थया ।। इति**

—किमिति च पूर्वपूर्वबलीयस्त्वमित्यन्वयः ।

**अभिधातुं पदेऽन्यस्मिन्ननपेक्षो रवः श्रुतिः ।**
**सर्वत्रावगता शक्तिर्लिङ्गमित्यभिधीयते ।।**

**संहत्यार्थाभिधायित्वं पदानां वाक्यमुच्यते ।**
**प्रधानवाक्यस्याङ्गोक्त्याकाङ्क्षा प्रकरणं मतम् ।।**

**स्थानं समानदेशत्वं समाख्या यौगिको रवः ।**
**श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि ।**
**सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या ।।**

यथा ब्रीहीनवहन्तीत्यत्र द्वितीयाश्रवणमात्रेणावहननक्रियायां विनियोगोऽवगम्यते । क्षमता यथा दाहे वह्नेर्योग्यता । उदाहरणम्—बर्हिर्देवसदन दामीति । दाप् लवने इत्यस्य रूपम् । योग्यतावशात् बर्हिश्छेदनेऽस्य मन्त्रस्य विनियोगः । संहत्येति विशेष्यविशेषणभावं प्राप्येत्यर्थः । तेनाकाङ्क्षादिपरिग्रहः । यथा श्वेतं छागमाल-भेतेत्यत्र अन्वये श्वेतस्य प्रत्येकमालम्भनक्रियान्वयित्वेऽप्याकाङ्क्षादिमहिम्ना श्वेतस्यछागवच्छेदकता वाक्याद् व्यवस्थाप्यते । प्रधानेत्यादि । यथा दध्ना जुहोतीत्यत्र दधियागस्याग्निहोत्राङ्गतावगमः । अग्निहोत्रं जुहोतीत्यस्य प्रधानवाक्यस्य क्वचिमित्यकाङ्क्षायां तदभिधानात् । स्थानमित्यादि । समानदेशत्वम् यो, यद्देश्यः तद्देशे तस्य विनियोगः । यथा हव्यकव्ये स्वाहा स्वधेत्यत्र हव्ये स्वाहा कव्ये स्वधेत्यस्य विनियोगः तुल्यक्रमत्वात् । समाख्येति । योगेनावयवशक्त्याऽर्थं प्रत्यायतीति यौगिको रवः शब्दः । हौत्रमौद्गात्रमाध्वर्यवमिति । होतुरिदमित्यादि योगब-लेन हवनं होतरि गानमुद्गातरि विनियुज्यते । न चेदं लिङ्गम्, गानेऽपि होतुः क्षमत्वात् । अत्र पारदौर्बल्योदाहरणानि अप्रकृत्वाद् गौरवभयाच्च न लिखितानि । इत्यन्वितेति एकदेशिमतोपसंहारोऽयम् । मतान्तरं तु प्रागुपसंहृतम् । न तु निःशेषेत्यादौ तदन्तिकमेव रन्तु गताऽसीत्यर्थः प्रतीयते । स चान्वयरूणेऽप्राप्ततया विधेयत्वेन तात्पर्यविषय इति तत्राभिधैवास्तु किं वृत्यन्तरेण । न चान्वयबोधाद् वाक्यस्य विरतिः विवक्षितवाक्यार्थबोधाजननात् । अन्यथा जनितखण्डवाक्यार्थबोधस्य महावाक्यार्थबोधकत्वं न स्यात् ।

काव्यप्रदीपः

यद्यपि 'सोऽयमिषोरिव—' इति तदप्ययुक्तम्। यतः शब्दश्रवणानतरं यावानर्थः प्रतीयते तावति सर्वत्र यदि शब्दस्याभिधैव स्यात्तदा 'चैत्र, पुत्रस्ते जातः, कुमारी ते गर्भिणी' इत्यादिवाक्यानन्तरं हर्षविषादयोः प्रतीतेस्तयोरपि तद्वाक्यस्याभिधा स्यात्। अथ तच्छब्दप्रतिपाद्ये सर्वत्राभिधा हर्षादयस्तु न तत्रत्याप्या इत्युच्यते तर्हि लक्षणीयेऽप्यभिधैव स्यादिति लक्षणोच्छेदः। किमिति च 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समावये परदौर्बल्यमर्थविप्रकर्षात्' इति सूत्रेण भगवाञ्जैमिनिः श्रुत्यादिषु पूर्वबलीयस्त्वं प्रतिपादयांबभूव। सर्वत्रैवाभिधात्रसङ्गे उत्तरस्य दौर्बल्ये बीजाभावात्। सूत्रं तु प्रकृतार्थविच्छेदकत्वेऽपि बहूपकारकत्वाद्दुरूहत्वाच्च व्याक्रियते—श्रुतिलिङ्गादयः षडिह विनियोजकाः। तत्र विरुद्धयोरेकत्रोपनिपाते समुच्चयो न संभवतीत्येकेनापरस्य बाधो वक्तव्यः। स च बलवता दुर्बलस्येति स्थिते दौर्बल्यप्रतिपादकं सूत्रं श्रुतिलिङ्गेत्यादि। अस्यार्थः—श्रुत्यादीनां समवाये एकत्रोपनिपाते तेषां मध्ये यदपेक्षया यत्परं तदपेक्षया तद्दुर्बलम्। कुतः, अर्थविप्रकर्षात्पूर्वापेक्षया विलम्बेनार्थप्रत्यायकत्वात्। यथा चैतत्तथोदाहरणे स्फुटीकरिष्यते। तत्र निरपेक्षो रवः श्रुतिः। यथा—'व्रीहीनवहन्ति' इति। अत्र क्रियाफलभागित्वं कर्मत्वं बोधयन्ती द्वितीया निरपेक्षैव व्रीहीणामवघातशेषित्वं प्रतिपादयति। अर्थविशेषप्रकाशनसामर्थ्यं लिङ्गम्। यथा—'बर्हिर्देवसदनं दामि' इति। अत्र लवनार्थः प्रकाशकतया बर्हिर्लवने विनियोगः। परस्पराकाङ्क्षावशात्क्वचिदेकस्मिन्नर्थे पर्यवसितानि पदानि वाक्यम्। यथा—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इत्यत्र लिङ्गेन निर्वापे विनियुज्यमानस्य समवेतार्थभागस्यैकवाक्यताबलेन 'देवस्य त्वा' इत्यादि भागस्यापि तत्र विनियोगः। लब्धवाक्यभावानां पदानां कार्यान्तरापेक्षावशाद्वाक्यान्तरेण संबन्ध आकाङ्क्षापर्यवसन्नं प्रकरणम्। यथा—'समिधो यजति' इत्यादौ। अस्य हि दर्शपौर्णमासकथंभावाकाङ्क्षायां पाठवशाच्छेषत्वम्। स्थानं क्रमः। स चानेकस्याम्नातस्य संनिधिविशेषाम्नानम्। यथा—'दब्धिरसि' इत्यत्राग्नेयाग्नीषोमीयोपांशुयागाः क्रमेण ब्राह्मणेषु पठिताः। मन्त्रभागेऽपि क्रमेणानुमन्त्रणत्रयं पठितम्। तत्राग्नेयाग्नीषोमयोर्लिङ्गेनैव द्वयोर्विनियोगसिद्धिः। 'दब्धिरसि' इत्यत्र तु न लिङ्गादि विनियोजकम्। किं तु यस्मिन्प्रदेशे ब्राह्मणे उपांशुयागविधानं तस्मिन्नेव प्रदेशे मन्त्रेऽप्यस्य पाठ इति क्रमादुपांशुयागानुमन्त्रणेऽस्य विनियोगः। समाख्या योगबलम्। यथा—हौत्रमौद्गात्रमित्यादि। तत्र हि होतुरिदं हौत्रमित्यादियोगबलेन हौत्रादिसमाख्यातानि कर्माणि होत्रादिभिरनुष्ठेयानि। अथैषां विरोधोदाहरणानि—तत्र श्रुतिलिङ्गयोर्विरोधे लिङ्गस्य दुर्बलत्वं यथा—'कदा चन स्तरीरसि नेन्द्र सश्चसि' इत्यादिकाया ऋचो विनियोजिका श्रुतिः 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति। अत्र चेन्द्रप्रकाशनसामर्थ्यरूपालिङ्गादिन्द्रोपस्थापने विनियोगः प्रतिभाति। अन्यप्रकाशस्यान्यत्र विनियोगायोगात् श्रुत्या गार्हपत्योपस्थापने स प्रतीयते। गार्हपत्यमिति द्वितीया हि कर्मविभक्तिकतया कामपि क्रियामपेक्ष्य प्रकृत्यर्थस्य शेषित्वं बोधयति। क्रियाजन्येष्टफलभागित्वस्य तदर्थत्वात्। एवमैन्द्र्येति तृतीया प्रकृत्यर्थस्य शेषत्वम्। क्रियां प्रति साधकतमत्वरूपकरणत्वस्य तदर्थत्वात्। तदत्र श्रुतिलिङ्गयोर्विरोधः। न च वाच्यं निरपेक्षया द्वितीयया शेषित्वमात्रं प्रतीयते न त्वैन्द्रीमृचं प्रति। तच्चाग्नेयीमृचं प्रत्यपि संभवतीति कुतो विरोधः। ऐन्द्र्येति पदमपेक्ष्य विशेषजीवनाद्विरोध इति चेत्, न तर्हि श्रुतेर्विरोधः किं तु वाक्यस्य। तच्च लिङ्गापेक्षया दुर्बलमेवेति। यतः शेषशेषिभावः सामान्यतः श्रुत्यैवावगम्यते। पदान्तरप्रक्षेपात्तु विशेषे व्यवस्थाप्यते विशेषसंबन्धमात्रस्य पदान्तरसंबन्धात्प्रतीतेः। तस्माच्छ्रुत्या सामान्यतः प्रतिपाद्योऽसौ वाक्यलभ्यं विशेषमपेक्ष्य लिङ्गप्रतिपा-

द्येन विरुध्यते । तत्रायं पूर्वपक्षः—सामर्थ्यज्ञानमपेक्ष्य श्रुतिर्विनियोजिका । नह्यसमर्थे श्रुतिसहस्रेणापि विनियोक्तुं शक्यते । यथा वह्निः प्रसेके । जलं वा दाहे । अतो लिङ्गस्य बलवत्त्वादिन्द्रस्योपस्थानेऽस्या विनियोगः । तदनुरोधितया द्वितीया सप्तम्यर्थतया व्याख्येया । गार्हपत्यसमीपेऽनया इन्द्र उपस्थातत्त्च इत्यर्थः पर्यवस्यति ।

सिद्धान्तस्तु—श्रुतिः स्वरूपसत्सामर्थ्यमपेक्षते न तु तद्बोधमपि येन लिङ्गं बलवद्भवेत् । तस्य च पूर्व सत एव ज्ञानं विनियोगान्यथानुपपत्त्या पश्चादुपजायते । लिङ्गं तु विनियोजने श्रुतिमपेक्षते । न ह्यनेनेन्द्र उपस्थातव्य इति लिङ्गात्स्वरसतः प्रतीयते । किं त्वीदृगिन्द्र इत्येतावन्मात्रम् । तथा च प्रकरणाम्नानसामर्थ्यादिन्द्रप्रकाशनसमर्थाया ऋचोऽन्यथानुपपत्त्या विनियोगः कल्पनीयः । तथा चार्थविप्रकर्षः । तथाहि—श्रुतार्थापत्तिसाधकन्यायेन शब्दोपस्थापितेनैव शाब्दी आकाङ्क्षा पूर्यत इति लिङ्गेनानया इन्द्र उपस्थातवय इति श्रुतिः कल्पनीया । ततस्तया विनियोगो भवेत् । ततो यावल्लिङ्गं श्रुतिकल्पनायै प्रक्रान्तव्यापारं तावत्प्रत्यक्षया श्रुत्या गार्हपत्ये विनियोगः सिद्ध एवेति प्रकरणे निराकाङ्क्षे कयानुपपत्त्या श्रुतिः कल्पनीया । तस्माच्छ्रुतेर्बलवत्त्वात्तदनुगुणताय सामर्थ्ये नीयमाने इन्द्रपदं परमैश्वर्यवाचकतया गार्हपत्यतात्पर्यकमित्यवधार्यते । लिङ्गवाक्ययोर्यथा पुरोडाशस्य स्थानकरणस्थापनस्वरूपयोः सदनसादनयोः प्रकरणे 'स्योनं ते सदनं करोमि घृतस्य धारया सुशेवं कल्पयामि तस्मिन्सीदामृते प्रतितिष्ठ ब्रीहीणां भेदः सुमनस्यमानः' इति मन्त्रः पठितः । तत्र कल्पयामीत्यन्तः पूर्वभागः सदने, शेषभागस्तु सादने प्रयोक्तव्य इति लिङ्गात्प्रतिभाति । अयं मन्त्र एकं वाक्यम् । यत्पदाक्षेपेण यत्कल्पयामि तस्मिन्सीदेत्येकार्थावच्छिन्नत्वाद्विभागे साकाङ्क्षात्वाच्च । ततश्चैकवाक्यत्वात्समस्त एवोभयत्र विनियोक्तव्यः 'देवस्य त्वा'—इत्यादिवत् । इति वाक्यादवगम्यते । तदनयोर्विरोधः । अत्र पूर्वपक्षः—अस्यैकवाक्यत्वे निश्चिते पश्चात्तदुपपत्तयेऽभिधानसामर्थ्यं कल्पनीयम् । यत्कल्पितया श्रुत्या विनियोगो भवेत् । यथा 'देवस्य त्वा'—इत्यादिमन्त्रे 'अग्नये निर्वपामि' इति पदयोः समवेतार्थयोरेकवाक्यतया अतादृशां पदान्तराणां सामर्थ्यकल्पना । तथा चैकवाक्यत्वनिर्वाहाय क्लृप्तं सामर्थ्यं न तद्व्याहन्तुमर्हति । किं तु विनियोजिकां श्रुतिं कल्पयत्समस्तमन्त्रविनियोजिकामेव कल्पयतीति वाक्यस्योपजीव्यत्वेन बलवत्त्वासमस्तस्यैवोभयत्र विनियोग इति । सिद्धान्तस्तु—यद्येकवाक्यतामवगम्यैव सामर्थ्यमवधार्येत तदोपजीव्यत्वाद्वाक्यं बलवद्भवेत् । न त्वेवम् । प्रत्युतावधृतसामर्थ्यानां संनिहितपठितानां पदानां सामर्थ्यवशेन प्रयोजनैकतया चैकवाक्यत्वावधारणम् । यावन्ति पदानि प्रधानमेकमर्थं प्रतिपादयितुं समर्थानि विभागे साकाङ्क्षाणि भवन्ति तावन्त्येकं वाक्यं भवति । अनुष्ठेयश्चार्थो मन्त्रे प्रकाशमानः प्रधानम् । सदनसादने चात्र तथाभूते । तथा च सदनप्रकाशनसमर्थः पूर्वभागः सादनप्रकाशनसमर्थः शेषभाग इति प्रतीताभ्यां तत्सामर्थ्याभ्यां क्लृप्तेन श्रुतिद्वयेन द्रागेव तद्भागयोः प्रत्येकं विनियोगे सिद्धे तावतैव प्रकरणपाठोपपत्तौ समस्तमन्त्रस्यैकवाक्यताबुद्धिरुत्पन्नाप्याभासीभवति । लिङ्गेन बाधात् । तथा क्लृप्तमपि सामर्थ्यं न श्रुत्यन्तरं कल्पयितुमर्हतीत्यर्थविप्रकर्षाद्वाक्यं दुर्बलम् । तस्माद्यत्रावान्तरवाक्यविरोधि लिङ्गं नास्ति तत्र समवेतार्थकेनैकेन पदेन द्वाभ्यां त्रिभिर्वा सहैकवाक्यता पदान्तराणामपि सामर्थ्यं विनियोजकश्रुतिकल्पनानुकूलं कल्पयति । यथात्रैव 'स्योनं ते'इत्यादिभागानाम् । वाक्यप्रकरणयोर्यथा दर्शपौर्णमासप्रकरणे 'इदं द्यावापृथिवी भद्रमभूत्' इत्यादिकः सूक्तवाकनिगदः पठितः । तत्र च 'इन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्रातां अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्' इत्यवान्तरवाक्यद्वयं श्रूयते । तत्र पौर्णमास्यामिन्द्राग्नी न देवते इति लिङ्गात्तत्पदमपनीयते । अमावास्यायां तु समवेतार्थत्वात्तत्प्रयुज्यते । तत्रैवं संदिह्यते—इन्द्राग्निपदैकवाक्यतापन्नानि अवीवृधेतामित्यादिपदानि तत्रापनेयान्यथवा

प्रयोक्तव्यान्येवेति। तत्र प्रकरणात्प्रयोगः प्रतिभाति। असमवेतार्थतया देवतामात्रस्यापनयनात्। वाक्यात्तु तान्यपनेयानीति प्रतीयते। येन सह यदेकवाक्यतापन्नं तेन सहैव तदपनयनौचित्यात्। तदनयोर्विरोधः। तत्र प्रकरणमेवाङ्गसंबन्धप्रतिपादकम्। अतस्तस्य बलवत्त्वाच्छेषभागः प्रयोक्तव्य एवेति पूर्वपक्षे सिद्धान्तः। प्रकरणं विनियोज्यस्वरूपसामर्थ्यमनपेक्ष्य न विनियोजकम्। येनैवं भवेत्। किंतु तदापेक्षमेव।

कथमन्यथा 'पूष्णोऽहं देवयज्यया प्रजया पशुभिश्च जनिषीय' इति पूषानुमन्त्रणमन्त्रं तद्देवताविरहिणोर्दर्शपौर्णमासयोर्न विनियुङ्क्ते। 'तिस्र एवोपसदः साह्नस्य द्वादशाहीनस्य' इत्यत्र चैकाहविधेयसोमयागस्वरूपे साह्ने ज्योतिष्टोमादौ द्वादशोपसत्तां न बोधयति। सा पुनर्बहुदिवसविधेया सोमयागरूपाहीननामक्रतुविशेषं नीयते। 'अह्नः खः क्रतौ इत्यनुशासनात्। स्वरूपालोचनायां तु श्रुत्या लिङ्गेन वाक्येन वा झटिति प्रवृत्तिकेन यद्रूपमपनीयते यद्वान्यत्र नीयते तद्विहायावशिष्टेन प्रकरणाकाङ्क्षाद पूर्यते। यत्र तु विरोधिश्रुत्यादिकं नास्ति तत्र प्रकरणं विनियोजकम्। यथा—'समिधो यजति' इत्यादिबोधितस्य समिधादेः। अत्र तु यथा लिङ्गेनेन्द्रादिभागोऽपनीयते तथा वाक्येन तच्छेषभागोऽपीति क्व पश्चात्प्रवृत्तिकस्य प्रकरणस्यावकाशः। न च तथात्वमस्यासिद्धम्। यतो वाक्ये पदानां संबन्धः प्रत्यक्षसिद्धः। प्रकरणे त्वाकाङ्क्षावशात्कल्पनीयः। तथा च वाक्ये प्रथममेवाभिधानसामर्थ्यं कल्प्यते ततस्तेन श्रुतिस्त्रया विनियोग इति तृतीयः कालो विनियोगस्य। प्रकरणेन तु प्रथमं वाक्ययोः संबन्धः कल्प्यते ततः सामर्थ्यमञ्च श्रुतिरथ विनियोग इति चतुर्थः कालः। ततो वाक्यात्प्रथमं शेषभागस्यापनये सिद्धे क्लृप्तापि श्रुतिरकिंचित्करी। वाक्यविरोधादिति। प्रकरणस्थानयोर्यथा—राजसूयस्य प्रधाननानाकर्मात्मकस्य प्रकरणे प्रधानादभिषेचनीयादनन्तरं शौनःशेफोपाख्यानमाम्नातम्। तत्र किं समस्तराजसूये तदङ्गमाहोस्विदभिषेचनीय मात्र इति संदेहः। तत्र प्रकरणस्व बलवत्त्वात्सर्वाङ्गतावगम्यते। स्थानस्य तु बलवत्त्वेऽभिषेचनीयाङ्गता। तदनयोर्विरोधः। यद्यप्याकाङ्क्षासत्त्वोरुभयोरपितुल्यबलता 'अयमेति पुत्रो राज्ञः' इत्यादौ 'गामानय', 'प्रासादं पश्य' इत्यादावुभयविरहेणान्वयाबोधात्। तथापि विनिगमनाविरहादुभयोस्तुल्यबलवत्त्वाच्च विकल्पेनाङ्गतास्त्विति पूर्वपक्षे सिद्धान्तः। आकाङ्क्षासंनिधी द्वे अपि विनियोग प्रयोजिके इत्युभयसंमतम्। राजसूये च कथं स्यादित्याकाङ्क्षा क्षत्रियस्य धृतिं यावदनुवर्तते। संनिधानं च प्राकरणिकत्वेन सर्वदा बुद्धिसंनिहितत्वादस्त्येव। अभिषेचनीये च सत्यपि संनिधाने आकाङ्क्षा उत्थाप्या। तथा च यदोस्थिताकाङ्क्षेण प्रकरणेवैकवाक्यत्वं कल्पनीयं तदा संनिधानादाकाङ्क्षोत्थापनम्। तथा चैकत्र सामर्थ्यकल्पनं श्रुत्युन्नयनं विनियोगः। अपरत्रैकवाक्यताकल्पनं सामर्थ्योन्नयनं श्रुतिकल्पनं विनियोगश्चेत्यर्थविप्रकर्षात्स्थानस्य दुर्बलत्वात्प्रकरणेन सर्वत्र राजसूये शौनः शेफोपाख्यानस्य विनियोगो न तु विकल्प इति। स्थान समाख्ययोर्यथा—दर्शपौर्णमासप्रकरणे पौरोडाशिकसमाख्याते काण्डे सान्नाय्यक्रमे 'शुन्धध्वं दैव्याय कर्मणे' इति मन्त्रः श्रूयते। स च प्रकरणाद्दर्शायाः। तथात्वं च तस्य समवेतार्थत्वेनौचित्यात्कस्यचिच्छुन्धने विनियोगाद्भवेत्। शुन्ध नीयं चात्र द्वयमुपस्थितम्। सान्नाय्यपात्रं पुरोडाशपात्रं च। तत्र समाख्यावक्षात्पुरोडाशपात्रशुन्धने विनियोगः प्रतिभाति। स्थानवशातु सान्नाय्यपात्राणाम्। तदनयोर्विरोधः। तत्र पूर्वपक्षः—पौरोडाशशब्देन पुरोडाशसंबद्धान्युच्यन्ते। तान्यधिकृत्य प्रवृत्तं काण्डं पौरोडाशिकमिति। अतः समाख्या श्रुतित एव साक्षाद्विनियोजिका। क्रमस्तुप्रकरणाद्युन्नयनद्वारा तथेति समाख्या बलवतीति। सिद्धान्तस्तु—पौरोडाशिकपदं न पुरोडाशमन्त्रविशेषयोः संबन्धमाह किं तु पुरोडाशविशिष्टं काण्डम्। वैशिष्ट्यानुपपत्त्या तु संबन्धस्तत्र कल्प्यते। सोऽपि न शेषशेषिभावः किं तु संबन्धमात्रम्। तद्द्वारेण तु मन्त्रभेदस्यापि तदनुमानम्। तथा

च समाख्ययापि क्रमादिकमुन्नीय विनियोगो न तु श्रुत्यैव । एवं च समाख्यया क्रमोऽनुमेयस्तेन प्रकरणं तेन वाक्यं तेन लिङ्गं तेन श्रुतिस्तया विनियोग इति समाख्यायां षष्ठः कालो विनियोगस्य । स्थाने तु क्रमः प्रत्यक्ष एवेति न कल्पनीयः । तथा च तेन प्रथमत एव प्रकरणमनुमेयं तेन च वाक्यं तेन लिङ्गं तेन श्रुतिस्तया विनियोग इति पञ्चमः कालः । तस्मादर्थविप्रकर्षात्समाख्या स्थानतो दुर्बलेति न पुरोडाशपात्रशुन्धनेऽस्य विनियोगः । कथं तर्हि काण्डस्य पौरोडाशिकसंज्ञा । पुरोडाशसंबन्धिबहुमन्त्रघटितत्वादित्यदेहि । तदयं निर्गलितोऽर्थः—

**'एकद्वित्रिचतुष्पञ्चवस्त्वन्तरपकारितम् ।**
**श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते ॥**

**बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा ।**
**मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया ॥'**

इत्यलमतिविस्तरेणेति प्रकृतमनुसरामः ।

## आदर्शः

नन्वेवरीत्या व्यङ्ग्यार्थेऽपि तादृशतात्पर्यविषयोऽस्तु वरं गृहीततच्छब्दशक्तिकत्वं ना प्रवेश्यताम्, तथाच तस्यापि यत्पर इत्यादिनोक्तं शब्दवाच्यत्वमेवेत्यत आह—यदि चेति । 'कन्या ते' इत्यत्र कन्या अदत्ता यद्वा श्रुतगर्भा कन्या अगर्भिणीति नञ्श्लेषः । वाच्यत्वमिति, एतादृशब्दो हि सम्बोध्यब्राह्मणेनेव तत् सन्निहितपुरुषान्तरेणापि श्रुतः, ततश्च तेन पुरुषेण तदीयहर्षशोकयोः प्रतीतत्वात् कथं न वाच्यमित्यर्थः । ननु यावानर्थः श्रुतशब्दात् प्रतीयते इति विवक्षितम्, अत्र तु उदासीनजनेन तदीयहर्षशोकानुमापकलिङ्गाभ्यामेव तावनुमितावित्यत आह—कस्माच्चेति नन्वत्र इष्टापत्तिरेवेत्याह—किमिति चेति ।

श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् इति । (जैमिनिसूत्रम् अ० ३, पा० ३, सू० १४)

तत्र च—

**श्रुतिर्द्वितीया क्षमता न लिङ्गं वाक्यं पदान्येव तु संहतानि ।**
**सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या ॥**

इति श्रुत्यादिपदार्थविवरणम् । अत्र न द्वितीया द्वितीयान्तं पदम् । सूत्रे समवाय इत्यत्र विरोध इत्यर्थः, पारदौर्बल्यमित्यत्र च परं परं दुर्बलमित्यर्थः । अत्र हेतुमाह—अर्थविप्रकर्षादिति । पूर्वपूर्वापेक्षया विलम्बेनार्थोपस्थापकत्वादित्यर्थः । शीघ्रोपस्थापकं पूर्वपूर्वमेव बलीय इत्यर्थः । तदेव किमितीत्यर्थः । तथाच "ऐन्द्र्या ऋचः गार्हपत्यमुपतिष्ठते"ति श्रुतौ द्वितीयान्तं गार्हपत्यपदं शक्त्या वह्नेरुपस्थापकम्, ऐन्द्र्या ऋचः क्षमता च गार्हपत्यपदे इन्द्रलक्षणया इन्द्रोपस्थापिकेति किमिन्द्रमग्निं वा उपतिष्टेतेति विरोधे द्वितीयान्तं गार्हपत्यपदं शक्त्या वह्नेः शीघ्रोपस्थापकं बलवत्' न तु लक्षणया मुख्यार्थबाधाद्युपस्थितिविलम्बेन इन्द्रोपस्थापिका क्षमता इत्युक्तम् ।

लक्षणाऽनङ्गीकारे तु इन्द्रस्यापि शक्यत्वाद्विलम्बेन उपस्थित्यभावात् किमिति द्वितीयान्तस्य पूर्वोक्तस्य बलीयस्त्वमित्यर्थः । विधेरपीति तदन्तिकगमनविधेरपीत्यर्थः ।

**सुधासागरः**

—यदपि सोऽयमिषोरिवेति, तदप्ययुक्तम् । यतः शब्दश्रवणानन्तरं यावानर्थः प्रतीयते तावति सर्वत्र यदि शब्दस्याभिधैव स्यात्तदा चैत्र पुत्रस्ते जातः कन्या ते गर्भिणीत्यादिवाक्यानन्तरं हर्षविषादयोः प्रतीतेस्तयोरपि तद्वाक्यस्याभिधा स्यात् । अथ तच्छब्दप्रतिपाद्ये सर्वत्राभिधा, हर्षादयस्तु न तत्प्रत्याय्याः इत्युच्यते तर्हि लक्षणीयेऽप्यभिधैव स्यादिति लक्षणोच्छेदः ।

किमिति च 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति सूत्रेण भगवान् जैमिनिः श्रुत्यादिषु पूर्वबलीयस्त्वं प्रतिपादयाम्बभूव । सर्वत्रैवाभिधाप्रसङ्गे उत्तरस्य दौर्बल्ये बीजाभावात् । सूत्रन्तु प्रकृतार्थविच्छेदकत्वेऽपि बहूपकारकत्वाद् दुरूहत्वाच्च व्याक्रियते । श्रुतिलिङ्गादयः षडिह विनियोजकाः । तत्र विरुद्धयोरेकत्रोपनिपाते समुच्चयो न सम्भवतीत्येकेनापरस्य बाधो वक्तव्यः । स च बलवता दुर्बलस्येति स्थितिः । दौर्बल्यप्रतिपादकं सूत्रं श्रुतिलिङ्गेत्यादि । अस्यार्थः—श्रुत्यादीनां समवाये एकत्रोपनिपाते तेषां मध्ये यदपेक्षया यत्परं तदपेक्षया तद् दुर्बलम् । कुतः, अर्थविप्रकर्षात् पूर्वापेक्षया विलम्बेनार्थप्रत्यायकत्वात् । यथा चैतत्तथोदाहरणे स्फुटीकरिष्यते ।

तत्र श्रुतिर्द्वितीयान्तं पदं विभक्तिमात्रानुपस्थापकत्वात्प्रकृतिप्रत्ययौ सम्भूयार्थं ब्रूत इति व्युत्पत्तेः । तथाहि—कर्मत्वबोधिका द्वितीया । कर्मत्वं क्रियाजन्येष्टफलभोगित्वम् । तत्र क्रिया शेषः, तज्जन्यं फलं किञ्चिदंशः, तदाश्रयः शेषी । अत एव द्वितीयान्तपदेन शेषशेषिकिञ्चिदंशावगमः क्रियते इति वृद्धाः । न चैतत् तृतीयायामस्ति अरुणयेत्यादौ साध्यत्वस्य द्रागप्रतीतेः । तथाऽरुणागतेन तृतीयार्थसाधनत्वेन कर्मगतं साध्यत्वमाक्षिप्यत इति प्राञ्चः ।

वाचस्पतिमिश्रास्तु—द्वितीयातृतीये द्वे अपि कारकविभक्तितया क्रियां प्रति प्रकृत्यर्थस्य कर्मकरणभावार्थमवगमयत इति द्वे अपि विनियोजिके । क्रियां प्रति कर्मणः शेषित्वं करणस्य च शेषत्वमिति विनियोगः । पदान्तरानपेक्षे च क्रियां प्रति शेषशेषित्वे श्रुतिमात्रात् प्रतीयेते इति [३.३.२५ सूत्र-] भामत्यामाहुः ।

सुबुद्धिमिश्रनृसिंहठक्कुरादयस्तु—श्रवणमात्रेणार्थप्रत्यायिका हि श्रुतिरुच्यते । ताश्च कारकविभक्तयः । उपपदविभक्तयस्तु सहार्थतृतीयाद्याः सहादिसापेक्षत्वान्न तथा । एवं 'मांसं गुडधानाः क्रोशं कुटिला नदी'त्यत्र द्वितीयाऽपि न श्रुतिः अन्तर्भूतक्रियापेक्षत्वादित्याहुः ।

वस्तुतस्तु विधेयार्थबोधने शब्दान्तरनिरपेक्षं शब्दमात्रमेव श्रुतिरिति बोद्धव्यम् । अत एव काव्यप्रदीपकारैरुक्तम्—निरपेक्षो रवः श्रुतिरिति । उक्तञ्चान्यत्र—

**अभिधातुं पदेऽन्यस्मिन्ननपेक्षो रवः श्रुतिः ।**
**सर्वत्रावगता शक्तिर्लिङ्गमित्यभिधीयते ॥**

**संहत्यार्थाभिधायित्वं पदानां वाक्यमुच्यते।**
**प्रधानवाक्यस्यान्यार्थाकाङ्क्षा प्रकरणं मतम्॥**
**स्थानं समानदेशत्वं समाख्या यौगिको रवः॥ रवः शब्दः।**

सारबोधिनीकारादिभिरप्युक्तम्—

**श्रुतिर्द्वितीया, क्षमता च लिङ्गं; वाक्यं पदान्येव तु संहतानि।**
**सा प्रक्रिया या कथमित्यपेक्षा, स्थानं क्रमो, योगबलं समाख्या॥ इति।**

क्षमता योग्यता। श्रुतिर्यथा—व्रीहीनवहन्तीति। अत्र क्रियाफलभागित्वं कर्मत्वं बोधयन्ती द्वितीया निरपेक्षैव व्रीहीणामवघातशेषित्वं प्रतिपादयति। अत एवोक्तं श्रीवत्सलाञ्छनभट्टाचार्यैः—व्रीहीनवहन्तीत्यत्र द्वितीयाश्रवणमात्रेणावहनन क्रियायां विनियोगोऽवगम्यत इति।

लिङ्गं पदार्थसामर्थ्यम्। उक्तञ्च प्रदीपकारैः—अर्थविशेषप्रकाशनसामर्थ्यं लिङ्गमिति। तद्यथा—बर्हिर्देवसदनं दामीति। अत्र लवनार्थप्रकाशकतया बर्हिर्लवने विनियोगः। अत एवोक्तं सारबोधिनीकारैः—बर्हिर्देवसदनं दामीत्यत्र 'दाप् लवने' इत्यस्य रूपम्, योग्यतावशाद् बर्हिश्छेदनेऽस्य मन्त्रस्य विनियोग इति।

वाक्यं परस्परापेक्षाणां पदानां समभिव्याहारः। अत एवोक्तं प्रदीपकारैः—परस्पराकाङ्क्षावशात्क्वचिदेकस्मिन्नर्थे पर्यवसितानि पदानि वाक्यमिति। तद्यथा—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामि' इत्यत्र लिङ्गेन निर्वापे विनियुज्यमानस्य समवेतार्थभागस्य एकवाक्यताबलेन देवस्य त्वेत्यादिभागस्यापि तत्र विनियोगः। यथा वा 'श्वेतं छागमालभेत' इत्यत्रान्वये श्वेतस्य छागस्य प्रत्येकमालभनक्रियाऽन्वयित्वेऽप्याकाङ्क्षादिमहिम्ना विशेषणस्य श्वेतस्य छागावच्छेदकता वाक्याद् व्यवस्थाप्यते।

प्रकरणं तु कर्त्तव्यस्य विनियोगादेः केन स्यात् कथमित्यादीतिकर्त्तव्यताकाङ्क्षा। अत एवोक्तं प्रदीपकारैः—लब्धवाक्यभावानां पदानां कार्यान्तरापेक्षावशाद् वाक्यान्तरेण सम्बन्ध आकाङ्क्षापर्यवसन्नं प्रकरणमिति। तद्यथा—'समिधो यजति' इत्यादेर्दर्शपौर्णमासकर्मभावाकाङ्क्षायां पाठवशाच्छेषत्वम्। यथा वा 'दध्ना जुहोति' इत्यत्र दधियागस्याग्निहोत्राङ्गताऽवगमः। 'अग्निहोत्रं जुहोति' इत्यस्य प्रधानवाक्यस्य कथमित्याकाङ्क्षायां तदभिधानात्।

स्थानं—सहावस्थानं सन्निधिरिति यावत्। अत एवोक्तं प्रदीपकारैः—स्थानं क्रमः। स चानेकस्याम्नातस्य सन्निधिविशेषाम्नानमिति। तद्यथा 'कुशमुष्टिः दभ्रिरसि' इत्यत्र आग्नेयाग्नीषोमीयोपांशुयागाः क्रमेण ब्राह्मणेषु पठिताः। मन्त्रभागेऽपि क्रमेणानुमन्त्रणत्रयं पठितम्। तत्राग्नेयवैष्णवयोर्लिङ्गेनैव द्वयोर्विनियोगसिद्धिः। 'दभ्रिरसि' इत्यत्र तु न लिङ्गादि विनियोजकं, किन्तु यस्मिन्प्रदेशे ब्राह्मणे उपांशुयागविधानं तस्मिन्नेव प्रदेशे मन्त्रेऽप्यस्य पाठ इति क्रमादुपांशुयागानुमन्त्रणेऽस्य विनियोगः। यथा वा 'हव्यकव्ये स्वाहा स्वधा' इत्यत्र हव्ये स्वाहेत्यस्य कव्ये स्वधेत्यस्य विनियोगः तुल्यक्रमत्वात्।

समाख्या योगबलम्। यथा 'हौत्रमौद्गात्रमित्यादि'। तत्र हि होतुरिदं हौत्रमित्यादियोगबलेन हौत्रादिसमाख्यातानि कर्माणि होत्रादिभिरनुष्ठेयानि। एवञ्च हवनं होतरि गानमुद्गातरि विनियुज्यते।

अथैषां विशेषोदाहरणानि—तत्र श्रुतिलिङ्गयोर्विरोधे लिङ्गस्य दुर्बलत्वम्। यथा 'कदाचन स्तरीरसि नेन्द्र सश्चसि' इत्यादिकाया ऋचो विनियोजिका श्रुतिः 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' इति। तत्र चेन्द्रप्रकाशनसामर्थ्यरूपाल्लिङ्गादिन्द्रोपस्थाने विनियोगः प्रतिभाति, अन्यप्रकाशकस्यान्यत्र विनियोगायोगात्। श्रुत्या गार्हपत्योपस्थाने स प्रतीयते। गार्हपत्यमिति द्वितीया हि कर्मविभक्तितया कामपि क्रियामपेक्ष्य प्रकृत्यर्थस्य शेषत्वं बोधयति, क्रियाजन्येष्टफलभागित्वस्य तदर्थत्वात्। एवमैन्द्र्येति तृतीया प्रकृत्यर्थस्य शेषत्वम्, क्रियाम्प्रति साधकतमत्वरूपकरणत्वस्य तदर्थत्वात्। तदत्र श्रुतिलिङ्गयोर्विरोधः। न च वाच्यं, निरपेक्षया द्वितीयया शेषित्वमात्रं प्रतीयते, न त्वैन्द्रीमृचम्प्रतीति, तच्चाग्नेयीमृचम्प्रत्यपि सम्भवतीति कुतो विरोधः। ऐन्द्र्येतिपदमपेक्ष्य विशेषबोधनाद् विरोध इति चेत्, न तर्हि श्रुतेर्विरोधः किन्तु वाक्यस्य। तच्च लिङ्गापेक्षया दुर्बलमेवेति। यतः शेषशेषिभावः सामान्यतः श्रुत्यैवावगम्यते, पदान्तरप्रक्षेपात्तु विशेषे व्यवस्थाप्यते, विशेषसम्बन्धमात्रस्य पदान्तरसम्बन्धात्प्रतीतेः। तस्माच्छ्रुत्या सामान्यतः प्रतिपाद्योऽसौ वाक्यलभ्यं विशेषमपेक्ष्य लिङ्गप्रतिपाद्येन विरुद्ध्यते। तत्रायं पूर्वपक्षः सामर्थ्यज्ञानमपेक्ष्य श्रुतिर्विनियोजिका। न ह्यसमर्थे श्रुतिसहस्रेणापि विनियोक्तुं शक्यते। यथा वह्निः प्रसेके जलं वा दाहे। अतो लिङ्गस्य बलवत्त्वादिन्द्रस्योपस्थानेऽस्या विनियोगः। तदनुरोधितया द्वितीया सप्तम्यर्थतया व्याख्येया। गार्हपत्यसमीपेऽनया इन्द्र उपस्थातव्य इत्यर्थः पर्यवस्यति।

सिद्धान्तस्तु—श्रुतिः स्वरूपसत्सामर्थ्यमपेक्षते न तु तद्बोधमपि, येन लिङ्गं बलवद् भवेत्। तस्य च पूर्वसत एव ज्ञानं विनियोगान्यथानुपपत्त्या पश्चादुपजायते। लिङ्गन्तु विनियोजने श्रुतिमपेक्षते। न ह्यनेनेन्द्र उपस्थातव्य इति लिङ्गात् स्वरसतः प्रतीयते, किन्त्वीदृगिन्द्र इत्येतावन्मात्रम्। तथा च प्रकरणाम्नानसामर्थ्यादिन्द्रप्रकाशनसमर्थाया ऋचोऽन्यथानुपपत्या विनियोगः कल्पनीयः। तथा चार्थविप्रकर्षः। तथा हि श्रुतार्थापत्तिसाधकन्यायेन शब्दोपस्थापितेनैव शाब्दी आकाङ्क्षा परिपूर्यत इति लिङ्गेनानया इन्द्र उपस्थातव्य इति श्रुतिः कल्पनीया, ततस्तया विनियोगो भवेत्। ततो यावल्लिङ्गं श्रुतिकल्पनायै प्रक्रान्तव्यापारं तावत् प्रत्यक्षया श्रुत्या गार्हपत्ये विनियोगः सिद्ध एवेति प्रकरणे निराकाङ्क्षे कथाऽनुपपत्यां श्रुतिः कल्पनीया ! तस्माच्छ्रुतेर्बलवत्त्वात्तदनुगुणतया सामर्थ्ये नीयमाने इन्द्रपदं परमैश्वर्यवाचकतया गार्हपत्यतात्पर्यकमित्यवधार्यते।

अतएव रविभट्टाचार्यैर्व्याख्यातम्—श्रुतिर्बलवती। तथा हि 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते'इति श्रूयते। 'कदाचन स्तरीरसि नेन्द्र सश्चसि दाशुषे' इत्यादिकैन्द्री ऋक्। अत्रेन्द्रप्रकाशनरूपाल्लिङ्गान्मन्त्रस्येन्द्रप्रधानक्रियासाधनत्वं प्रतीयते। अन्यथेन्द्र—प्रकाशनं व्यर्थमापद्येत। तथाचैतन्मन्त्रकरणकक्रियाम्प्रति इन्द्रः प्रधानमिति व्युत्पादने लिङ्गस्योपयोगः। काऽसौ क्रियेति जिज्ञासायामैन्द्र्योपतिष्ठत इति पदद्वयात्मकवाक्येनोपस्थानक्रियापर्यवसानम्। एवं सतीन्द्रमन्त्रेणेन्द्रमुपतिष्ठत इत्यर्थः पर्यवस्यति। एवं गार्हपत्यमिति श्रुत्या द्वितीयान्तपदात्मिकया गार्हपत्यस्य प्रधान्यं प्रतीयते। तच्च गुणीभूतां किञ्चित्करणकक्रियामन्तरेण न सम्भवति, अत ऐन्द्र्योपतिष्ठत इति पदद्वयेन मन्त्रविशेषक्रियाविशेषयोः पर्यवसानं भवति। तथा सत्यैन्द्रेण गार्हपत्यमुपतिष्ठते इत्ययमर्थः प्रतीयते। तथा च लिङ्गादिन्द्रः शेषी, श्रुतेर्वह्निः शेषी प्राप्तः इत्युभयोर्विरोधे प्रधानत्वाविशेषात् ब्रीहियववद्विकल्पो वा स्यात्। इन्द्रगार्हपत्ययोः प्रधान्याविशेषादुपस्थानस्य च गुणत्वात्। 'प्रतिप्रधानं गुणावृत्तिः' इति न्यायेनोपस्थानावृत्त्या श्रुतिलिङ्गयोः समुच्चयाद्देवतयोरपि समुच्चयो वेति पूर्वपक्षः।

सिद्धान्तस्तु —प्रवर्त्तमानमपि लिङ्गं शेषिणमिन्द्रं विना न पर्यवस्यति, अत इन्द्रमिति श्रुतिकल्पनामावश्यकमित्युपजीव्यजातीयत्वादावश्यकत्वाच्च गार्हपत्यमिति साक्षादुपात्तश्रुतिरेव वह्नेः शेषित्वं बोधयति। ऐन्द्र्येत्यत्र तु श्रूयमाणमिन्द्रपदं स्वोचितक्रियायामध्वर्युगुणयोगेन मुख्येन्द्रसदृशवह्निपरमेव। न च विनिगमकाभावाद् गार्हपत्यपदमेवेन्द्रपरं लक्षणयास्त्विति वाच्यम्, 'प्रधानाप्रधानयोः प्रधाने झटित्यवसर' इति न्यायात्प्रथमप्रवृत्तश्रुत्या वह्नेः शेषित्वं प्रतीयते, तदानीमनुपपत्त्यभावात्, मुख्ये शब्दस्वरसाच्च। उत्तरकालन्तु प्रवर्त्तमानादैन्द्र्येति लिङ्गात् प्रथमप्रतीतार्थनुगुण्येन गौण्या वृत्त्या वह्निरेवेन्द्रशब्दार्थः कल्प्यते, न परं वैपरीत्यम्। तस्माद् वह्न्युपस्थाने मन्त्रः श्रुत्या विनियुज्यते न त्विन्द्रोपस्थाने लिङ्गेनेति श्रुत्या लिङ्गबाध इति।

लिङ्गवाक्योर्यथा-पुरोडाशस्य स्थानकरणस्थापनस्वरूपयोः सदनसादनयोः प्रकरणे 'स्योनन्ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां भेदः सुमनस्यमान' इति मन्त्रः पठितः। अयमर्थः—भोः पुरोडाश तव स्योनं समीचीनं स्थानं कृणोमि तच्च स्थानं घृतधारया सुषेवं सुष्ठु सेवितुं योग्यं कल्पयामि, घृतप्लुतानां कपालादीनां पुरोडाशेन सुखसेव्यत्वात्। भो व्रीहिणां भेदः सारभूत त्वं सुमनस्यमानः समाहितमनस्कः सन् तस्मिन्नमृतेऽनपायिनि सीदोपविश तत्रैव प्रतितिष्ठ स्थिरो भवेति। तत्र कल्पयामीत्यन्तः पूर्वभागः सदने, शेषभागस्तु सादने प्रयोक्तव्य इति लिङ्गात् प्रतिभाति। अयं मन्त्र एकं वाक्यम्, पदाक्षेपेण यत्कल्पयामि तस्मिन्सीदेत्येकार्थावच्छिन्नत्वाद्विभागे साकाङ्क्षात्वाच्च। ततश्चैकवाक्यत्वात् समस्त एवोभयत्र विनियोक्तव्यो देवस्य त्वेत्यादिवदिति वाक्यादवगम्यते। तदनयोर्विरोधः।

अत्र पूर्वपक्षः—अस्यैकवाक्यत्वे निश्चिते पश्चात्तदुपपत्तयेऽभिधानसामर्थ्यं कल्पनीयम्, यत्कल्पितया श्रुत्या विनियोगो भवेत्। यथा देवस्य त्वेत्यादिमन्त्रे 'अग्नये निर्वपामि' इति पदयोः समवेतार्थतया तयोरेकवाक्यतयाऽतादृशां पदान्तराणां सामर्थ्यकल्पना, तथाचैकवाक्यत्वनिर्वाहाय क्लृप्तं सामर्थ्यं न तद्व्याहन्तुमर्हति किन्तु विनियोजिका श्रुति कल्पयत्समस्तमन्त्रविनियोजिकामेव कल्पयतीति वाक्यस्योपजीव्यत्वेन बलवत्त्वात्समस्तस्यैवोभयत्र विनियोग इति।

सिद्धान्तस्तु—यद्येकवाक्यतामवगम्यैव सामर्थ्यमवधार्येत तदोपजीव्यत्वाद् वाक्यं बलवद्भवेत्। न त्वेवम्। प्रत्युतावधृतसामर्थ्यानां सन्निहितपठितानां सामर्थ्यवशेन प्रयोजनैकतया चैकवाक्यत्वावधारणम्। यावन्ति पदानि प्रधानमेकमर्थं प्रतिपादयितुं समर्थानि विभागे साकाङ्क्षाणि भवन्ति तावन्ति एकं वाक्यं भवन्ति। अनुष्ठेयश्चार्थो मन्त्रे प्रकाशमानः प्रधानम्। सदनसादने चात्र तथाभूते। तथा च सदनप्रकाशनसमर्थः पूर्वभागः सादनप्रकाशनसमर्थः शेषभाग इति प्रतीताभ्यां तत्सामर्थ्याभ्यां क्लृप्तेन श्रुतिद्वयेन द्रागेव तद्भागयोः प्रत्येकं विनियोगे सिद्धे तावतैव प्रकरणपाठोपपत्तौ समस्तमन्त्रस्यैकवाक्यताबुद्धिरुत्पन्नप्याभासीभवति, लिङ्गेन बाधात्। तथा क्लृप्तमपि सामर्थ्यं न श्रुत्यन्तरं कल्पयितुमर्हतीत्यर्थविप्रकर्षाद् वाक्यं दुर्बलम्। तस्माद्यत्रावान्तरवाक्यविरोधिलिङ्गताऽस्ति तत्र समवेतार्थकेनैकेन पदेन द्वाभ्यां त्रिभिर्वा सहैकवाक्यता पदान्तराणामपि सामर्थ्यं विनियोजकश्रुतिकल्पनानुकूलं कल्पयति। यथाऽत्रैव 'स्योनन्त' इत्यादिभागानाम्।

व्याख्यातं रविभट्टाचार्यैः—लिङ्गं वाक्याद् बलवत्। तथाहि—दर्शपौर्णमासयोः श्रूयते 'स्योनन्ते सदनं कृणोमि घृतस्य धारया सुषेवं कल्पयामि तस्मिन्तसीदामृते प्रतितिष्ठ व्रीहीणां भेदः सुमनस्यामान' इति। अत्र च

तस्मिन्निति तच्छब्देन प्रस्तुतप्रत्यवमर्षणाद् यत्पदसमभिव्याहारेण विभज्यमानसाकाङ्क्षत्वादेकमिदं वाक्यम्। तथा च मन्त्रद्वैताभावात्सर्वोऽप्ययं मन्त्रः स्थानकरणस्याङ्गम्। तत्र च विनियोजिका श्रुतिः कल्पनीया। सर्वेणानेन मन्त्रेण स्थानं कर्त्तव्यम्। तथा सर्वेण पुरोडाशः स्थापनीय इत्यपि श्रुतिः स्थानक्रियाङ्गत्ववत् प्रतिष्ठापनक्रियाङ्गत्वस्यापि तद्वाक्यबोधितत्वात्। एवं सदनसादनयोरस्य मन्त्रस्य विकल्पः समुच्चयो वा स्यादिति पूर्वपक्षः।

सिद्धान्तस्तु—न पदसमुदायो वाक्यं, किन्तु यावन्ति पदानि प्रधानमेकमर्थं बोधयितुं समर्थानि विभागसाकाङ्क्षाणि च तावतां समुदायः। मन्त्रेषु चानुष्टेयोऽर्थः प्रकाश्यमानः प्रधानम्। अत्र च मन्त्रे सदनकरणं पुरेडाशासादनं चानुष्ठेयतया द्वे अपि प्रधाने, तयोश्च कल्पयाम्यन्तो मन्त्रः सदनकरणे समर्थः तस्मिन्नित्यादिस्तु पुरोडाशासादने। तथा चोत्तरार्द्धस्य पुरोडाशासादने प्रथमार्द्धस्य सदनकरणे शक्तिं कल्पयित्वा नैकवाक्यता न वा कृत्स्नः सदनसादनयोर्विनियोक्तुं शक्यते इति यावदेकवाक्यतां कल्पयित्वा सामर्थ्यमुन्नीयते तावत्प्रत्यक्षसिद्धं सामर्थ्यमेकैकविनियोजिकां सादनं कर्त्तव्यमित्याकारिकां श्रुतिं कल्पयति यावच्च वाक्यकल्पितं पदार्थसामर्थ्यरूपं लिङ्गं श्रुतिं कल्पयति तावत्प्रत्यक्षसिद्धसामर्थ्यकल्पिता श्रुतिर्विनियोगं गृह्णातीति।

वाक्यप्रकरणयोर्यथा दर्शपौर्णमासप्रकरणे 'इदं द्यावापृथिवी भद्रमभूत्' इत्यादिकः सूक्तवाकनिगदः पठितः। तत्र च 'इन्द्राग्नी इदं हविरजुषे तामवीवृधेतां महोज्यायोऽक्राताम्' 'अग्नीषोमाविदं हविरजुषेतामवीवृधेतां महोज्यायोऽक्राताम्' इत्यवान्तरवाक्यद्वयं श्रूयते। तत्र पौर्णमास्यामिन्द्राग्नी न देवते इति लिङ्गात्तत्पदमपनीयते। अमावास्यायान्तु समवेतार्थत्वात्तत्प्रयुज्यते। एवमग्नीषोमपदममावास्यायामसमवेतार्थत्वेनापनीयते, पौर्णमास्यान्तु प्रयुज्यते। तत्रैवं सन्दिह्यते—इन्द्राग्निपदैकवाक्यतापन्नानि अवीवृधेतामित्यादिपदानि तत्रापनेयानि, अथवा प्रयोक्तव्यान्येव इति। तत्र प्रकरणात्प्रयोगः प्रतिभाति, असमवेतार्थतया देवतामात्रस्यापनयनात्। वाक्यात्तु तान्यपनेयानीति प्रतीयते, येन सह यदेकवाक्यतापन्नं तेन सहैव तदपनयनौचित्यात्। तदनयोर्विरोधः। तत्र प्रकरणमेवाङ्गसम्बन्धप्रतिपादकमतस्तस्य बलवत्त्वाच्छेषभागः प्रयोक्तव्य एवेति पूर्वपक्षे सिद्धान्तः—प्रकरणं विनियोज्यत्वरूपसामर्थ्यमनपेक्ष्य न विनियोजकं येनैतदेवं भवेत्, किन्तु तदपेक्षमेव। कथमन्यथा 'पूष्णोऽहं देवयज्जया प्रजया पशुभिश्च जनषीय' इति पूषानुमन्त्रणं मन्त्रतद्देवताविरहिणोर्दर्शपौर्णमासयोर्न विनियुङ्क्ते। 'तिस्र एवोपसदः साङ्गस्य द्वादशाहीनस्य' इत्यत्र चैकाहविधेयसोमयागस्वरूपे साङ्गे ज्योतिष्टोमादौ द्वादशोपसत्तां न बोधयति। सा पुनर्बहुदिवसविधेया सोमयागरूपाहीन—नामकक्रतुविशेषे नीयते। यद्वाऽन्यत्र नीयते तदवहायावशिष्टेन प्रकरणकाङ्क्षा पूर्यते। यत्र तु विरोधिश्रुत्यादिकं नास्ति तत्र प्रकरणं विनियोजकम्। यथा 'समिधो यजति' इत्यादिबोधितस्य समिदादेः। अत्र तु यथा लिङ्गेन्द्रादिभागोऽपनीयते तथा वाक्येन तच्छेषभागोऽपीति क्व पश्चात्प्रवृत्तिकस्य प्रकरणस्थावकाशः। न च तथात्वमस्यासिद्धम्। यतो वाक्येन पदानां सम्बन्धः प्रत्यक्षसिद्धः, प्रकरणे तु आकाङ्क्षावशात्कल्पनीयः। तथा च वाक्ये प्रथममेवाभिधानसामर्थ्यं कल्प्यते, ततस्तेन श्रुतिस्तया विनियोग इति तृतीयः कालो विनियोगस्य। प्रकरणे तु प्रथमं वाक्ययोः सम्बन्धः कल्प्यते, ततः सामर्थ्यम्, अथ श्रुतिः, अथ विनियोग इति चतुर्थः कालः। ततो वाक्यात्प्रथमं शेषभागस्यापनये सिद्धे क्लृप्ताऽपि सिद्धश्रुतिरकिञ्चिकरी वाक्यविरोधादिति।

व्याख्यातञ्च मधुमतीकारैः—प्रकरणाद् वाक्यं बलवत्। तथा हि—ज्योतिष्टोमप्रकरणे 'द्वादशोपसदोऽहीनस्य' इति श्रूयते। उपसत्पदं स्तुतिवाचकम्। 'अह्नः खः क्रतौ' इत्यनुशासनादहीनपदं यागविशेषवाच-

कम्। एवञ्च प्रकरणाज्ज्योतिष्टोम एव द्वादशोपसदन्वयो न त्वहीनयागे इति पूर्वपक्षः। सिद्धान्तस्तु—प्रकरणस्य वाक्यघटितत्वाद्यावत्वप्रकरणेनैकवाक्यता कल्पनीया तावत्प्रत्यक्षसिद्धवाक्येन लिङ्गं कल्पनीयम्। यावत्कल्पितवाक्येन लिङ्गकल्पनं तावत्प्रत्यक्षवाक्यकल्पितलिङ्गेन श्रुतिकल्पनम्, यावच्च कल्पितवाक्योपस्थापितलिङ्गेन श्रुतिकल्पनं तावत्प्रत्यक्षवाक्यकल्पितलिङ्गोन्नीतश्रुतिविर्नियोगं गृह्णातीत्यहीनयाग एव द्वापशोपसदन्वयो न ज्योतिष्टोम इति।

प्रकरणस्थानयोर्यथा—राजसूयस्य प्रधाननानाकर्मात्मकस्य प्रकरणे प्रधानादभिषेचनीयादनन्तरं शौनःशेफोपाख्यानमाम्नातम्। तत्र किं समस्तराजसूये तदङ्गमाहोस्विदभिषेचनीयमात्र इति सन्देहः। तत्र प्रकरणस्य बलवत्त्वात्सर्वाङ्गताऽवगम्यते, स्थानस्य तु बलवत्त्वेऽभिषेचनीयाङ्गता। तदनयोर्विरोधः। यद्यप्याकाङ्क्षासत्त्योरुभयोरपि तुल्यबलवत्त्वम्, 'अयमेति पुत्रो राज्ञः' इत्यादौ 'गामानय' 'प्रासादं पश्य' इत्यादावुभयविरहेणान्वयाबोधात्, तथापि विनिगमनाविरहादुभयोस्तुल्यबलवत्त्वाच्च विकल्पेनाङ्गताऽस्तु इति पूर्वपक्षे सिद्धान्तः—आकाङ्क्षासन्निधी द्वे अपि विनियोगप्रयोगप्रयोजिके इत्युभयसम्मतम्। राजसूये च कथं स्यादित्याकाङ्क्षां 'क्षत्रियस्य धृतिं' यावदनुवर्तते। सन्निधानं च प्राकरणिकत्वेन सर्वदा बुद्धिसन्निहितत्वादस्त्येव। अभिषेचनीये च सत्यपि सन्निधाने आकाङ्क्षा उत्थाप्या। तथा च यदोत्थिताकाङ्क्षेण प्रकरणेनैकवाक्यत्वं कल्पनीयं तदा सन्निधानादाकाङ्क्षोत्थापनम्। तथाचैकत्र सामर्थ्यकल्पनं श्रुत्युन्नयनं विनियोगः। अपरत्रैकवाक्यताकल्पनं सामर्थ्योन्नायनं विनियोगश्चेत्यर्थविप्रकर्षात् स्थानस्य दुर्बलत्वात् प्रकरणेन सर्वत्र राजसूये शौनः शेफोपाख्यानस्य विनियोगो न तु विकल्प इति।

व्याख्यातं च मधुमत्याम्—प्रकरणं स्थानाद् बलवत्। नानेष्टिपशुसोमसमुदायो राजसूयः। तस्मिन्निष्टिपशुसोमयागाः बहवः प्रधानभूताः। तत्राभिषेचनीयाख्यः कश्चित् सोमयागः। तस्य सन्निधौ देवनादयः श्रूयन्ते 'अक्षैर्दीव्यति राजन्यं जिनाति शौनःशेफमाख्यापयतीति।' जिनाति जयति। बह्वृचब्राह्मणे कथितं शुनःशेफविषयमुपाख्यानं शौनःशेफम्। तदपि बह्वृचब्राह्मणे पठ्यते—यथा 'शुनःशेफः ऋषिपुत्रो हरिश्चन्द्रपुत्रेण ? पुरुषमेधपशुत्वेन क्रीतः। स वरुणाय स्वस्याऽऽलम्भे कर्त्तुमारब्धे वरुणं तुष्टाव, स च तुष्टः एन ररक्षे-ति। तत्र सन्निबद्धा देवनादयोऽभिषेचनीयाङ्गमिति पूर्वपक्षः। सिद्धान्तस्तु राजसूयश्च बहुयागात्मक इति तत्रत्यबहुयागाङ्गत्वं देवनादीनाम्। तदुक्तम्—

**अविच्छिन्ने कथंभावे यत्प्रधानस्य पठ्यते।**
**अविज्ञातफलं कर्म तस्य प्रकरणाङ्गता॥**

कथंभावे 'कथं भावना निषपद्यत' इत्याकाङ्क्षायाम्, इतिकर्त्तव्यताकाङ्क्षायामिति यावत्। यद्यप्याऽऽकाङ्क्षावत् सन्निधिरप्यपेक्षणीयस्तथापि पवित्रनामकयागमारभ्य क्षत्रधृतिपर्यन्तप्रकरणिनो राजसूयस्य सदा बुद्धिस्थत्वाद् बौद्धेन सन्निधिना नित्यसन्निकृष्टतया तत्सन्निधिरकल्पनीयः। तथा च राजसूयाकाङ्क्षारूपं महाप्रकरणं क्लृप्तदेवनाकाङ्क्षया सन्निधीयते। तथा च यावदभिषेचनीयसन्निधिपाठेनाकाङ्क्षोत्थाप्या तावत्सिद्धाकाङ्क्षेण राजसूयेनैकवाक्यता कल्प्यते। यावच्चाभिषेचनीयाकाङ्क्षया तदेकवाक्यता कल्प्यते तावत् क्लृप्तया राजसूयैकवाक्यतया तदुपकारत्वेन लिङ्ग कल्पयते। यावत् क्लृप्तवाक्येन लिङ्गं कल्प्यते तावत् क्लृप्तलिङ्गं

विनियोजिकां श्रुतिं कल्पयाते। यावद् वाक्यकल्पितलिङ्गेन श्रुतिरभिषेचनीये कल्प्यते तावत् क्लृप्तया श्रुत्या विनियोगपरिग्रह इति।

स्थानसमाख्ययोर्यथा—दर्शपौर्णमासप्रकरणे पौरोडाशिकसमाख्याते काण्डे सान्नाय्यक्रमे 'शुन्धध्व दैव्याय कर्मणे' इति मन्त्रः श्रूयते। स च प्रकरणाद्दर्शार्थः। तथात्वञ्च तस्य समवेतार्थतौचित्यात्, कस्यचिच्छुन्धने विनियोगाद् भवेत्। शुन्धनायं चात्र द्वयमुपस्थितं सान्नाय्यपात्रं पुरोडाशपात्रं च। तत्र समाख्यावशात्पुरोडाशपात्रे विनियोगः प्रतिभाति। स्थानवशात्तु सान्नाय्यपात्राणाम्। तदनयोविरोधः।

तत्र पूर्वपक्षः—पौरोडाशशब्देन पुरोडाशसम्बन्धीन्युच्यन्ते तान्यधिकृत्य प्रवृत्तं काण्डं पौरोडाशकमिति। अतः समाख्या श्रुतित एव साक्षाद् विनियोजिका, क्रमस्तु प्रकरणाद्युन्नयनद्वारा तथेति समाख्या बलवती।

सिद्धान्तस्तु—पौरोडाशिकपदं न पुरोडाशमन्त्रविशेषयोः सम्बन्धमाह, किन्तु पुरोडाशविशिष्टं काण्डम्। वैशिष्ट्यानुपपत्त्या तु सम्बन्धस्तत्र कल्प्यते, सोऽपि न शेषशेषिभावः, किन्तु सम्बन्धमात्रम्। तद्द्वारेण तु मन्त्रभेदस्थापि तदनुमानम्। तथा च समाख्याऽपि क्रमादिकमुन्नीय विनियोगः, न श्रुत्यैव। एवं च समाख्यया क्रमोऽनुमेयः, तेन प्रकरणं, तेन वाक्यं, तेन लिङ्गं, तेन श्रुतिस्तया विनियोग इति समाख्यायां षष्ठः कालो विनियोगस्य। स्थाने तु क्रमः प्रत्यक्ष एवेति न कल्पनीयः। तथा च तेन प्रथमत एव प्रकरणमनुमेयं, तेन च वाक्यं, तेन लिङ्गं, तेन श्रुतिस्तया विनियोग इति पञ्चमः कालः। तस्मादर्थविप्रकर्षात्समाख्या स्थानतो दुर्बलेति न पुरोडाशपात्रशुन्धनेऽस्य विनियोगः। कथं तर्हि काण्डस्य पौरोडाशिकसंज्ञा ? पुरोडाशसम्बन्धिबहुमन्त्रघटितत्वादित्यवेहि।

व्याख्यातं च मधुमत्याम्—स्थानं समाख्यातो बलवद् यथा—याज्ञिकैः पौरोडाशिकाभिधायकमन्त्रबाहुल्यात्पौरोडाशिकमिति समाख्याते काण्डे आग्नेयादीनां कर्मणां क्रमेण मन्त्राः समाम्नाताः। तत्रामावासिकसान्नाय्यसन्निधौ शुन्धध्वं दैव्याय कर्मण इति शुन्धनार्थे मन्त्रः समाम्नातः। पुरोडाशशब्देन पुरोडाशसम्बन्धीन्युच्यन्ते तान्यधिकृत्य प्रवृत्तं काण्डं पौरोडाशिकम्। एवं च यावत्सन्निधिना प्रकरणाद्यनुमानपरम्परया सान्नाय्यपात्रसम्बन्धो मन्त्रस्य प्रतिपादनीयस्तावत्समाख्यया पुरोडाशपात्रसम्बन्धः प्रतीपाद्यते। एवं च तत्र काण्डोक्तानां पुरोडाशपात्राणामुलूखलजुह्वादीनामपि शोधने मन्त्रोऽयमङ्गं समाख्याबलादिति पूर्वपक्षः।

सिद्धान्तस्तु—समाख्यया सामान्यतः सम्बन्धावगमः, शेषशेषिरूपेण तदनभिधानात्। एवं च पुरोडाशपात्राणां सन्निधिर्न प्रत्यक्षसिद्धः, किन्तु पौरोडाशिकविशिष्टत्वान्यथाऽनुपपत्त्या। अन्यथा तत्प्रतिपादककाण्डस्य पौरोडाशिकमिति समाख्या न स्यात्। तस्मात् काण्डसमाख्यया सन्निधिस्तेन चाकाङ्क्षारूपं कृत्स्नं पात्रप्रकरणं तद्द्वारा वाक्यलिङ्गश्रुतीनां कल्पनम्। सान्नाय्यपात्राणान्तु सन्निधिः प्रत्यक्षसिद्धः। तथा दर्शेष्टौ बहिःसम्पादनस्य मुष्टिनिर्वापस्य चान्तराले सान्नाय्यपात्राणां देश उक्तः। मन्त्रस्तु तदुभयविषययोर्मन्त्रानुवाकयोर्मध्यमेऽनुवाके पठ्यते। तत्र प्रत्यक्षसन्निधिना प्रकरणादीनां चतुर्णामेव कल्पनात्सान्नाय्यपात्राणामेव शुन्धने मन्त्रान्वयो न सर्वपात्राणामिति। अत्र वाक्योदाहरणं प्राभाकरोक्तं शेषाणि भट्टोक्तानि लिखितानीति ध्येयमिति। तदयं निर्गलितोऽर्थः—

**एकद्वित्रिचतुःपञ्चवस्त्वन्तरितकारितम्।**
**श्रुत्यर्थं प्रति वैषम्यं लिङ्गादीनां प्रतीयते।**

**बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा।**
**मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया॥ इति।**

अलमतिविस्तरेणेति।

प्रकृतमनुसरामः—पूर्वोक्त इषुदृष्टान्तो वैषम्यादप्यनुपपन्नः। तथाहि—तत्र वेगव्यापारस्य स्वरूपसत एव जनकतया दीर्घदीर्घतरत्वं सम्भवति। अभिधायास्तु ज्ञाताया एवानुकूलत्वाद् व्यङ्ग्यतिष्ठया विज्ञानादित्यन्विताभिधानवादेऽपि निःशेषेत्यादौ विधेव्यङ्ग्यत्वमेवेति स्थितम्।

---

किञ्च 'कुरु रुचिम्' इति पदयोर्वैपरीत्ये काव्यान्तर्वर्तिनि कथं दुष्टत्वम्, न ह्यत्रासभ्योऽर्थः पदार्थान्तरैरन्वितः इत्यनभिधेय एवेति, एवमादि अपरित्याज्यं, स्यात् ।

यदि च वाच्यवाचकत्वव्यतिरेकेण व्यङ्ग्यव्यञ्जकभावो नाभ्युपेयते तदासाधुत्वादीनां नित्यदोषत्वं कष्टत्वादीनामनित्यदोषत्वमिति विभागकरणमनुपपन्नं स्यात्, न चानुपपन्नं सर्वस्यैव विभक्ततया प्रतिभासात् । वाच्य वाचकभावव्यतिरेकेण व्यङ्ग्यव्यञ्जकताश्रयणे तु व्यङ्ग्यस्य बहुविधत्वात् क्वचिदेव कस्यचिदेवौचित्येनोपपद्यत एव विभागव्यवस्था ।

'द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया पिनाकिनः ॥'

इत्यादौ पिनाक्यादिपदवैलक्षण्येन किमिति कपाल्यादिपदानां काव्यानुगुणत्वम् ।

---

**सङ्केतः**

वैपरीत्य इति । 'कृते सति' इति अध्याहार्यम् । 'रुचिङ्कुरु' इति रूपं वैपरीत्ये । काव्यान्तर्वर्तिनीति । अस्यायमभिप्रायः—यत्—काव्यमध्यस्थापिते वैपरीत्ये दोषः, अन्यत्र तु का दोषचर्चा ? इति । असभ्योऽर्थः 'चिङ्कु' रित्यादिरूपः । योन्यन्तर्वर्ती मणिः चिङ्कुः । एवमादि 'रुचिङ्कुरु' इत्यादि । अन्विताभिधायिनां दूषणमेतत् ।

विभागकरणमिति । अयं भावः—असाधुत्वादयः लक्षणवैकल्यादयः दोषाः दोषा एव, कष्टत्वादयस्तु श्रुतिदुष्टादिरूपाः, स्वार्थवाचकत्वे समानेऽपि शृङ्गारादौ दोषाः, रौद्रादौ तु गुणाः, न तु दोषाः इति ।

किमितीति । यदि व्यङ्ग्यव्यञ्जकभावो नेष्यते इति शेषः ।

**बालचित्तानुरञ्जनी**

पुनरप्यन्विताभिधानवादिनं दूषयति किञ्चेति । ['क्वन्तर्वर्तिनि' इति पाठे] कुशब्दः अन्ते यस्य वैपरीत्यस्य तस्मिन्वैपरीत्ये रुचिङ्कुर्वित्यादिरूपेऽन्विताभिधानपक्षेऽपि दुष्टत्वं प्रतीयतां को दोषस्तत्राह न हीति । लाटभाषायां चिङ्कुरिति मदनमन्दिरान्तर्वर्तिमध्यपरपर्यायः । तदर्थोऽसभ्यः । तस्य [न स ?] पदार्थान्तरैन्वितश्चारु । तेनानभिधेयभावे प्रतीयमानत्वेन व्यङ्ग्यत्वमङ्गीकर्तव्यं स्यादिति भावः [?] ।

स्वदर्शनेऽपि बाधकं तर्कमाह यदीति। असाधुत्वादयश्च्युतसंस्कारत्वादयस्तेषां नित्यदोषत्वं, सर्वदा सर्वत्र परिहरणीयत्वात्। कष्टत्वादयः अधाक्षीदद्राक्षीदित्यादिश्रुतिकटुत्वादयः, तेषामनित्यदोषत्वम्, शृङ्गारशान्ताद्भूतादौ रसानुपयोगित्वेन हेयत्वात्, वीररौद्रादौ वाऽभ्युपयोगादहेयत्वादित्यर्थः। श्रुतिकटुत्वादयः शृङ्गारादौ व्यङ्ग्ये सति हेयाः न वाच्ये अर्थमात्रे। न च व्यङ्ग्येऽपि शृङ्गारादिव्यतिरिक्त इति विभागः स्वदर्शनवृद्धैः कृतः व्यङ्ग्यव्यञ्जकभावानङ्गीकारे न स्यादिति भावः। तदङ्गीकारे व्यवस्था स्यादित्यन्वयमाह वाच्येत्यादिना।

पुनरपि वाच्यव्यङ्ग्योर्भेदं दर्शयन् अन्विताभिधानवादिनां दोषमाह द्वयं गतमित्यादिना। पूर्वं चन्द्रकलैव शोच्या जाता इदानीं त्वमपीति द्वयं शोच्यमभूदित्यर्थः। अत्र कपालिन इत्यनेन बीभत्सो व्यज्यते। कपालिन इत्यनेनेति कपालिपदोपादानं तस्य काव्यानुगुणत्वं न स्यात् वाच्यव्यङ्ग्यविभागानङ्गीकार इत्यर्थः।

### काव्यादर्शः

पुनरन्विताभिधानवादिनं दूषयति-किंचेति। वैपरीत्य इति। क्रमव्यत्यासे 'रुचिङ्कुरु' इत्येवंलक्षणे। असभ्योऽर्थ इति। चिङ्कुरिति स्मरमन्दिरान्तर्वर्तिमणिसंस्मारकमसभ्यम्। एवमादीति, 'रुचिङ्कुरु' इत्यादि।

असाधुत्वादीनामिति। च्युतसंस्काराणां दुष्टत्वमेव। कष्टवादीनामिति। 'अधाक्षीद्, आक्षौत्सीद्, अतृणेक्षि' इत्यादीनां श्रुतिदुष्टानाम्। तेषां हि शृङ्गारशान्ताद्‌भुतादौ वर्जनाद् बीभत्सवीररौद्रादौ चाभ्युपगमाद् अनित्यत्वं च दोषत्वं च वक्ष्यते। ते हि व्यङ्ग्ये शृङ्गारादौ हेया। न वाच्ये ह्यर्थमात्रे, न च व्यङ्ग्येऽपि शृङ्गारादिव्यतिरिक्ते।

### विवेकः

किञ्च न केवलमस्माभिरेव सहृदयहृदयाह्लादि काव्यमार्गोपयुज्यमानं व्यञ्जकत्वमाश्रितं यावदन्विताभिधानवादिभिरपि रसभावानपेक्ष्य काव्याश्रितसङ्केतविशेषमात्रविद्भिरभ्युपगतमिति दर्शयति किञ्चेति। 'कुरु रुचिमुङीनां हठा' दित्यादौ पदद्वयव्यत्ययाध्ययने काश्मीरकादिभिरसास्वाद्यः (रसभ्यास्वादः) स्मर्यत इत्येवंविधा या हेयता सा न स्यात्, तस्यार्थस्यानभिधेयत्वेन प्रतीत्यविषयत्वात्। अपरञ्च सर्वत्र हेया इत्यसाधुत्वादयो नित्याः, विषयभेदेन हेयोपादेयत्वात्। श्रुतिदुष्टार्थदुष्टादयस्त्वनित्याः। व्यङ्ग्यव्यञ्जकभावाश्रयेण कथं विभागोपपत्तिरिति चेदत्राह—व्यङ्ग्यस्येति। तथाहि ये कष्टादयः शृङ्गारे दुष्टास्त एवौचित्यद्वीभत्सादावुपादेयाः। तत्र शृङ्गारे हेयस्य जुगुप्सादाविपदार्थस्योपादेयत्वं बीभत्सेषु प्रसिद्धमेव। रौद्रे यथा—'स्त्यानवनद्धघनशोणितशोणपाणि'रिति (वे. सं. १/२१)। शान्ते यथा—उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे। क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते। करुणे यथा—नवपल्लवसंस्तरेऽपि ते मृदु दूयेत यदङ्गमर्पितम्। तदिदं विषहिष्यते कथं वद वामोरु चिताऽधिरोहणम्॥ (रघु. ८/५७) इति।

एवञ्च शब्दविशेषाः क्वचिद्विषये चारवः क्वचिदचारवो यथा 'माल्यानुलेपनादयः शृङ्गारे चारवो बीभत्से पुनरचारवं' इत्यादि यदुद्‌भटेन दर्शितं (भा. वि. क: अ. सा. स. ५/६१-६६) तदप्यस्य रसस्यैव ते व्यञ्जका अस्य च नेति व्यङ्ग्यापेक्षया व्यञ्जकभाव एवान्वय- व्यतिरेकाभ्यामुपपादितः (तया)। अत्रापि वैजात्याद्विप्रतिपन्नं लक्ष्यसन्दर्शनेन निरुत्तरोकरोति—द्वयमित्यादि। पूर्वं समागमेन कलैका शोचनीयतां प्राप्ता सम्प्रति तु समागमप्रार्थनया द्वयमित्यर्थः। तदिह कपालेन सकलामङ्गलनिधानत्वं निन्दिताचारनिरतत्वादिकश्च व्यज्यते। ततो यस्य दर्शनस्प-

र्शनसम्भाषणादिकमपि गर्हितं तस्य समागमप्रार्थनया शोचनीयताप्रकर्षमानीयमाना कला विवक्षितार्थस्य कामपि कान्तिमुन्मीलयतीति कपालिपदस्य व्यञ्जकाश्रय्यैव वैलक्षण्यम् ।

## दीपिका

किञ्चेत्यादिना व्यञ्जनस्य तत्रावश्याङ्गीकार्यत्वादासान्तुष्टिकत्वाशङ्कांपरिहरति । अन्तरं मध्यं विशेषो वा । पदार्थान्तरैरन्वित इति । न च कस्यचित् पदस्यार्थ इत्यपि द्रष्टव्यम् । इति हेतोः । अनभिधेय इति पाठे तु अन्वितः सन्नभिधेयो नहीति विशिष्टेन नञः सम्बन्धः । एवमादीति । काश्मीरभाषयाऽसभ्यताबोधकं रुचिं कुर्वित्यादि । 'उत्कलाभाषया तु तवाण्डमर्वित्यादि । अपरित्याज्यं स्यात् व्यञ्जनानङ्गीकृतौ तु तत्प्रतीतेरसम्भवात् । अनित्यदोषत्वं रौद्रादावदुष्टत्वात् ।

अत्र खण्ड पिण्डतानामिष्टापत्तिशङ्कां परिहरति—न चेति । सर्वस्यैव गुणदोषत्वावेदिनः । विभक्ततया-स्वादव्याघातार्हत्वस्यासाधुतादौ सार्वत्रिकत्वेन कष्टत्वादौ च कदाचित्कत्वेन । त्वत्पक्षेऽपि नार्हति तर्हि विभाग इत्याह वाच्येत्यादि । व्यङ्ग्यस्य रसादेः । क्वचिदेवेत्येवकारः प्रतिनियतरौद्रादिप्रकाशकः । कस्यचित् कष्टत्वा-देरेव । तेन कष्टत्वादे रौद्रादावेव रौद्रादौ कष्टत्वाद्येवेति नियमद्वयम् । औचित्येनानुकूल्यात्तद्विपरीतस्य मृदुत्वादेर-नानुकूल्याच्चेति भावः । उपपद्यत एवेति । असाधुत्वादीनां दूषकतायाः सर्वत्रैवानुभवसाक्षिकत्वेन तद्वैलक्षण्यादि-त्यर्थः ।

अनित्यदोषाणां क्वचिदानुगुण्यं लक्ष्यदर्शनेन द्रढयति—द्वयमिति । अन्यथेति प्रथमं (म ?) शेषः । वाच्यानुगुणत्वं वाच्यस्य पठनीयस्यौचित्यप्रकाशकत्वम् । काव्यानुगुणत्वमिति पाठे काव्यबीजाद्युत्कर्षकत्वमि-त्यर्थः । अत्र हि पिनाक्यादिपदानां कपाल्यादिपदानाञ्च तुल्येऽपि भगवद्वाचकत्वे कपालसम्बन्धप्रवृत्तिनिमित्तिकेन कपालिपदेन सकलामङ्गलनिदानत्वनिन्दिताचारत्वदर्शनस्पर्शनसम्भाषणाद्यनर्हत्वादिकं व्यज्यमानं तत्सङ्गमार्थिनां शोच्यताऽतिरेकप्रकटेन तन्निन्दोत्कर्षे विश्राम्यति । न चैतद्रत्यादिजीवातुनि काव्य उपादेयं तदास्वादव्याघातकत्वा-दित्यनित्यदोषत्वमसाध्वर्थस्य । स चात्र नाभिधयोपनीत इति व्यञ्जनाभावेन तत्प्रतीतेरेव न स्यादितिकपाल्यादिपदं सर्वत्रैव वर्जनीयं स्यादित्यर्थः ।

## दर्पणः

शब्दादलङ्कृतध्वनेः सम्प्रति रसाभावतद्वरिदिति[?] नये व्यञ्जकत्वमङ्गीकार्यमिति दर्शयति । वैपरीत्यं रुचिं कुर्विति पाठः । अत्र हि चिङ्कुपदं काश्मीरादिभाषायां अश्लीलार्थबोधकम् । उत्कलादिभाषायां धृतवांडकमि-वेत्यादिकमसभ्योऽश्लीलः । अपरित्याज्यं स्यात् व्यञ्जनानङ्गीकारात्, तत्प्रतीतेरसम्भवात् ।

नित्यदोषत्वम् सार्वत्रिकत्वात् । कष्टत्वं कष्टोच्चार्थत्वम् । श्रुतिकटुत्वम्, तत्प्रभृतीनामनित्यदोषत्वम् रौद्रा-दावदुष्टत्वात् । यथा मम नृसिंहविजये

**स्फुटविकटचपेटापातनेनायमष्टौ सपदि कुलगिरीन् वा खण्डशश्चूर्णयामि ।**
**प्रलयमरुदुदारस्फीतदत्तोद्धतं वा [तं ?] प्रसृतितिरयगारा तामवातक्षिपामि[?] ॥**

तथा च ममैव—

**निःश्वासोत्पातवातप्रवधुतकुलाहार्यमुधुष्टदंष्ट्रा**
**जातः स्फुलिंगप्रकरणविरचितो त्वालिकायानिशङ्कम्।**

**अर्द्धे पारींतनर्द्धे नवमहहमहालोकमालोक्यलोकाः**
**स्तोकः स्तोकावशेषःशरणमुपययुर्वा विधिं वा [?] ॥**

सर्वस्यैव रसावेदिनः। कस्यचिद्रसादेवौचित्येन समनन्तरोक्तप्रकारेण अनित्यदोषाणां क्वचिदानुगुण्यं द्रढयति द्वयमिति। अत्र प्रथममन्यथेति शेषः। वाच्यत्वं शोचनीयत्वम्। काव्यानुनुणत्वमिति पाठे काव्यस्योत्कर्षकत्वम्। कपालिपिनाकिपदयोर्द्वयोरपि साम्येन भगद्वाचकत्वे कपालिपदेन संबन्ध निमित्तकस्य सकलामङ्गलविघ्ननिन्दितवाचकत्वादेः प्रत्यपनीतापहतपोषकत्वम्। न चैतत् शृङ्गारादिरसोचितमित्यमङ्गल-रूपाश्लीलस्यानित्यदोषता। एवञ्च व्यञ्जनाभावे कपाल्यादिपदं सर्वत्रैव वर्जनीयं स्यादिति भावः।

**साहित्यचूडामणिः**

इतोऽपि व्यङ्ग्यापलापो न शक्यक्रिय इत्याह—किञ्चेति। चिङ्कुरुशब्दस्य भाषाविशेषे ग्राम्यत्वम्। तत्र केवलस्य चिङ्कारस्य पदत्वाभावात् न पदान्तरसमभिव्यवहारः। ततश्चैतद् ध्वननापलापे परिवर्जनीयं न स्यात्। 'अपि च पौरुषेयापौरुषेयभेदभिन्नो हि शाब्दो व्यवहारः। तत्र पौरुषेयाणां वाक्यानां पुरुषेच्छानुविधानसमारोपितो-पाधिकव्यापारान्तराणां सत्यपि स्वाभिधेयाभिसंबन्धापरित्यागे किञ्चिन्मिथ्यात्वमपि संभाव्यते। अस्ति हि विभा-वानामपरित्यक्तस्वभावा नामपि सामग्र्यन्तरोपाधिवशाद् विरुद्धक्रियत्वं, यथा चन्द्रोदयादीनामाह्लदिताशेषलोकानामपि विरहाद्युपाधिवशात् सन्तापनिबन्धनत्वम्। तस्मादमीषां सत्यपि नैसर्गिके सम्बन्धे मिथ्यात्वं समर्थयितुमिच्छता वाचकत्वव्यतिरिक्तमौपाधिकं किञ्चिदभिधातव्यम्। तच्च व्यञ्जनादृते नान्य-दित्यभ्यूहनीयम्।'

युक्त्यन्तरमाह—यदि चेति। असाधुताया नित्यदोषत्वात् सर्वत्र परिहार्यत्वं, कष्टतादेस्तु शृङ्गारादौ परिहार्यता रौद्रादौ कामचार इति विभागकरणमनुपपन्नं स्यात्। न चानुपपन्नं, प्रामाणिकार्थपरित्यागानौचित्यात्। यदाह—

**श्रुतिकष्टादयो दोषा अनित्या ये च दर्शिताः।**
**ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः॥ ध्व. २.११ इति॥**

अस्मन्मते तु नायं प्रसङ्ग इत्याह—वाच्येति। इतोऽपि युक्तिमाह—द्वयमिति। कपालिशब्दे सहृदयाना-मतिमहती श्लाघा पिनाकिपदादौ न सम्पद्यते। तत्रार्थे परमेश्वराय शौर्यप्रकाशनादिनाऽपरिग्राह्यत्वमुक्तं स्यात्। कपालिशब्देन तु सर्वाकारममङ्गल्यशीलत्वमुन्मील्यते। यदाह--

**उक्त्यन्तेरणाशक्यं यत् तच्चारुत्वं प्रकाशयन्।**
**शब्दो व्यञ्जकतां बिभ्रद् ध्वन्युक्तेर्विषयीभवेत्॥ ध्व. १.१५॥ इति॥**

नन्वेष दोषतयोद्घोष्यते व्यक्तिविवेके। तथा—कपालिशब्दोऽयं धर्मिधर्मोभयार्थवृत्तिः संज्ञिमात्रं वा प्रत्याययेत्, कपालसम्बन्धकृतं गर्हितत्वरूपं धर्ममात्रं वा, उतोभयमपि। नाद्यः। गर्हिततत्वप्रतिपत्तये द्वितीयस्यापि कपालिग्रहणस्य कर्त्तव्यत्वात्। न द्वितीयः। तस्याश्रयसिद्धये तेनैव तात्पर्यायेण सर्वनाम्ना वा विशेषस्यावश्योपादेयत्वात्। नापि तृतीयः। एकस्यैव शब्दस्यावृत्तिमन्तरेण बह्वर्थप्रतिपादनसामर्थ्याभावात्। यतः—

**अर्थभेदादविभिन्नेऽपि शब्दे सादृश्यमात्रजः।**
**आवृत्तिव्यवहारोऽयं मूलमस्यैकताभ्रमः॥**

**तत्पर्यायेण तेनैव सर्वजाम्नाथ निर्दिशेत्।**
**आर्थहेतुत्वनिष्पत्यै धर्मिधर्मोभयात्मकम्॥ व्यक्तिवि. पृ० ३८९॥**

इति चेत्, न, कपालिशब्देन मुख्यया वृत्त्या परमेश्वरो धर्मी कथ्यते, व्यञ्जनेन तस्य प्रस्तुतकपटवटुवेषवक्तृत्वोचितं गर्हितत्वम्। शब्दभेदस्तच्छक्तिभेद इति क्रियानयं विशेष इति न किंचिदत्र वाच्यावचननिबन्धनमनौचित्यम्। एवञ्च 'द्वयं गतं सम्प्रति तस्य शोच्यतामि'ति सर्वनाम्ना पाठान्यथाकरणं प्रतिज्ञाभङ्गकल्पम् इत्यलमग्रहीताग्रहेण।

### सम्प्रदायप्रकाशिनी

इयता सन्दर्भेण साहित्यसरणिपरिशीलनपराङ्मुखतया पशुप्रायाः शुष्कमीमांसवः प्रत्यवतिष्ठमाना निष्कासिताः। सम्प्रति तु येऽन्विताभिधानदर्शनानुसारिणः साहित्यसरणिमनुप्रविष्टाः सचेतनम्मन्यास्तान् प्रति सन्नह्यते—किञ्च कुरु रुचिमित्यादिना। 'कुरु रुचिमि'ति पदे यदि व्यत्ययेन काव्यान्तरवर्तिनी स्यातां तदा दुष्टता येयमश्लीलत्वलक्षणा सम्मता, सान्विताभिधानाभ्युपगमे कथं वा उपपद्यताम्। न हि पदयोरनयोरन्त्याद्यक्षरसन्निकर्षमात्रादाभासमानो लौकिकौ ग्राम्योऽर्थोऽर्थान्तरेणान्वितः शब्दार्थ एव भवति। ततोऽशब्दार्थस्य दोषत्वेऽतिप्रसक्तिः स्यादित्येवमाद्यपरित्याज्य स्यात्। अयमन्विताभिधानदर्शनाश्रयणे दोषो भवताम्।

### मधुमती

ननु न ब्रूमः शब्दश्रुतेरनन्तरं यावानर्थः प्रतीयते तावान् इतरनिरपेक्षयैव अभिधया प्रतिपाद्यते इति। मा भूदाकाङ्क्षां विनाऽपि शाब्दबोधश्च। किन्तु श्रुत्यादौ पूर्वपूर्वसहकारेण उत्तरोत्तरं अभिधया उपस्थाप्यमिति। एवं च क्व सूत्रविरोधः? इत्यस्वरसादाह—किञ्चेति। वैपरीत्ये 'रुचिङ्कुरु' इत्यादिरूपे। इह हि काश्मीरैः योन्यन्तर्वर्तिनि अङ्कुरे चिङ्कुरु शब्दः प्रयुज्यते। तेन अश्लीलार्थप्रतीत्या दुष्टत्वम्। तच्च न स्यात् इत्यर्थः। व्यङ्ग्यस्य अभिधालभ्यत्वे योग्यताविरह एव दोषः स्यात्, न तु अश्लीलत्वादिकमिति भावः।

कष्टत्वादीनामिति। न ज्ञानकादाचित्कत्वनिबन्धनं दोषाणां अनित्यत्वम्। तथासति सर्वदोषाणामपि तथात्वापत्तेः। किन्तु चमत्कारकादाचित्कत्वनिबन्धनमेव। यद्ज्ञाने सति एकत्र चमत्कारानुत्पत्तिः, तद्ज्ञाने एव अपरत्र चमत्कारोत्पत्त्या च अनित्यत्वं निर्बाधम्। इह च कष्टत्वादेः शृङ्गारे चमत्काराभावेऽपि रौद्रे चमत्कारो भवत्येव। अभिधयोपस्थाने तु—कष्टत्वज्ञानस्य अप्रतिबन्धकत्वे अदोषत्वम्, प्रतिबन्धकत्वे तु नित्यदोषत्वमिति स्यात्, न तु अनित्यदोषत्वमिति भावः। ननु तथापि कथमनित्यदोषत्वं तस्य? इत्यत आह—वाच्येति। तथाच—

व्यञ्जनायां औचित्यज्ञानं सहकारि इति, शृङ्गारव्यञ्जने तद्गुणव्यञ्जनमावश्यकम् । न हि गुण्यभिव्यक्तौ योग्या अपि गुणाः न भासन्ते इति सम्भवति । शृङ्गारे च माधुर्यं गुणः । माधुर्यस्य च सुकुमारवर्णाभिव्यङ्ग्यत्वं उचितमेवेति तत्र कष्टत्वं दोषः । रौद्रे तु ओजो गुणः । स च दीप्त्यात्मकः इति तद्व्यञ्जकशब्दानां कष्टत्वमुचितमिति तत्र कष्टत्वं न दोषः । एवं अस्य अनित्यदोषता इति भावः ।

कपाल्यादीति । पिनाकिकपालिपदयोः अभिधया अभिधेयोपस्थापने विशेषाभावः । न च कपालसम्बन्धबोधकत्वमेव विशेषः । व्यञ्जनानभ्युपगमे तावन्मात्रविशेषस्य अप्रयोजकत्वात् । अन्यथा कपालसम्बन्धबोधस्येव पिनाकसम्बन्धबोधस्यापि विशेषतया कथं न तस्य काव्यानुगुणत्वम् ? । व्यञ्जनाभ्युपगमे तु कपालिपदेन बीभत्सालम्बनत्वं व्यज्यते । तेन च परमेश्वर्याः वैदग्ध्यातिशयः प्रतिपाद्यते इति काव्यप्रतिपाद्यनिन्दनीयत्वानुगुण्येन काव्यानुगुणत्वमिति द्रष्टव्यम् ।

### विस्तारिका

अन्यथा जनितखण्डवाक्यार्थबोधस्य वाक्यस्य महावाक्यार्थबोधकत्वं न स्यादित्याह—किञ्चेति । वैपरीत्ये रुचिं कुर्विति रूपे दूष्यत्वम्, सन्धौ चिङ्कुपदस्य निष्पादनादतिगर्हिततत्वेन लिखनेऽपि तद्रूपानुट्टङ्कनात् । ननु 'चिङ्कु'पदस्यापि वाचकत्वमित्यत आह—नहीति । असभ्योऽर्थो व्यङ्ग्यो वराङ्गरूपः । अन्वित इति । तत्रैवाभिधोपगमात् । व्यञ्जनानङ्गीकारेऽन्वितस्यासभ्यार्थस्याशक्यतया वृत्त्यभावेन तं प्रत्यबोधकस्य चिङ्कुपदस्य दुष्टता न स्यादित्याह—एवमादीति । यदि चेति । अभिधया बोध्यत्वं बोधकत्वं क्रमेणावाच्यत्वं वाचकत्वम् । एवं व्यङ्ग्यव्यञ्जकभावोऽपि । असाधुत्वं व्याकरणव्युत्पत्तिविरहः । अस्य चेवादिपदस्य वर्वरताप्रकर्षकता । तदाह—नित्येति । कष्टत्वं श्रुतिकटुता, अनित्यदोषत्वं रसविशेषापकर्षकता तदुक्तम्—

**श्रुतिदुष्टादयो दोषा अनित्या ये प्रदर्शिताः ।**
**ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः ।।**

इति सर्वैः सहृदयैर्व्यञ्जनोपगमे । विभागबीजमाह—वाच्यवाचकेत्यादि । क्वचिदति । मधुरे शृङ्गारे रसे मधुरवर्णस्यौचित्यम्, माधुर्यव्यञ्जकत्वात्; न तु श्रुतिकटोस्तद्विरोधेन ओजसो व्यञ्जकत्वेनापकर्षकत्वात् ।

तदाह—कस्यचिदौचित्यमिति । ओजस्विषु वीरबीभत्सरौद्रेषु पुनस्तस्यौचित्यमिति विभागव्यवस्था नित्यानित्यत्वेनेत्यर्थः ।

माधुर्यानाश्रयरसपरत्वेनैव श्रुतिकटोरनित्यदोषत्वं ब्रूम इत्याह—द्वयमिति । सम्प्रति द्वयं गतमित्यन्वयः । पूर्वमेकमेवासीत्, प्रार्थना च प्राचीना अर्वाचीना च ।

अत्र हि महादेवनिन्दायां तात्पर्यम् । तत्र पिनाक्यादिपदोपादाने पिनाकवत्तया वीरावगतेर्न निन्दा स्यादित्याह—पिनाक्वादीत्यादि । कपाल्यादि । अशुचिनरशिरःकपालधारणेन दर्शनानर्हतया हेयता अवगम्यते । नायमर्थः कस्यापि वाच्य इति व्यञ्जनैव लब्धप्रसरेत्याह—काव्यानुगुणत्वमिति । अनुगुणत्वमुत्कर्षकत्वम् ।

### सारबोधिनी

किञ्चेति । क्वन्तर्वतिर्ननि कुशब्दोऽन्तर्वर्ती यत्र तादृशे वैपरीत्ये रुचिं कुर्विति पाठे दुष्टत्वम् । सन्धौ चिङ्कुपदस्य निष्पादनात् । क्वचित्काव्यान्तर्वर्तिनीत्यपि पाठः सुगमः । ननु चिङ्कुपदस्य वाचकत्वमेवेत्यत आह नहीति । असभ्योऽर्थो व्यङ्ग्यो वराङ्गरूपः । अन्वित इति । तत्रैवाभिधाङ्गीकारात् । व्यञ्जनानङ्गीकारेऽनन्वितस्यासभ्यार्थस्याशक्यतया वृत्त्यभावेन तं प्रत्यबोधकस्य चिङ्कुपदस्य दुष्टता न स्यादित्याह एवमादीति । एवमादि पदमिति शेषः । अपरित्याज्यं काव्य इति शेषः ।

यदि चेति । असाधुत्वं व्याकरणव्युत्पत्तिविरहः । कष्टत्वं श्रुतिकटुता । अनित्यदोषत्वं । रसविशेषापकर्षकत्वम् सर्वैः सहृदयैः व्यञ्जनोपगमे विभागबीजमाह वाच्यवाचकेत्यादि । क्वचिदिति मधुरे शृङ्गारादिरसे मधुरवर्णस्यौचित्यम् । द्वयमिति । सम्प्रति द्वयं गतमित्यन्वयः । यत्र हि शिवनिन्दायां तात्पर्यम् तत्र पिनाक्यादिपदोपादाने पिनाकवत्तया वीरागते निन्दा न स्यादित्याह पिनाक्यादीति। अशुचिकपालधारणया स्पर्शाद्यनर्हतया हेयताऽवम्यते । तेनायमर्थः । कस्यापि न वाच्य इति व्यञ्जनैव लब्धप्रसरा इत्याह काव्यानुगुणत्वमिति । अनुगुणत्वमुत्कर्षकत्वम् ।

### काव्यप्रदीपः

पूर्वोक्त इषुदृष्टान्तो वैषम्यादनुपपन्नः । तथाहि तत्र वेगव्यापारश्च स्वरूपमत एव जनकतया दीर्घदीर्घतरत्वं संभवति । अभिधायास्तु ज्ञातवा एवानुकूलत्वाव्यङ्ग्यनिष्ठतया चाज्ञानादित्यन्विताभिधानवादेऽपि 'निःशेष—' इत्यादौ विधेर्व्यङ्ग्यत्वमेवेति स्थितम् । किं च यदि वस्तुगत्या पदार्थान्तरेण योऽन्वितः सोऽभिधयोपस्थाप्यत इत्यन्विताभिधानं तदावश्यं व्यञ्जना स्वीकार्या । अन्यथा 'रुचिं कुरु' इत्यादिशब्दस्य दुष्टत्वं न स्यात् । दुष्टिहेतोरसभ्यार्थोपस्थितेस्तत्राभावप्रसङ्गात् । तदर्थस्यान्यानन्वितत्वात् । किं च वाच्यवाचकभावातिरेकी व्यङ्ग्यव्यञ्जकभाव इत्यवश्यं काव्यज्ञदृष्ट्यापि स्वीकर्तव्यम् । अन्यथा कष्टत्वादयोऽनित्यदोषाः असाधुत्वादयो नित्यदोषा इति विभागो न स्यात् । वाच्यस्याविशेषेण कष्टत्वादीनामपि सर्वत्र दुष्टत्वस्यादुष्टत्वस्य वा प्रसङ्गात् । व्यञ्जनाभ्युपगमे तु व्यञ्जनीयस्य बहुविधत्वेन रौद्रादौ व्यङ्ग्येऽनुकूलत्वं शृङ्गारादौ तु दुष्टत्वमिति युज्यते विभागव्यवस्था । एवं पर्यायेषु मध्ये कस्यचिदेव कुत्रचित्काव्यानुगुणत्वमित्यपि व्यवस्था न स्यात् । दृश्यते चासौ । यथा—'द्वयं गतं संप्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।' इत्यादौ न पिनाक्यादिपदमनुकूलम् । किं तु जुगुप्साव्यञ्जकतया कपालिपदमेव । ननु द्वयमप्येतदयुक्तम् । व्यङ्ग्यत्वेनाभिमतस्य वाच्यत्वस्वीकार एवानुकूलत्वप्रतिकूलत्वयोर्व्यवस्थोपपत्तेरिति चेत्, न । अभिधास्वीकारे संकेतग्रहं विना तदनुपस्थितिप्रसङ्गस्योक्तत्वात् । किं च काव्ये शास्त्रे वा वाच्यव्यङ्ग्ययोः प्रतिपत्तिहेतुव्यापारभेदनिबन्धनो भेदोऽवश्यं स्वीकर्तव्यः । वैधर्म्यदर्शनात् ।

### आदर्शः

ननु अभिधाया एव दीर्घत्वं दीर्घतरत्वञ्चेति द्वैविध्यम्, तथाच दीर्घतरीभावेनैव लक्ष्यार्थोपस्थापनाद् विलम्ब एवेत्यत आह—किञ्चेति । 'वैपरीत्ये'रुचिङ्कुर्वित्येवं प्रयोगे । कथं दुष्टत्वमिति, पदद्वयीयवर्णद्वयेन '"चिङ्कु' शब्दोत्पत्तौ तस्य स्त्रीगुह्याङ्गव्यञ्जकत्वेनैव हि दुष्टत्वम्, व्यञ्जनाभावे तु कथं तद् दुष्टं स्यादित्यर्थः । ननु दीर्घतरीभू-

ताभिधयैव तदुपस्थापनाद्दुष्टत्वं स्यादित्यत आह—न ह्यत्रेति । असभ्यः चिङ्कुशब्दार्थः शक्यलक्ष्यार्थयोस्तद्वाक्यस्थपदार्थान्तरान्वितत्वनियमादिति भावः । 'अपरित्याज्यं' दुष्टत्वेन अहेयम् ।

ननु दीर्घतरीभूताभिधोपस्थापितार्थस्य पदार्थान्तरान्वितत्वनियमो न वाच्य इत्यत आह—यदि चेति । नित्यत्वमत्र सर्वरससाधारण्यम्, अनित्यत्वं रसविशेषीयत्वम् । अनुपपन्नं स्यादिति, श्रुतिकट्वादीनां हि ओजोगुणव्यञ्जना अनोजस्विनि शृङ्गारादौ दुष्टत्वम् ओजस्विनि वीरादौ तु अदुष्टत्वम्, व्यञ्जनाभावे तदनुपपन्नं स्यादित्यर्थः । न च दीर्घतराभिधयैव तदुपस्थापनादुपपत्तिरिति वाच्यं निर्द्धर्मकस्य ओजोगुणस्य वीरादौ प्रतीतेरानुभविकत्वेन अभिधायास्तादृशोपस्थापकत्वाभावात् । नन्वेवं व्यञ्जनाया अपि कथं तादृशोपस्थापकत्वमित्यत आह—वाच्यवाचकेति । बहुविधत्वादिति, क्वचित् सधर्मक एव व्यङ्ग्यार्थ उपतिष्ठते क्वचिन्निर्द्धर्मक इत्येवं विधाबाहुल्यादित्यर्थः । ननु जातिशक्तिवाद इव पदादपि निर्विकल्पकोपस्थितिर्मया वाच्येत्यत आह—द्वयमिति ।

**द्वयं गतं सम्प्रति शोचनीयतां समागमप्रार्थनया कपालिनः ।**
**कला च सा कान्तिमती कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी ॥**

इति पार्वत्यां महेशनिन्दाश्लोके कपालधारित्वेन महेशनिन्दा व्यज्यते, अतस्तत्र कपालिपदस्वानुगुण्यम्, व्यञ्जनाभावे तु किमिति तस्यानुगुण्यमित्यर्थः ।

**सुधासागरः**

किञ्च-यदि वस्तुगत्या पदार्थान्तरेण योऽन्वितः सोऽभिधयोपस्थाप्य इत्यन्विताभिधानं तदाऽवश्यं व्यञ्जना स्वीकार्याः । अन्यथा 'रुचिं कुरु' इत्यादिशब्दस्य दुष्टत्वं न स्यात्, दुष्टिहेतोरसभ्यार्थोपस्थितेस्तत्राभावप्रसङ्गात् । तदर्थस्यान्यानन्वितत्वात् । तदेतदाह—किञ्चेत्यादि । 'क्वन्तर्वर्त्तिनि'—'कुशब्दोऽन्तर्वर्त्ती यत्रेत्यर्थः । अत्रान्वित इति । तत्रैवाभिधानाङ्गीकारात् । व्यञ्जनानङ्गीकारेऽनन्वितस्यासभ्यार्थस्याशब्दतया वृत्त्यभावेन तं प्रत्यबोधकस्य चिङ्कुपदस्य दुष्टता न स्यादित्याह । एवमादीति—एवमादिपदमिति शेषः । अपरित्याज्यं काव्ये इति शेषः ।

यदि चेति । असाधुत्वं व्याकरणव्युत्पत्तिविरहः । कष्टत्वं श्रुतिकटुता । अनित्यत्वं—रसविशेषापकर्षत्वम् । अयं भावः—वाच्यवाचकभावातिरेकी व्यङ्ग्यव्यञ्जकभाव इत्यवश्यं काव्यज्ञदृष्ट्याऽपि स्वीकर्त्तव्यम् । अन्यथा कष्टत्वादयोऽनित्यदोषाः असाधुत्वादयो नित्यदोषा इति विभागो न स्यात्, [सर्वत्र दुष्टत्वस्याऽ] दुष्टत्वस्य वा प्रसङ्गात् । अयमर्थः—असाधुत्वज्ञानस्य यथा वाक्यार्थज्ञानविघटकत्वात्, तत्सत्त्वे क्वचिदपि न चमत्कारः, सर्वत्र चमत्काररस्य वाक्यार्थज्ञानाधीनत्वात् तद्वच्छ्रुतिकटुत्वादेरपि व्यञ्जनाऽनङ्गीकारे वाक्यार्थज्ञानविघटकत्वेनैव दोषत्वं वाच्यम्, तदविघटकत्वेऽदोषतापत्तेः । तथा चात्रापि नित्यदोषता स्यादिति । व्यञ्जनाऽभ्युपगमे तु व्यञ्जनीयस्य बहुविधत्वेन रौद्रादिव्यङ्ग्येऽनुकूलत्वं शृङ्गारादौ तु दुष्टत्वमिति युज्यते विभागव्यवस्था । एवं पर्यायेषु मध्ये कस्यचित्काव्यानुगुणत्वमित्यपि व्यवस्था न स्यात्, वाच्यार्थस्याविशेषात् । दृश्यते चासौ । यथेत्याह—द्वयमित्यादि ।

कुमारसम्भवे कपटवटोः पार्वतीं प्रति शिवनिन्दापरेयमुक्तिः । अयमर्थः—हे पार्वति एतावत्कालमयोग्यसङ्गात्कलावतश्चन्द्रस्य कान्तिमती कलैव शोचनीयाऽऽसीत् । सम्प्रति सा च कपालिनः समागमप्रार्थनया अस्य

लोकस्य नेत्रकौमुदी त्वं चेति द्वयं शोचनीयतां गतमिति। अत्र कपालिपदेनाशुचिबीभत्सकपालधारणया स्पर्शे दर्शनेऽप्ययोग्यतया सर्वथा हेयत्वं व्यज्यते। कपालिस्थाने पिनाकिपदप्रयोगे तु कपालिपिनाकिपदयोरभिधेयोपस्थापनाऽविशेषेऽपि पिनाकवत्तया वीरावगतेर्निन्दा न स्यात्। न च कपालसम्बन्धबोधकत्वमेव विशेषः। व्यञ्जनाऽनभ्युपगमे तावन्मात्रविशेषस्याप्रयोजकत्वात्। अन्यथा कपालसम्बन्धबोधस्येव पिनाकसम्बन्धबोधस्यापि विशेषतया कथं न तस्य काव्यानुगुणत्वं स्यादिति सुधीभिर्ध्येयम्।

---

अपि च वाच्योऽर्थः सर्वान् प्रतिपत्तॄन् प्रति एकरूप एवेति नियतोऽसौ । न हि 'गतोऽस्तमर्कः' इत्यादौ वाच्योऽर्थः क्वचिदन्यथा भवति । प्रतीयमानस्तु तत्तत्प्रकरणवक्तृप्रतिपत्त्रादिविशेषसहायतया नानात्वं भजते । तथा च 'गतोऽस्तमर्कः' इत्यतः सपत्नं प्रत्यवस्कन्दनावसर इति, अभिसरणमुपक्रम्यतामिति, प्राप्तप्रायस्ते प्रेयानिति, कर्मकरणान्निवर्तामहे इति, सान्ध्यो विधिरुपक्रम्यतामिति, दूरं मा गा इति, सुरभयो गृहं प्रवेश्यन्तामिति, सन्तापोऽधुना न भवतीति, विक्रेयवस्तूनि संह्रियन्तामिति, नागतोऽद्यापि प्रेयानित्यादिरनवधिर्व्यङ्ग्योऽर्थस्तत्र तत्र प्रतिभाति ।

---

### सङ्केतः

पुनरपि अन्विताभिधायिनं दूषयति—अपि चेति ।तत्र तत्रेति । प्रस्तावववक्तृप्रभृतिविशेषे इत्यर्थः ।

### बालचित्तानुरञ्जनी

इदानीं वाच्यस्यैकविधत्वं व्यङ्ग्यस्य बहुविधत्वं विविच्य दर्शयति अपि च वाच्य इत्यादिना । अनवधिरनन्तः, वाच्यस्यैकविधत्वाद्व्यङ्ग्यस्य बहुविधत्वादुभयोर्भेदोऽङ्गीकर्तव्य इत्यर्थः ।

### काव्यादर्शः

पुनर्वाच्यव्यङ्ग्ययोर्भेदं दर्शयनन्विताभिधानवादिनां दोषमाह—अपि चेति ।

### विवेकः

किन्त्वे (किञ्चै) तद्विपययोर्वाच्यव्यङ्ग्ययोरेकत्वानेकत्वकृतोऽपि भेदोऽस्तीत्याह—अपि चेति । न च प्रकरणादिलक्षणप्रमाणान्तरानुपगमेनात्मलाभादस्य शब्दत्वहानिः स्यादिति वाच्यम्, प्रमाणान्तरोपनिपातस्य क्वचिच्छब्दव्यापारविषयत्वहानिं प्रत्यनिमित्तत्वात् । इतरथा वाचकप्रतिपादितेऽर्थे सत्योऽयं न वेति निश्चयार्थमाप्तोक्तत्वादिप्रमाणान्तरानुपगमेन सम्यक्त्वप्रतीतौ क्रियमाणायां तस्यापि वाच्यस्योक्तप्रमाणान्तरविषयत्वसद्भावाच्छाब्दत्वं न स्यात् ।

तदित्थमुपपादितमपि भेदं शिष्याणामेकप्रघट्टकेन हृदि निवेशयितुं स्वरूपकालाश्रयनिमित्तकार्यसंख्याभेदतो दर्शयति—वाच्यव्यङ्ग्ययोरिति । यद्येतावताऽपि भेदो न स्यात्तदा नीतानीतादो (नीलपीतादौ) भेदो न स्यादिति सङ्गतिः । तत्र विधिनिषेधो सन्देहनिश्चयौ निन्दास्तुतौ च परस्परभिन्नस्वरूपे बालस्यापि सुप्रसिद्धौ ।

### दीपिका

किञ्चैकत्र वाक्ये एकैवाभिधा शक्तिर्व्याप्रियत इति भवद्भिरपि स्वीक्रियते, प्रतिपाद्यप्रतिपादकादि-भेदेऽपि वाच्यस्याभेददर्शनात् ।

व्यञ्जना तु सहकारिचक्रसाचिव्येनैकस्मिन्नपि वाक्ये क्वचन काव्ये क्वचनैव व्याप्रियते, प्रतीतेर्विषयनियमदर्शनादित्यभिधातो व्यक्तेर्वैलक्षण्यमित्याह—अपिचेति । वाच्योऽर्थः समभिव्याहृतपदबोध्यः । नियतः पुरुषादिभेदेऽप्यविसंवादिस्वरूपः । अवस्कन्दनं प्रसभावमर्दनम् सुरभयो गावः । इत्यादिरनवधिरनन्तः । अनवधिव्यङ्ग्य इति पाठे कर्मधारयः तत्र तत्र प्रस्तावे ।

### दर्पणः

किञ्चैकत्र वाक्ये एक एवाभिधेयः व्यङ्ग्यस्तु वक्त्रादिवैचित्र्यादनेक इत्यभिधातो विलक्षणैव व्यञ्जनेत्याह अपि चेति । वाच्योऽर्थः समभिव्याहृतपदबोध्यः । अवस्कन्दनं प्रसभमवमर्द्दनम् । सुरभयो गावः ।

### साहित्यचूडामणिः

अथ वाच्यव्यङ्ग्ययोः पूर्वस्मिन्नुत्तरस्यान्तर्भावो नोपपद्यते, येन संख्यास्वरूपकालाश्रयकारणकार्यविषयादीनां वैलक्षणमित्युद्भावयिष्यन्नादौ संख्याभेदमाह—वाच्य इति । गतोऽस्तमर्क इत्यत्र न कदाचिद् वाच्यभेदः सर्वत्र सूर्यास्तमयाविशेषात् । प्रतीयमानस्तु बहुसंख्याको भवति । तत्र प्रकरणादिवैशिष्ट्यं सहकारि । अवस्कन्दनेत्यादि चोरादिवक्तृत्वे । अभिसरणमित्याद्यभिसारिकाविषये । एवमन्यदुन्नेयम् । इत्यादिरिति । प्रदीपः प्रज्वाल्यतां, कुमुदान्यपचीयन्तां, नेदानीं स्नानौचित्यमित्यादि ।

### सम्प्रदायप्रकाशिनी

अथ यद्वा तद्वास्तु दर्शनाश्रयणम् । व्यङ्ग्यव्यञ्जकभावानाश्रयणे वाच्यवाचकभावाश्रयणमात्रेण नैषा दोषाणां निष्कृतिरित्याह—यदि च वाच्यवाचकेत्यादिना । असाधुत्वं व्याकरणविरोधः । कष्टत्वं श्रुतिकटुत्वम् । असाधुत्वादयो हि नित्यदोषत्वेन, कष्टत्वादयस्त्वनित्यदोषतया भवतामपि सम्मताः । तदिदं विभागकरणमनुपपन्नं स्यात् । न चानुपपन्नं, विभागव्यवस्थानात् । वाच्यः सर्वत्र वक्तृबोद्धव्यवैशिष्ट्यसद्भावेऽपि सर्वान् प्रत्येकरूप इति का तत्र दोषव्यवस्थेति भावः । नन्वयं दोषस्तवापि किं न समान इत्यत आह—वाच्यवाचकभावेत्यादिना । यदि वाच्यवाचकभावातिरेकिव्यङ्ग्यव्यञ्जकभाव आश्रीयेत तदा वक्त्रादिवैशिष्ट्याद् व्यङ्ग्यं बहुविधमिति क्वचिदेव किञ्चिदेवोचितं स्यात् न तु सर्वं सर्वत्र । अत उपपद्यत एव विभागव्यवस्था । यो हि 'वर्वष्टी' त्याद्यात्मकः कष्टत्वादिदोषः स वैयाकरणादौ वक्तरि तवापि गुणत्वेन सम्मतः, अन्यदा तु दोषत्वेन । सोऽयं विभागो वाच्यवाचकभावमात्राश्रयणे नोपपद्यते, तस्य सर्वस्यैकरूपत्वात्; तदतिरेकिव्यङ्ग्यव्यञ्जकभावाश्रयणे तु श्रुतिकटुत्वमपि प्रक्रियामात्रव्यवस्थितस्य वैयाकरणस्य वराकस्य न काककल्पतामाविष्करोति, प्रत्युत गुण एवेति विभागोऽयमुपपद्यत एव । तमिमं विभागमुदाहरणेन हृदयङ्गमयति—'द्वयं गतं सम्प्रती'त्यादि । तपस्तप्यमानां भगवतीं गिरिदुहितरं प्रति दयानिधेः कुहनाब्रह्मचारिणो देवस्य पशुपतेस्तदभिप्रायपरिज्ञानायेयमुक्तिः । अत्र

कपालोपलक्षितत्वादमङ्गलस्वभावस्य कपालीत्येव संज्ञितस्य समागमाभ्यर्थनया सा कर्पूरशलाकाश्लक्ष्णशीतलावदाता सुधादीधितेर्निष्कलङ्का कला, सर्वस्यैव जगतः सर्वदा लोचनशरच्चन्द्रचन्द्रिकायमाणा त्वं चेत्येतदुभयं सम्प्रति शोचनीयतां गतं, पूर्वं तु सैकैवेति, गोपिताकारस्य पशुपतेर्देव्यभिप्रायपरिज्ञानाय स्वात्मगर्हणप्रस्तावे वाच्यः कपालित्वादिर्व्यङ्ग्यदशायामौचित्यं लभते । अयमश्लीलाख्योऽर्थदोषः । कष्टत्व शब्ददोषः । तस्यातिस्फुटत्वादादिशब्दोपसंहृतोऽयमेवोदाहृतः । पुनस्तरां वाच्यस्य सर्वप्रतिपत्रपेक्षयैकरूतां, व्यङ्ग्यस्य तु प्रकरणादिवैशिष्ट्यात् प्रतिपत्तृभिन्नरूपतां च वितत्य दर्शयति—अपि च वाच्योऽर्थ इत्यादिना । न हि 'गतोऽस्तमर्क' इत्यत्र वाच्यस्यार्कास्तमयरूपस्य प्रतिपत्तृविशेषापेक्षया वैचित्र्यं किञ्चित् । अतो नियत एवासौ । व्यङ्ग्यस्तु समुचितप्रकरणवक्त्रादिवैशिष्ट्यसहायो नानात्वमापद्यते । 'गतोऽस्तमर्क' इत्यतो वाक्याद्धि चौर्यादिप्रस्तावे सम्प्रत्यवस्कन्दनावसर इति व्यङ्ग्योऽर्थः । एवं तत्तत्प्रकरणवक्त्रादिवशादभिसरणमुपक्रम्यतामित्यादि । तत्र तत्रेति । प्रकरणादिवैशिष्ट्यशालिनि विषयविशेषे ।

## मधुमती

भेदकान्तरमाह—अपि चेति । तथाच—औचित्यस्वरूपादिभेद; व्यञ्जनायां उपपद्यते, न तु अभिधायाम् इति प्रघट्टकार्थः ।

## विस्तारिका

व्यङ्ग्यव्यञ्जकत्वयोर्वाच्यवाचकत्वाभ्यां भेदमुक्त्वा वाच्यव्यङ्ग्यस्य भेदमाह—अपि चेत्यादि । सर्वानविदग्धान् विदग्धांश्च, शक्यतावच्छेदकस्यैकत्वेनैकरूपता, विशेषणे तृतीया । सर्वत्रैकरूपवैशिष्ट्यमित्यर्थः । अन्यथा शक्यतानवच्छेदकः प्रकारः प्रतीयमानो व्यङ्ग्यः, सहार्थेत्यन्तो बहुव्रीहिः । नानात्वं प्रकारवैचित्र्यम् ।

कैतदित्याह—तथा चेति । अवस्कन्दनं युद्धान्निवर्तनम् । रात्रियुद्धस्य छलबहुलत्वेनाधर्मत्वात् । इदं योधं प्रति । अभिसरणमभिसारिकां प्रति । प्राप्तप्रायः सम्भावितप्राप्तिक इति वासकसज्जां प्रति । कर्मकरणान्निवर्तनं वैतानिकं प्रति । सन्ध्यावन्दनं ब्राह्मणं प्रति । दूरगमननिषेधः पथिकं प्रति । सुरभय इति गोरक्षिणः प्रति । सन्ताप इति आतपभीतं प्रति । विक्रेयेति वणिजं प्रति । नागत इति विरहिणी प्रति । निरवधिरिति बोद्धृभेदादित्याह । तत्र तत्रेति बोद्धरि बोद्धरीत्यर्थः ।

## सारबोधिनी

किञ्च वाच्यव्यङ्ग्ययोर्वाच्यः साधारणो व्यङ्ग्यस्तु नानारूपः प्रकाशत इत्यतोऽपि वाच्याद्व्यङ्ग्यस्य भेद इत्याह वाच्योऽर्थ इति । ननु नैतद्वैधर्म्यं नानार्थसैन्धवपदे नानार्थावगमदर्शनादिति चेन्न । तत्र यथानुशासनमेव बोधनात् । प्रकृते त्वनियतस्यैवेत्यस्य भेदकत्वात् ।

अत एवोक्तमनवधिर्व्यङ्ग्योऽर्थस्तत्र तत्र प्रतिभातीति । अवस्कन्दनं प्रसभमवमर्दनम् । तत्र तत्र बोद्धरि योधाभिसारिकावासकसज्जावैतनिकब्राह्मणपथिकगोरक्षकसन्तापभीतवणिग्विरहिण्यादिरूपे इत्यर्थः ।

## काव्यप्रदीपः

वाच्यो ह्यर्थः सर्वैरेक एव प्रतीयत इति नियतः। व्यङ्ग्यस्तु वक्तृप्रकरणादिवशादनियतः। तथा हि 'गतोऽस्तमर्कः' इति वाक्ये राज्ञः सेनापतीन्प्रति शत्रूणां हठेनामर्दनावसर इति, दूतीनामभिसारिकाः प्रति अभिसरणमुपक्रम्यतामिति, सख्या वासकसज्जां प्रति प्राप्तप्रायस्ते प्रेयानिति, कर्मकरस्य सहकर्म कुर्वतः प्रति कर्मकरणान्निवर्तामह इति, भृत्यस्य धार्मिकं प्रति सांध्यो विधिरुपक्रम्यतामिति, आप्तस्य कार्यवशेन बहिर्गच्छतः प्रति दूरं मा गा इति, गृहिणो गोपालकं प्रति सुरभयो गृहं प्रवेश्यन्तमिति, दिवसेऽतिसंतप्तस्य बन्धून्प्रति संतापोऽधुना न भवतीति, आपणिकानां भृत्यान्प्रति विक्रेयवस्तुनि संह्रियन्तामिति, नायकागमनप्रस्तावे प्रोषितभर्तृकायास्तत्कथकं प्रति नागतोऽद्य प्रेयानिति, एकस्यैव वा वक्तुर्बहून्प्रति तत्तत्प्रकरणवशादेवमादिरनबधिव्यङ्ग्योऽर्थः प्रकाशते। वाच्यस्तु सर्वान्प्रत्यविशिष्ट एव। ननु नैतद्वाच्यवैधर्म्यम्। नानार्थसैन्धवादिपदे नानार्थावगतिदर्शनादिति चेत्, न। एकवाक्यवर्तिनस्तस्याप्यर्थैक्यनियमात्। यद्ग्रे वक्ष्यति—"लक्षणीयार्थस्य नानात्वेऽप्यनेकार्थपदाभिधेयवन्नियतत्वमेव' इति। तथापि यत्र लवणाद्यधिकारिणः प्रति सकलस्वामिनः 'सैन्धवमानय' इति पदप्रयोगस्तत्रानियतत्वं दुर्वारमिति चेत्, न। तात्पर्याज्ञानात्। न ह्यत्र सर्वैर्वाच्यैः समं सर्वव्यङ्ग्यानां भेदः प्रतिपद्यते। किं तु 'गतोऽस्तमर्कः' इत्यस्य वाच्यव्यङ्ग्ययोः। तथा च तद्वाच्यस्य नियतत्वम्। तदर्थपुरस्कारेणैव सर्वेषां व्यङ्ग्यस्यापि प्रतीतेः।

## आदर्शः

नन्वत्र दत्तमेवोत्तरम्, व्यञ्जनास्थानीयत्वादेव दीर्घतरीभूताभिधाया इत्यत आह—अपि चेति। तत्तत्प्रकरणवक्त्रिति, तथाच सर्वप्रतिपत्तृष्वेकविधार्थबोधकत्वमभिधायाः, व्यञ्जनायास्तु नानाप्रतिपत्तृषु नानाविधार्थबोधकत्वमिति वैलक्षण्यमेव भेदकमित्यर्थः। प्रकरणादिभेदास्तु तत्तत्प्रतिपत्तृबोध्यान् नानाविधार्थान् दर्शयति—तथाहीति, सपत्नं प्रतीति। 'अवस्कन्दनम्' आक्रमणम्, अत्र कूटयोधी प्रतीपत्ता। अभिसरणमित्यत्र अभिसारिका, प्राप्तप्राय इत्यत्र विरोहोत्कण्ठिताः, कर्मकरणादित्यत्र भृतकाः, सान्ध्य इत्यत्र ब्राह्मणाः, दूरमित्यत्र पथिकाः सुरभय इत्यत्र गोरक्षकाः सन्ताप इत्यत्रातपक्लान्ताः, विक्रेयेत्यत्र विक्रेतारः, नागत इत्यत्र प्रोषितभर्त्तृकाश्च प्रतिपत्तारः।

## सुधासागरः

अपि च वाच्योऽर्थ इत्यादि। अयमाशयः-काव्ये शास्त्रे वा वाच्यव्यङ्ग्ययोः प्रतिपत्तिहेतुव्यापारभेदनिबन्धनो भेदोऽवश्यं स्वीकर्त्तव्यः, वैधर्म्यदर्शनात्। वाच्यो ह्यर्थः सवैरेक एव प्रतीयते इति नियतः। व्यङ्ग्यस्तु वक्तृप्रकरणादिवशादनियतः। तथा हि—गतोऽस्तमर्क इति वाक्ये राज्ञः सेनापतीन्प्रति शत्रूणां हठोनावमर्दनावसर इति, दूतीनामभिसारिकाः प्रति अभिसरणमुपक्रम्यतामिति, संख्याः वासकसज्जां प्रति कर्मकरणन्निवर्त्तामहे इति, भृत्यस्थ धार्मिकं प्रति सान्ध्यो विधिरुपक्रम्यतामिति, आप्तस्य कार्यवशेन बहिर्गच्छतः प्रति दूरं मा गा इति, गृहिणो गोपालकं प्रति सुरभयो गृहं प्रवेश्यन्तामिति, दिवसेऽतिसन्तप्तस्य बन्धून् प्रति सन्तापोऽधुना न भवतीति, आपणिकानां भृत्यान् प्रति विक्रयवस्तूनि संह्रियन्तामिति, नायकागमनप्रस्तावे प्रोषितभत्तृकायास्तत्कथकं प्रति नागतोऽद्य प्रेयानिति एकस्यैव वा वक्तुर्बहून् प्रति तत्तत्प्रकरणवशादेवमादिरनवधिव्यङ्ग्योऽर्थः प्रकाशते। वाच्यस्तु सर्वान् प्रत्यविशिष्ट एव ।

ननु नैतद् वाच्यवैधर्म्यं, नानार्थसैन्धवादिपदे नानार्थावगतिदर्शनादिति चेन्न। एकवाक्यवर्त्तिनस्तस्याऽप्यर्थैक्यनियमात्, यदग्रे वक्ष्यति—लक्षणीयार्थस्य नानात्वेऽप्यनेकार्थपदाभिधेयवन्नियतत्वमेव इति। तथापि यत्र लवणाद्यधिकारिणः प्रति सकलस्वामिनः सैन्धवमानयेति पदप्रयोगस्तत्रानियतत्वं दुर्वारमिति चेत्। न। तात्पर्याज्ञानात्। न ह्यत्र सर्वैर्वाच्यैः समं सर्वव्यङ्ग्यानां भेदः प्रतिपाद्यते किन्तु गतोऽस्तमर्क इत्यस्य सर्वव्यङ्ग्ययोः। तथा च तद्वाच्यस्य नियतत्वं, तदर्थपुरस्कारेणैव सर्वेषां व्यङ्ग्यस्यापि प्रतीतेः।

किञ्च नानार्थस्थले नानाप्रकरणसद्भावे नानार्थबोधनमपि यथाऽनुशासनमेव, न तु व्यङ्ग्ये तथा नियमः। अत एवोक्तम्—अनवधिर्व्यङ्ग्योऽर्थ इति वाग्देवतावतारैरिति सुधीभिः सूक्ष्मदृशाऽवधातव्यम्। तदयं नियतत्वानियतत्वरूपविरुद्धधर्मसंसर्गोऽभिहितः।

---

वाच्यव्यङ्ग्ययोः निःशेषेत्यादौ निषेधविध्यात्मना ।

**मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु ।**

**सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥ १३३ ॥**

इत्यादौ संशयशान्तशृङ्गार्यन्तरगतनिश्चयरूपेण—

**कथमवनिप, दर्पो यन्निशातासिधारा—**
**दलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः ।**
**ननु तव निहतारेरप्यसौ किं न नीता**
**त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः ॥ १३४ ॥**

इत्यादौ निन्दास्तुतिवपुषा स्वरूपस्य,

पूर्वपश्चाद्भावेन प्रतीतेः कालस्य, शब्दाश्रयत्वेन शब्द-तदेकदेश-तदर्थ-वर्ण-संघटनाश्रायत्वेन च आश्रयस्य, शब्दानुशासनज्ञानेन प्रकरणादिसहायप्रतिभा-नैर्मल्यसहितेन तेन चावगम इति निमित्तस्य, बोद्धृमात्रविदग्धव्यपदेशयोः प्रतीतिमात्रचमत्कृत्योश्च करणात् कार्यस्य, गतोऽस्तमर्क इत्यादौ प्रदर्शितनयेन संख्यायाः—

**कस्स वा ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं ।**
**सभमरपडमग्घाइणि वारिअवामे संहसु एण्हि ॥ १३५ ॥**

इत्यादौ सखीतत्कान्तादिगतत्वेन विषयस्य च भेदेऽपि यद्येकत्वं तत्क्वचिदपि नीलपीतादौ भेदो न स्यात्। उक्तं हि—"अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च'—इति ।

**सङ्केतः**

निषेधविध्यात्मनेति। 'स्वरूपस्य भेदेऽपि यद्येकत्वं' इत्यग्रेतनैः योगः। निषेधः वाच्यः, विधिः व्यङ्ग्यः। तथा संशयो वाच्यः, शान्तशृङ्गारिणोरन्यतरनिश्चयश्च व्यङ्ग्यः। अपगताङ्गाः मृताः। वल्लभा भार्या। अपि नीता उद्दालिताऽपि। अत्र निन्दा वाच्या, स्तुतिश्च व्यङ्ग्या। स्वरूपस्य वाच्यव्यङ्ग्ययोः स्वरूपस्य। प्राग् वाच्यम्, ततो व्यङ्ग्यम्, इति व्यक्तः कालस्य पूर्वापरभावः। शंब्देति। वाच्यस्य शब्द एक एवाश्रयः, व्यङ्ग्यस्य तु शब्दतदेकदेशादिकं आश्रयः। एषां व्यञ्जकत्वं प्रागुक्तम्। शब्दशब्देन अत्र प्रकृतिः पदं वाक्यं च अभिधीयते। निमित्तस्येति। वाच्यस्य शब्दशास्त्रज्ञानं हेतुः, व्यङ्ग्यस्य तु प्रस्तावादिसहायप्रतिभाशुद्धिसहितं तच्छब्दशास्त्रज्ञानं इति स्पष्टो निमित्तभेदः। बोद्धृमात्रेति। वाच्यवेदी बोद्धा, व्यङ्ग्यवेदी तु विदग्धः। तथा वाच्योऽर्थः प्रतीतिमात्रम्, व्यङ्ग्यस्तु चमत्कारं करोतीति कार्यभेदः। संख्याया इति।

एतद्विचारः प्रागुक्तः। कस्स वेति। कस्य वा अनीर्ष्यालोरपि। सव्वणं—सव्रणम्। सभ्रमरपद्मस्य आघ्रात्रि! आघ्राणशीले! अत एव वारिते वारणायाम्, वामे! तदनङ्गीकारिणि! सहस्व। उपालम्भानिति शेषः। इदानीं सहस्व इति वाच्यं सखीविषयम्। 'भृङ्गेण अधरः खण्डितः न त्वन्येन, तत् निरपराधैवेयम्,' इति व्यङ्ग्यं पतिविषयम्। 'अद्य मया समर्थितम्, पुनः प्रकटं दशनक्षतादिकं न कार्यम्' इति जारविषयम्। 'प्रियायाः सव्रणाधरावलोके रोषः स्यात्, अप्रियायास्तु त्याग एव स्यात् इति, तदानन्दो मा क्रियतां युष्माभिः इति, अहो सौभाग्यमस्याः!' इति च सपत्नीविषयम्। अत्रार्थे अधुना एषः किञ्चिद्रक्ष्यति, त्वं च प्रियत्वात् अन्यायित्वेन कुप्यन्ती पादपातादिभिः प्रार्थ्यसे, सहस्व शोभस्व' इति सौभाग्यख्यापनं व्यङ्ग्यं सखीविषयम्। 'अद्येत्थम् नान्यथास्यां शङ्कनीयम्' इति प्रातिवेशिमकविषयम्। 'अनया युक्त्या मयैव संव्रियते अपराधः सख्या' इति स्वगर्वख्यापनं विदग्धविषयम्। 'अद्येत्थं संवृतम्, भूयः सावधानतया भवितव्यम्' इति सखीविषयम्। 'असत्या उपपतिपार्श्वात् चुम्बनाद्येव कार्यम्, न क्षतादिकम्।' इत्युपदेशरूपं व्यङ्ग्यं असतीविषयम्। 'येन विना म्रियते तस्य प्रियस्य आगः सोढव्यम्, नैवोद्घाटनीयम्।' इति पत्युः पाण्डित्ये सति तद्विषयं व्यङ्ग्यम्। भेदेऽपीति। स्वरूप-काल-आश्रय-निमित्त-काल-संख्या—विषयाणां भेदेऽपि यद्येकत्वं इति योगः।

अयमेव हीति। अयमेव घटपटयोः भेदः, यत् जलाहरणशीतत्राणादिविरुद्धधर्माध्यासः, मृत्पिण्डादितन्त्वादिकारणभेदश्च। अयमेव घटपटयोः भेदहेतुः, यत् जलाहरणादि इति पूर्वोक्तमेव। यदि वा—अयमेव भेदः यत् विरुद्धधर्माध्यासः, अयमेव भेदहेतुः यत् कारणभेदश्च इति क्रमेण योज्यम्।

**सङ्केतः (रुय्यकः)**

कस्य वेति—

**कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।**
**सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम्॥**

अत्र सखीविषयं वाच्यम्। अस्या भ्रमेण दष्टाधरेयं न परपुरुषेणेति सखीकृतसमर्थनरूपं व्यंग्यं पतिविषयम्। अद्य मया समर्थितं पुनः प्रकटेऽङ्गे त्वया खण्डनादि न कर्त्तव्यमित्युपपतिविषयम्। प्रियायाः सव्रणमधरं

दृष्ट्वा रोषो भवति, अप्रियायास्तु दृष्ट्वा परिहासहेतुरानन्दो भवति, तद्धर्षो मा युष्माकं भूदिति सपत्नीविषयम्। अत्रार्थ इदानीमेष किञ्चिद्वदति त्वं कुप्यसि, ततः पादपतनादिना यदि प्रार्थ्यसे तत् सहस्व शोभस्वेत्यर्थ इति सखीविषयम्। नान्यथाऽस्याः संभावनीयमिति प्रातिवेश्मिकविषयम्। युक्त्या मया संवृतोऽपराधः सख्या इति स्ववैदग्ध्यख्यापनं विदग्धविषयम्। अद्य मया समर्थितं, पुनस्त्वया सावधानया भवितव्यमिति सखीविषयमेव, अनया विना त्वं न भवसि, तव हीयं प्रिया, तदर्थापराधोद्घाटनं न कार्यमिति पत्युर्वैदग्ध्ये सति तद्विषयम्।

**बालचित्तानुरञ्जनी**

वाच्यव्यङ्ग्ययोर्विषयभेदादेकत्वं नास्तीत्याह वाच्यव्यङ्ग्ययोरित्यारभ्य किञ्चेत्यतः पूर्वग्रन्थेन। निषेधविध्यात्मनेत्यादीनां तृतीयान्तानां शब्दानां विषयभेदेऽपीत्युत्तरत्र सम्बन्धः। हे आर्याः विद्वांसः। भवन्तः मात्सर्यमुत्सार्य निवार्य मर्यादासहितं कार्यं विचार्य इदं वक्ष्यमाणं वदन्तु। तदेवाह- भूधराणां पर्वतानां नितम्बाः मध्यप्रदेशः सेव्याः किम् स्मरेण कामेन स्मेराणामीषद्धासयुक्तानां विलासिनीनां पश्चाद्भागाः सेव्या इतीदं वदन्त्विति सम्बन्धः। अत्र संशयो वाच्यः। शान्तशृङ्गारान्यतरनिश्चयश्च व्यङ्ग्यश्च इत्यर्थः।

कश्चित्कञ्चिद्राजानमाह, हे राजन् त्वया निशातया तीक्ष्णया असिधारया दलनं खण्डनं तेन छिन्नशिरसां शत्रूणां श्रीः स्वीकृतेति यदयं कथं दर्पः। किन्तु विपद्भ्योऽर्थ जातः। तमेवाह—निहतारेर्मारितशत्रोरपि तव वल्लभा असौ कीर्तिः अपगताङ्गैर्मृतैरेभिः शत्रुभिः त्रिदिव स्वर्गं किं न नीता, नीतैव। अत्र मृतैरपि शत्रुभिर्वल्लभा स्वर्गं नीतेति निन्दा वाच्या स्तुतिव्यङ्ग्येति वाच्यव्यङ्ग्ययोस्त्वत्र भेदेऽपीत्युत्तरत्र सम्बन्धः। पूर्वं वाच्यं प्रतीयते पश्चाद्व्यङ्ग्यमिति वाच्यव्यङ्ग्ययोः कालस्य भेदेऽपि; वाच्यं शब्दाश्रयमेव व्यङ्ग्यं तु शब्दाश्रयं, तदेकदेशाश्रयं, अर्थाश्रयं वर्णरचनाद्याश्रयञ्च। शब्दशब्दैकदेशादिभिरपि व्यञ्जकत्वस्य प्रतिपादितत्वादिति वाच्यव्यङ्ग्ययोर्निमित्तस्य कारणस्य भेदेऽपि, वाच्यबोद्धाबोद्धैवोच्यते व्यङ्ग्यबोद्धविद्भ्य इति[?]। तथा चोक्तम्

**शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।**
**वेद्यते स तु काव्यार्थतत्त्वज्ञैरेव केवलम्॥ इति। [ध्व. १/७]**

तथा च वाच्योऽर्थः प्रतीतिमात्रकारी व्यङ्ग्यश्चमत्कारकारीति वाच्यव्यङ्ग्ययोः कार्यस्य भेदेऽपि, गतोऽस्तमर्क इत्यादौ प्रदर्शितन्यायेन वाच्यस्तावदेकः व्यङ्ग्यश्च प्रकरणादिविशेषसहायतया अनेकप्रकार इति वाच्यव्यङ्ग्ययोः संख्याया भेदोऽपि।

काचिद्विदग्धा सखी काञ्चिदविनीतां उपपतिखण्डिताधरां नायिकां तत्पतिसन्निधौ तमपश्यन्तीव नायिकावाच्यतानिवारणायाह कस्स इति। संभमरपउमग्घायिणि सभ्रमरपद्माघ्रायिणि हे सभ्रमरपद्माघ्राणशीले। वारिअवामे हे वारितवामे वारणानङ्गीकारिणि हे सखि, पिआइ प्रियायाः सव्वणं सव्रणं, अहरं अधरं, दट्ठूण दृष्ट्वा, कस्स वा कस्य वा, रोसो रोषः, ण होइ न भवति। अपि तु भवतीत्यर्थः। अतः सहसु सहस्व। उपालम्भनिति शेषः। "वाच्छद्मपद्ममूर्खद्वार"[?] इति सूत्रेण दकारमकारयोर्मध्ये पउमेति रूपम्। "पद्मेमी"ति सूत्रोणोत्वपक्षे "पोम्म" इति रूपं 'इर' इति सूत्रेण शीलाद्यर्थानां तृन्तादीनामिरादेशः[?]। इदानीं सहस्वेति वाक्यं अविनीतसखीविषयं भ्रमरेणाधरो दष्टः नान्यथेति अस्यापराधो नास्तीति त्वया अन्यथा शङ्का न कार्येति कान्तविषयम् भ्रमरेणापीडितोऽधर

इति मया समर्थितम्। अतस्त्वया न भेतव्यमिति व्यङ्ग्यमुपपतिविषयम् भ्रमरेण दष्टोऽधरः न रमणेन अतस्त्वया संरम्भो न कर्त्तव्य इति सपत्नीविषयम् अन्यथा न शङ्का कार्येति प्रतिवेशिकविषयम्, अद्य मया यथा कथञ्चित् समाहितम्, अतः परं सावधानतया त्वया भवितव्यमिति नायिकाविषयम् इत्यादि प्रकारेण वाच्यव्यङ्ग्योर्विषयस्य भेदेऽपि रूपभेदात् कारणभेदात् कार्यभेदात् संख्याभेदात् विषयभेदाच्च वाच्यव्यङ्ग्ययोरत्यन्तभेदः। तथाप्येकत्वाङ्गीकारे नीलपीतादेरपि भेदो न स्यादित्याह यद्येकत्वमिति। तत्तर्हि वृद्धसम्मतिमाह उक्तं हीति। अयमेव हि घटपटयोर्भेदः जलाहरणशीतत्राणादिविरुद्धधर्माध्यासः अयमेव हेतुः यत्कारणभेदश्चेत्यर्थः।

**काव्यादर्शः**

निषेधविध्यात्मनेति, स्वरूपस्याभेदेऽपीति योगः। निषेधो वाच्यो विधिश्च व्यङ्ग्यः। संशयश्च शान्तशृङ्गार्यन्तरनिश्चयश्च, तत्र संशयो वाच्योऽन्यतरनिश्चयश्च व्यङ्ग्य इति स्वरूपस्य भेदः।

वल्लभेति भार्याप्युच्यते। ततो 'मृतैरपि तव वल्लभा स्वर्गं नीता' इति निन्दा वाच्या, स्तुतिश्च व्यङ्ग्येति वाच्यव्यङ्ग्ययोः स्वरूपस्य भेदेऽपि। पूर्वेति। पूर्वं वाच्यं प्रतीयते, पश्चाद् व्यङ्ग्यमिति वाच्यव्यङ्ग्ययोः कालस्य भेदेऽपि। शब्दाश्रयत्वेनेति। वाच्यं शब्दैकाश्रयं, व्यङ्ग्यं तु शब्दाश्रयं, तदेकदेशाश्रयं, अर्थाश्रयं वर्णरचनाश्रयं च, एष्वपि व्यञ्जकत्वस्य प्रतिपादितत्वाद्, इत्याश्रयस्य भेदे। शब्दार्थशासनज्ञानेन वाच्योऽर्थोऽवगम्यते, व्यङ्ग्यश्च प्रकरणवक्त्रादिसहायं यत्प्रतिभानैर्मल्यं तत्सहितेन तेन शब्दार्थशासनज्ञानेनेति वाच्यव्यङ्ग्ययोर्निमित्तस्य कारणस्य भेदेऽपि। यदुक्तम्—

**शब्दार्थशासनज्ञानमात्रेणैव न वेद्यते।**
**वेद्यते स हि काव्यार्थतत्वज्ञैरिव केवलम्॥**

बोद्धमात्रेति। वाच्यबोद्धा बोद्धेवोच्यते, व्यङ्ग्यबोद्धा तु विदग्ध इति। तथा वाच्योऽर्थः प्रतीतिमात्रकारी, व्यङ्ग्यश्च चमत्कारीति वाच्यव्यङ्ग्ययोः कार्यस्य भेदेऽपि।

संख्याया इति। वाच्योऽर्थस्तावदेक एव व्यङ्ग्यश्च प्रकरणादिविशेषसहायतया अनेक इति वाच्यव्यङ्ग्ययोः संख्याया भेदेऽपि विषयभेदादपि व्यङ्ग्यस्य वाच्याद् भेदं दर्शयति-कस्स वेति। 'कस्येव अनीर्ष्यालोरपि न भवति रोषो विलोक्यप्रियाः सव्रणमधरम्। सभ्रमरपद्माघ्राणशीले। शीलं हि न कथंचिद् वारयितुं शक्यम्।

**विवेकः**

मात्सर्येत्यादि—आर्यास्तत्त्वार्थविचारकुशलधियः। स्मरेण स्मेरा विलासिन्यस्तासामिति प्रथमं वाच्यः प्रतीयते पश्चाच्च चतुर्थकक्षापाती व्यङ्ग्य इति वाच्यं प्रति शब्दं एवाश्रयः, परं प्रति शब्दस्तदेकदेशादिश्च। शब्दशासनं व्याकरणमर्थशासनं मीमांसा। एतद्[शब्दा] वगमादेवाग्रिमः, चरमस्तु नैवमित्याह प्रकरणादीति। प्रतिभा हि भगवतस्तृतीयं चक्षुः। 'येन साक्षात्करोत्येष भावांस्त्रैकाल्यवर्तिनः (तत्त्वोक्तिकरत्नकोषः व्यः विः २/११८, द्र०) न चात्र शब्दानुशासनज्ञानेन विदग्धत्वं सहृदयचक्रवर्तित्वं' [स्यात्]। चमत्कृतिरास्वादप्रधाना बुद्धिरित्यर्थः। [अ] संख्यो भेदस्तूदाहृतिदिशा स्वयमुन्नेय इत्याह गतोऽस्तमित्यादि। कस्स वेति—**कस्य वा न भवति अनीर्ष्यालोरपि रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्। सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम्॥**

'कस्यानीर्ष्यालोरपि । सभ्रमरपद्माघ्राणशीले । शालं हि कथञ्चिदपि वारयितुं न शक्यते । वारितवामा प्रतिषिद्धकारिणी । सहस्वेदानीमुपालम्भपरम्परामित्यर्थः । तद्भर्तृसन्निधाने परपुरुषदष्टाधरगोपनाभिप्रायेण सखीविषयं वाच्यं, भ्रमरेण दष्टोऽधरो न परपुरुषेणेति सखीकृतसमर्थनरूपो व्यङ्ग्यः पति- विषयः । अनया विना त्वं न भवसि तव हीयं प्रिया तदस्या [अ]पराधोद्धाटनं न कार्यमिति पत्युर्वैदग्ध्ये सति सहस्वेत्यपि तद्विषयम् । अद्य मया समर्थितं पुनः प्रकटेऽङ्गे त्वया खण्डनादि न कर्तव्यमित्युपपतिविषयम् । प्रियायाःसव्रणधरं दृष्ट्वा रोषो भवति, अप्रियायास्तु दृष्ट्वा परिहासहेतुरानन्दो जायते, तद्धर्षो मा युष्माकं भूदिति सपत्नीवषयम् । अत्रार्थ इदानीमेव किञ्चिद्वदति त्वं कुप्यसि, ततः पादपतनादिना यदि प्रार्थ्यसे तत् सहस्व शोभस्वेत्यर्थ इति सखीविषयं, नान्यथाऽस्याः सम्भावनीयमिति प्रातिवेश्मिकविषयं, युक्त्या मया संवृतोऽपराधः सख्या इति स्ववैदग्ध्यख्यापनं विदग्धविषयम्, अद्य मया समर्थित्तं, पुनस्त्वया सावधानया भवितव्यमिति सखीविषयमेवे"ति (रु. सं. ४२ पृ.) वाच्यव्यङ्ग्ययोर्भूयान् भेदः । न च विरुद्धधर्माध्यासकारणभेदमन्त्रेण भेदतद्धेतुत्वात् सतत्त्वान्तरं परिघटयितुमीष्टे कश्चित् । एवञ्च भिन्नविषयत्वाद्भिन्नरूपत्वाच्चानयोर्भेद एवेति स्थितम् । अथ यत्र व्यङ्ग्यस्याप्राधान्येनावस्थानं तत्र वाच्यत्वेनैवासौ व्यपदेष्टुं युक्तो व्यञ्जकस्य तत्परत्वात्, 'यत्परः शब्दः स शब्दार्थः' इति न्यायात् ।

## दीपिका

सम्प्रति विषयवैलक्षण्यं वृत्तिवैलक्षण्यनिश्चयकं प्रपञ्चयति—वाच्येति । वाच्यो वाच्यार्थः । व्यङ्ग्यो विवादविषयः । संशये प्रकरणादिनियमाभावदशायाम् । स्वारसिके व्यङ्ग्यसम्भेदरहिते तत्सद्भावे त्वाहार्ये वाच्येन किम्बर्थेनोद्भाव्ये सति शान्तशृङ्गारिणोरन्यतरत्वप्रतिपादके तदगतेन निश्चयरूपेण व्यङ्ग्येनासम्भेदे सति । वपुषा स्वरूपेण । स्वरूपस्येति षष्ठी त्रिष्वेपि तृतीयान्तेष्वन्वयः । पूर्वपश्चाद्भावेन हेतुफलरूपत्वात् । शब्दैकदेशादीनां तु प्रागेवाभिहितं व्यङ्ग्याश्रयत्वम् । शब्दानुशासनं व्याकरणम्, उपलक्षणमेतदर्थानुशासनं मीमांसाद्यपि ज्ञेयम् । शब्दाद्यनुशासनेति पाठः स्फुट एव । एतन्मात्रेण वाच्यस्य प्रकरणादिसहायत्वात् प्रतिभायाः काव्यरहस्यवेदनानुगुणस्य कस्यचिदान्तरातिशयस्य नैर्मल्यं प्रतिबन्धकतिरस्कारस्तत्सहितेन व्यङ्ग्यस्यावगमः ।

यद्यपि वाच्यप्रतीतावपि प्रकरणादिकं सहायमिच्छन्ति, तथापि तत्र तस्य प्रतिभानैर्मल्याङ्गताविरहो विशेषः । वाच्यप्रतीयमानं बोद्धृव्यपदेशमेवोपाधितया करोति । व्यङ्ग्यस्तु सहृदयापरपर्यायविदग्धव्यपदेशसाधारण्येन प्रतीतिर्वाच्यस्य व्यङ्ग्येन सञ्चार्यादिनाऽलौकिकविभावादिसंयोगभावनोल्लसितानन्दतया करोति चमत्कृतिलक्षणबुद्धिविशेषजननम् । गतोऽस्तमिति । विषयभेदापेक्षया न पुनरुक्तिः ।

पडमं पद्यम् । तत्कान्तेति । सा कान्ता यस्येति विग्रहे पतिवाचकं बोद्धव्यम्, न तु तत्पुरुषेणाविनयवत्याः पत्युरकान्तत्वात् । अत्र वाच्यं सखीविषयं भ्रमरेण दन्तवेधेन न पुनः नरकामुकेणेति कान्तविषयम् । आदिना कथञ्चिदेवोपायेन मयाऽद्य व्यक्ततरोऽपराधः संवृतः । अतः परं तु नैवंविधः प्रकटो दशनादिक्षतरूपस्तयोपभोगः कार्य इत्यादि चौरकामुकादिविषयं व्यङ्ग्यमुपगृह्यते । भेदेऽपीति—प्रतिषष्ठ्यन्तमन्वयः । एकत्वमेकवृत्तिबोध्यता । लक्षणान्तरजन्यभेदो वैजात्यम् । अयमेव हि भेदो यद् विरुद्धधर्माध्यासोऽयमेव च भेदहेतुरिति कारणभेद इत्यर्थः ।

### दर्पणः

संप्रति पदवैलक्षण्यदर्शनेनापि वाच्याद् व्यङ्ग्यभेदं दर्शयन् आह वाच्यव्यङ्ग्ययोरिति । एवं स्वरूपादि-भेदेऽपि यद्येकत्वं वाच्यव्यङ्ग्ययोः क्वचिदपि नीलपीतादौ भेदो न स्यादिति संबन्धः । संशये प्रकरणादिति नियमाभावदशायामरसिके व्यङ्ग्यसंभेदरहिते, वपुषा स्वरूपेण, स्वरूपस्येति समनन्तरोक्तेषु त्रिष्वपि तृतीयान्तेषु संबन्धः । शब्दशासनं व्याकरणम् । अर्थानुशासनं मीमांसादि । प्रकरणवक्त्रादिसहकृतेन प्रतिभासात् । काव्यर-सस्य ज्ञानाच्च गुणान्तरातिशयविशेषस्य नैर्मल्येन वाच्यप्रतीतिरपि प्रकरणादिनासाहाय्यस्याङ्गीकारेऽपि तत्सहित-तत्प्रतिभानैर्मल्याङ्गत्वं व्यङ्ग्यस्यैवेति विशेषः । गतोऽस्तमर्क इत्यादेर्विषयाभेदापेक्षया पुनरुक्तेः ।

**कस्य वा भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।**
**सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम् ॥**

वारितवामे प्रतिकूलकारिणि । तत्र वाच्यं सखीविषयं भ्रमरेण दष्टाधरेयं न पुनः परेणेति व्यङ्ग्यं तत्कान्ता-विषयभेदेऽपीति प्रतिपाद्यत इत्यन्वयः । एकत्वं एकवृत्तिबोध्यता । लक्षणामेकजातीयाम् । अयमेव हि भेदो यद् विरुद्धधर्माध्यासः । अयमेव भेदहेतुः यः कारणभेद इत्यर्थः ।

### साहित्यचूडामणिः

अथ स्वरूपभेदं बहुमुखमभिधातुकामः प्रथमं विधिनिषेधमुखेनाह—वाच्येति । चर्चितचरमेतत् । प्रती-तिभेदमुखेनाह—मात्सर्यमिति । संशये वाचनिके सति शान्तः शृङ्गारी वा वक्ता । यद्याद्यः भूधरसम्बन्धिनां सानूनां सेव्यत्वम् । यदि द्वितीयः विलासिनीसम्बन्धिनां जघनानामिति निर्णयः, न कथंञ्चित् सन्दिग्धतयावस्थानम् ।

निन्दास्तुतिभ्यामाह—कथमिति । निन्दा वाचनिकी, स्तुतिर्व्यङ्ग्या । एवं हेलेत्यादौ स्तुतिर्वाचनिकी, निन्दा व्यङ्ग्या ।

स्वरूपस्येति । वाच्यव्यङ्ग्ययोः स्वलक्षणस्य भेदेऽपि यद्येकत्वमित्युत्तरत्रान्वयः । निषेधे विधिः, विधौ निषेधः, संशये निश्चयः, निन्दायां स्तुतिः, इति महान् विरोधः ।

कालभेदमाह—पूर्वेति । वाच्यं हि पूर्वं प्रतीयते पश्चाद् व्यङ्ग्यम् । न चैतावता व्यङ्ग्यप्रतीतौ वाच्यबु-द्धिर्विप्रकृष्यते, तदाह—स्वरूपं प्रकाशयन्नेव परार्थावभासको व्यञ्जकः, यथा दीपो घटायदेरिति । यच्चोक्तं—'त्रयः प्रकाशाः स्वपरप्रकाशा' इति ।

आश्रयभेदमाह—शब्देति । वाच्यो हि पूर्णावयवशब्दमाश्रित्य प्रवर्तते, व्यङ्ग्यं तु तादृशं शब्दं तदेकदेशं तदभिधेयं वर्णं रचनां च ।

कारणभेदमाह—शब्देति । वाच्यावगमे वैशेषिकादिज्ञानमात्रमुपयोगि । व्यङ्ग्योपलम्भे तु प्रकरणादि सहकृतं यत् प्रतिभाया नैर्मल्यम् अव्युत्पत्तिकलङ्कशून्यत्वं तदाधिक्येन भाव्यम् । यदाह—

**शब्दार्थशासनज्ञानमात्रादेव न वेद्यते ।**
**वेद्यते स हि काव्यार्थतत्त्वज्ञैरेव केवलम् ॥ ध्व. १.७ ॥**

काव्यभेदं द्विविधमित्युपदर्शयति—बोद्धमात्रेति । प्रतिपाद्यार्थनिबन्धनो हि प्रतिपत्तॄणां व्यपदेशः । तत्र वाच्यावबोधे पुरुषो बोद्धेति व्यवह्रियते, न पुनरज्ञो जडो वेति । व्यङ्ग्यावगमे विदग्धः सहृदय इति । स खलु सहृदयः यस्य मनोमुकुरे वर्णनीयार्थतन्मयीभवनयोग्यता । यथाह—

**योऽर्थो हृदयसंवादी तस्य भावो रसोद्भवः ।**
**शरीरं व्याप्यते तेन शुष्कं काष्ठमिवाग्निना ॥ ध्व. १.१ लो० ॥**

इति । किञ्च वाच्यप्रतीतौ तत्प्रतीतिमात्रं फलं, व्यङ्ग्यप्रतीतौ तु चमत्कारापरपर्यायो विगलितवेद्यान्तरः कश्चिदानन्दातिशयः ।

विषयभेदमाह—

कस्स वेति !

**कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।**
**सभ्रमरपद्माघ्राणशीले ! वारितवामे ! सहस्वेदानीम् ॥ इति ।**

काचिदविनीता केनचित् खण्डिताधरा निश्चिततत्सविधसन्निधाने भर्तरि तमनवलोकयन्त्येव विदग्ध-सख्या तदवश्यपरिहारार्थमुच्यते—कस्यवेति । वीतरागस्यापि रोषः स्यात् । वारिते वारणायां वामे प्रतिकूल्यशालिनी । सहस्वेदानीं उपालम्भपरम्परामिति यावत् । अत्र वाच्यमविनयवतीविषयम् । व्यङ्ग्यं तस्या अपराधो नास्तीति भर्तृविषयम् । अविनयप्रच्छादनरूपं प्रातिवेशिकविषयम् । सख्याः सौभाग्यातिशयप्रख्यापनलक्षणं सपत्नीविषयम् । अतः परमत्र न प्रकटो दशनविधिरनुष्ठेय इति शिक्षाप्रदानरूपमुपपति विषयम् । सपत्नीमध्ये खलीकृताहमिति न लज्जितव्यं, प्रत्युत अयं बहुमानोदय इत्यविनयवती विषयमेवेति । विषयभेदोऽपि यद्येकत्व-मास्थीयते तत् क्वचिदपि नीलसुखादौ भेदो न स्याद् विशेषाभावात् । (तदाह) तथाविधविषये यैवैकस्य प्रतीतिः सैवेतरस्येति न शक्यं वक्तुमिति । आचार्याग्रन्थं संवादयति—उक्तं हीति । स वा तद्धेतुर्वा इति कियानयं विशेषः ।

### सम्प्रदायप्रकाशिनी

इत्थं वाच्यव्यङ्ग्ययोर्भेदमुपपत्तिभिरवस्थाप्य प्रसिद्धैर्विरोधशतैरपि प्रबलयति—वाच्यव्यङ्ग्ययोर्निश्शेषे-त्यादिना । तत्रानयोः 'निश्शेषच्युतचन्दने'ति श्लोके निषेधविध्यात्मता स्वरूपस्य विरोधः । संशयनिश्चयात्मना च स्वरूपविरोधं दर्शयति—मात्सर्यमुत्सार्येत्यादि । अत्र हि शान्तशृङ्गार्यन्यतरानिश्चये वाच्योऽर्थः संशयात्मा । तयोरन्यतरनिश्चये तु व्यङ्ग्यो निश्चयरूपः । तदेतत् व्याचष्टे—संशये शान्तशृङ्गा (रे ? री) ति । वाच्यस्य संशयरूपत्वाद् व्यङ्ग्यस्य शान्तशृङ्गार्यन्यतरगतनिश्चयरूपत्वाच्च स्वरूपस्य विरोध इत्यर्थः । अथ निन्दास्तुतिरू-पेणापि स्वरूपविरोधं दर्शयति—कथमवनिपेति । निशातासिधाराकरणकेन दलनव्यापारेण गलितमूर्धा निपतितशिरसाम् । अत्र हि निन्दास्तुतिवपुषा स्वरूपस्यैव विरोधः । एवं स्वरूपविरोधं सोदाहरणं बहुधा संप्रदर्श्यातिस्फुटत्वात् कालतो विरोधं वाङ्मात्रेणाह—पूर्वपश्चाद्भावेनेत्यादि । आश्रयविरोधं दर्शयति—शब्दाश्रयत्वेनेत्यादि । वाच्यो हि शब्दाश्रयत्वेन प्रसिद्धः । शब्दशब्दैकदेशशब्दार्थाद्याश्रयत्वेन व्यङ्ग्यश्च पूर्वं ज्ञात इति निरुदाहरणं प्रदर्शितम् । एवमन्यत्र द्रष्टव्यम् । निमित्तभेदाद् भेदमाह—शब्दार्थशासनेत्यादि । वाच्यस्य हि

व्याकरणमीमांसादिशास्त्रज्ञानमात्रेणावगमः। व्यङ्ग्यस्य तु न तावन्मात्रेण, अपि तु प्रकरणवक्त्रादिसहायं यत् प्रतिभानैर्मल्यं तत्सहितेन शब्दार्थशासनज्ञानेनेति निमित्तभेदः। अथाधिकारिभेदः कार्यभेदश्च—बोद्‌धृमात्रेत्यादि। व्युत्पन्नमात्रस्य हि प्रतीतिमात्रं करोति वाच्यः। व्यङ्ग्यस्तु विदग्धस्य चमत्कारं करोतीति। 'गतोस्तमर्क' इत्यादौ संख्याभेदः प्रदर्शित एव। विषयभेदं दर्शयति कस्स व ण होईति।

**कस्यैव न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।**
**सभ्रमरपद्माघ्राणनशीले वारितवामे सहस्वेदानीम्॥**

अत्र व्रणिताधरदर्शनात् कुपिते कमितरि तत्कोपोपशमाय नायिकां प्रति विदग्धसख्या व्यपदेशेन साधिक्षेपोक्तौ वाच्यः सखीविषयः। निरागसं प्रति कोपो न कार्य इति व्यङ्ग्यस्तत्कामुकविषय इति विषयभेदः। एवं विधविविधभेदसद्‌भावेऽपि यद्यैक्यमङ्गीक्रियेत, तदा भेदस्य वार्तैवास्तमियादित्याह—भेदेऽपि यद्येकत्वमिति। भेदेऽपीति प्रतिवाक्यमभिसम्बध्यते। उक्तार्थे प्रामाणिकसंवादः—उक्तं हि अयमेव हीत्यादि। भेदो हि नामायमेव, यद् विरुद्धधर्मसम्बन्धः। भेदहेतुश्चायमेव, यत् कारणभेदः।

### मधुमती

बोद्धिति। बोद्‌धमात्रव्यपदेश्ये प्रतीतिमात्रम्, प्रतिभाभिः विदग्धव्यपदेश्ये तु चमत्कृतिः जन्यते। व्यपदेशपदेन—बोद्धृत्वाविशेषेऽपि विदग्धत्वव्यपदेशस्य यत् क्वाचित्कत्वं, तदपि व्यञ्जनायां प्रमाणमिति सूचितम्।

कस्स व ण इति। अत्र वाच्योऽर्थः सखीविषय एव। व्यङ्ग्यस्तु—'अस्याः अधरः भ्रमरेण दष्टः, न तु पुरुषेण'—इति कान्तविषयः। 'भ्रमरेण दष्टोऽधरः इति मया संसाधितम्, अतः त्वया नैव भेतव्यम्।' इति उपपतिविषयः। 'भ्रमरेण दष्टाधरेयम्, न तु प्रियेण; तत् त्वया न मन्युर्विधेयः' इति वा, 'प्रियायाः अधरं खण्डितं दृष्ट्वा रोषो भवति, न तु अप्रियाया अपीति त्वया खेदो न विधेयः' इति वा सपत्नीविषयः। 'अनया विना त्वत्पतिः न जीवतीति विदितमेव त्वया, तत् अस्मत्समन्विते भेदो न विधेयः' इति निवेशिनी विषयः। 'मयाऽद्यकथंचित् तवापराधः समाहित एव; अतः परमपि वा त्वया सावधानतया भवितव्य'मिति सखीविषयः। 'युक्त्या मया ईदृशोऽप्यपराधः समाहितः।' इति स्ववैदग्ध्यख्यापनं विदग्धविषयः—इति।

अयमेवेति। तथाच विरुद्धधर्माध्यासः भेदः, कारणभेदश्च भेदहेतुरिति, उभयस्यांप्यत्र सत्त्वात् वृत्त्यन्तरात् भेद आवश्यकः इति भावः।

### विस्तारिका

वाच्यव्यङ्ग्ययोर्भेदे उपपादकमाह वाच्येत्यादि। निषेधविध्यात्मना वाच्यव्यङ्ग्योर्भेदेऽपि यद्येकत्वमिति दूरेणान्वयः।

मात्सर्यमिति। मात्सर्यः, परगुणेषु द्वेषः कार्यं कर्त्तव्यम्। आर्या मान्याः। वस्तुतत्त्वं मर्यादा सयुक्तिकं कथनमुदाहरणम्। जघनकटकौ नितम्बौ।

संशयेन सन्देहहेतूपस्थितकोटिद्वयस्वरूपेण। शान्तशृङ्गार्यन्यतरगतोऽन्यतरविषयको यो निश्चयः, शान्तस्य भूधराणां नितम्बः, शृङ्गारिणस्तु विलासिनीनामिति रूपः, अभिधाया अविषयत्वादयमर्थो व्यङ्ग्यः।

कथमित्यादि। अवतीत्यवनिस्तामपि पातीत्यवनिपः, दलनं खण्डनम्, भवन्तं द्विषन्ति, न तु भवद्द्वेष्याः। तृणाय मन्यमानत्वात्। स्वीकृता स्वत्वं प्रापिता, तव वल्लभा कीर्तिस्त्रिदिवं किं न नीता, अपि तु नीतैवेत्यन्वयः। एभिर्द्विषद्भिः अपगताङ्गैरङ्गहीनैरसि। असावेतद्भुवनव्यापिनी, निहतारेरपि विपक्षशून्यस्यापि।

निजवल्लभारक्षणेऽप्यक्षमस्य श्रीस्वीकारे कथं दर्प इति निन्दावाक्यार्थो वाच्यः। विपक्षनिर्जयेन कीर्तिः स्वर्गेऽपि प्रसरणमिति स्तुतिर्व्यङ्ग्या। वपुषा स्वरूपेण पूर्वपश्चाद्भावो व्यङ्ग्यव्यञ्जकत्वरूपत्वात् पूर्ववर्तित्वेनैव कारणत्वात्। अभिधाव्यञ्जनयोराश्रयभेदमाह—शब्देत्यादि। अर्थं शब्दयन्ति ज्ञापयन्ति। शब्दा वाचकाः तेऽभिधाया आश्रयाः, एकदेशाःप्रकृत्यादयः, संघटना पदानां पौर्वापर्येण विन्यासः। इमे व्यञ्जनाया आश्रयाः। निमित्तभेदमाह—शब्दानुशासनेत्यादि। तद्व्याकरणमेव कोषादिशक्तिग्राहकं प्रति झटित्यनुग्रहः, नैर्मल्यं दोषगुणविवेकः। तेन शब्दानुशासनज्ञानेन। कार्यभेदमाह—बोद्धृमात्रेत्यादि। विदग्धः सामाजिको रसिक इति यावत्। व्यपदेश्य इति भावेष्यण्। चमत्कृतिरास्वादः।

बोद्धव्यभेदमाह—कस्य वेत्यादि।प्रोष्यागते उपपतिदष्टाधरव्रणं वीक्ष्य विमनायमाने गृहपतौ विदग्धसखी समाधत्ते।

**कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।**
**सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम्॥**

वारिते कर्मणि वामा विरुद्धाचारिणी।वारितं सभ्रमरपद्मघ्राणं प्रति दंशकारणं षिड्गाधरदंशनञ्चावश्यमाचरसि, सुदूरं स्वपतिक्रोधनियन्त्रणमनुभव। इदानीम् अविचारदशायां प्रतिनायकस्यासन्निधौ च तत्सन्निधौ तत्सर्वं सुखाय भविष्यति।

सखीत्यादि। वक्त्र्याः सखी नायिका सा वाच्यस्य विषयः, सैव कान्ता यस्येति तत्कान्तो गृहपतिः। इयं भ्रमरेण दष्टा, न षिड्गेनेति व्यङ्ग्यस्यायं विषयः। आदिपदादुपपत्यादिग्रहणम्। पुनरेवं मा कृथा इत्युपपत्तौ युष्मासु काप्येवं समाधाने न क्षमा। तस्माद् यूयमविदग्धा इति सख्यन्तरेषु। सखीषु मध्ये मयैव समर्थितमिति कृतोपकारामप्येवमाश्वसिहीति नायिकां प्रतीतिविषयनानात्वम्। भेदेऽपीति प्रतिषट्यन्तेनान्वेति, भेदो वैधर्म्यम्। उक्तमित्यादि। भेदोऽन्योन्याभावः। विरुद्धस्य तदवृत्तेर्धर्मस्य, अध्यासो ज्ञानम्। ज्ञायमानवैधर्म्यमेवान्योन्याभाव इति वादिमते भेदहेतुरन्योन्याभावज्ञापकः।

## सारबोधिनी

वाच्यव्यङ्ग्ययोर्भेदे उपपादकान्तरमाह वाच्येति। निषेधविध्यात्मना वाच्यव्यङ्ग्ययोः स्वरूपस्य भेदेऽपि यद्येकत्वमिति दूरेणान्वयः। मात्सर्येति। वाच्यव्यङ्ग्ययोः संशयरूपतया निश्चयरूपतया च स्वरूपस्य भेदेऽपीत्यत्रापि योज्यम्। शान्तेति। शान्तशृङ्गार्यन्तरगतः शान्तशृङ्गार्यन्तरविषयको यो निश्चयः, शान्तस्य भूधराणां नितम्बः

शृङ्गारिणाञ्च विलासिनीनामित्याकारः। अभिधाया अविषयत्वादयमर्थोऽवाच्यः। तथा च संशयो वाच्यो निश्चयश्च व्यङ्ग्य इति।

कथमित्यादि। अत्र निन्दावाक्यार्थो वाच्यः। स्तुतिर्व्यङ्ग्या। वपुषा स्वरूपेण। वाच्यव्यङ्ग्ययोः स्वरूपस्य भेदेऽपि यद्येकत्वमिति दूरेणान्वयः। असाविति असौ कीर्तिः।

पूर्वपश्चाद्भावो व्यञ्जकव्यङ्ग्यस्वरूपत्वात्। पूर्ववर्तित्वेनैव कारणत्वात्। अभिधाव्यञ्जनयोराश्रयभेदमाह शब्देत्यादि। निमित्तभेदमाह शब्दानुशासनेति। कार्यभेदमाह बोद्धृमात्रेति। विदग्धो रसिकः। व्यपदिश्यत इति व्यपदेशः। भावे घञ्। चमत्कृतिरास्वादः।

कस्सेति। प्रेष्यागते प्रियाया उपपतिदष्टाधरं व्रणं वीक्ष्य विमनायमान गृहपतौ विदग्धसखी समाधत्ते।

**कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणधरम्।**
**सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम्॥**

वारितकर्मणि वामा विरुद्धाचारिणी। वारितस्य भ्रमरस्य पद्माघ्राणं दंशकारणं अधरदंशनं चावश्यमाचरयसि। वपतिक्रोधनियन्त्रणमनुभव। एण्हिं इदानीमविचारदशायां प्रतिनायकसन्निधौ तत्सन्निधौ च सर्वं सुखाय भविष्यति

सखीत्यादि। वक्त्री [वक्त्र्याः ?] सखी। नायिका, सा वाच्यस्य विषयः। सैव कान्ता यस्य तत्कान्तो गृहपतिः। इयं भ्रमरेण दष्टाधरा, न षिङ्गेनेति व्यङ्ग्यस्य नायको विषयः। आदिपदादुपपत्यादिग्रहणम्। पुनरेवं मां कृथा इत्यस्योपपतिः। ममैव वैदग्ध्यं इत्यस्य प्रतिवेशिनी इत्यादि। भेदेऽपीतिप्रतिपङ्क्त्यान्तेनान्वेति, भेदे वैधर्म्ये। उक्तमित्यादि। भेदोऽन्योन्याभावः। विरुद्धस्य तदवृत्तेर्धर्मस्याध्यासो ज्ञानम्। ज्ञायमानवैधर्म्यमेवान्योन्याभाव इति वादिमतेनायं भेदहेतुरन्योन्याभावविषयकः।

**काव्यप्रदीपः**

तदयं नियतत्वानियतत्वरूपविरुद्धधर्मसंसर्गोऽभिहितः। एवं विलक्षणस्वरूपकालादिभेदोऽपि भेदको द्रष्टव्यः। वैधर्म्यसत्त्वेऽपि यद्यभेदः स्यात्तदा नीलानीलादेरपि न क्वचिद्भेदः स्यात्। वैधर्म्यस्याविशेषात्। यदुक्तम्—'अयमेव भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च' इति। सुप्रसिद्धश्च तत्र तत्र स्वरूपभेदे भेदः। तत्र 'निःशेष'—इत्यादौ,

**'मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु।**
**सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम्॥'** इत्यादौ।

**'कथमवनिप दर्पो यन्निशातासिधारादलनगलितमूर्ध्ना विद्विषां स्वीकृता श्रीः।**
**ननु तव निहतारेरप्यसौ किं न नीता त्रिदिवमपगताङ्गैर्वल्लभा कीर्तिरेभिः॥'**

इत्यादौ च स्वरूपभेदः। प्रथमे हि वाच्यो निषेधरूपो व्यङ्ग्यस्तु विधिरूपः। द्वितीये वाच्यः संशयरूपो व्यङ्ग्यस्तु शान्ते शृङ्गारिणि वा वक्तरि तदुचितैककोटिनिश्चयः। तृतीये वाच्यो निन्दारूपः। प्रतीयमानस्तु स्तुति-

रूपः । कालभेदस्तु सर्वत्र । पूर्व हि वाच्यः प्रतीयते पश्चातु व्यङ्ग्य इति वाच्यस्य शब्दमात्राश्रयः । प्रतीयमानस्य तु पदशब्दैकदेशीभूतकाक्वादितदर्थवर्णसंघटना इत्याश्रयभेदः । वाच्यस्य व्याकरणकोषादिमात्रेणावगमः । प्रतीयमानस्य तु प्रतिभानैर्मल्येनाप्यधिकेनेति ज्ञापकभेदः । वाच्येन व्युत्पन्नमात्रस्य प्रतीतिमात्रम् । अन्येन तु विदग्धपदवाच्यस्य सहृदयस्य चमत्कृतिरिति कार्यभेदः । 'गतोऽस्तमर्कः' इत्यादौ दर्शितनयेन वाच्य एकः । प्रतीयमानस्तु नानेति संख्याभेदः ।

**'कस्स व ण होइ रोसो दट्ठूण पिआएँ सव्वणं अहरम् ।**
**सभमर पडमग्घाइणि वारिअवामे सहसु एह्निम् ॥'**

इत्यादौ वाच्यार्थस्य संबोध्या सखी विषयः । तत्र हि वाच्योऽर्थः श्रोतुर्व्यवतिष्ठते । प्रतीयमानस्य तु भ्रमरेणास्या अधरः खण्डितो न तूपपतिनेति तत्कान्तः । ममैवं वैदग्ध्यमित्यस्य प्रतिवेशिनी । इदं मया समाहितं पुनरेवं त्वया न विधेयमित्यस्योपपत्तिः । एवं सपत्न्यादिर्विषयोऽपीति विषयस्य भेदः ।

**आदर्शः**

नन्वभिधयैव गृहीतया बोधने सर्वप्रतिपत्तृषु एकार्थो बोध्यते तथैव अगृहीतया दीर्घतरीभूतया बोधने तु तत्तत्प्रकरणादिसाहाय्येन तत्र तत्र तथाविधा अर्था बोध्यन्त इत्यत आह—वाच्यव्यङ्ग्ययोरिति । निःशेषेत्यादौ वाच्यव्यङ्ग्ययोर्निषेधविध्यात्मना स्वरूपस्य भेदेऽपि यद्येकत्वमिति दूरतरेणान्वयः । तदन्तिकागमनगमने निषेधविधी वाच्यव्यङ्ग्यौ विरोधिस्वरूपौ । मात्सर्यमित्यादि । समर्यादमित्यनेन मर्यादया उक्तिश्रमो नापेक्षणीय इति सूचितम् । इत्यादौ संशयेति, संशयश्च शान्तशृङ्गार्यन्यतरगतनिश्चयश्चेति द्वन्द्वः; तद्रूपेण वाच्यव्यङ्ग्योः स्वरूपस्य भेदेऽपीत्यन्वयः । अत्र 'किम्' पदार्थः संशयो वाच्यः, भूधरनितम्बा एव सेव्याः स्त्रीनितम्बाः सेव्या इति वा शान्तशृङ्गारिवक्तृभेदेन तदीयनिश्चयश्च व्यङ्ग्य इति एतावपि विरोधिस्वरूपौ भेदकौ । अत्र च संशये संशयेनेति च पाठौ प्रामादिकौ । कथमवनिपेति । हे अवनिप निशातेत्याद्युक्तानां विद्विषां श्रीस्त्वया स्वीकृता इत्ययं कथं दर्पः ? दर्पाभावे हेतुमाह—नन्विति । साङ्गस्य निहतारेरपि तव वल्लभा कीर्तिः अपगताङ्गैरपि तैः त्रिदिवं किं नीता न ? अपि तु नीतैव इत्यतस्तुल्यविनिमये कथं दर्प इत्यर्थः । निशातया असिधारया यद् दलनं छेदनं तेन गलितमूर्धामिति विग्रहः । इत्यादौ निन्दास्तुतीति, अत्र निन्दास्तुनिपदद्वयं निन्द्यतास्तुत्यताप्रयोजकार्थपरम्, निन्दाया अत्रावाच्यत्वात्, शब्दात्मिकायाः स्तुतेरव्यङ्ग्यत्वाच्च । तथाच अयुक्तत्वाद्दर्पप्रश्नो वाच्यो निन्दाप्रयोजकः, स्वर्गपर्यन्तगामिनी ते कीर्त्तिरिति व्यङ्ग्यार्थश्च स्तुत्यताप्रयोजकः । एतावप्यर्थौ स्वप्रयोज्ययोर्विरुद्धयोर्निन्दास्तुत्योः सम्बन्धद्विरुद्धौ, तयोः स्वरूपस्य भेदेऽपीत्यन्वयः । पूर्वपश्चादिति पूर्वं वाच्यार्थप्रतीतिः पश्चाश्च व्यङ्ग्यार्थप्रतीतिरिति स्वजन्यप्रतीतेः कालस्य भेदेऽपीत्यन्वयः । शब्देति, अभिधा शब्दमात्रवृत्तिः व्यञ्जना तु शब्द-तदेकदेश-प्रकृत्यादिवृत्तिरित्यारश्रयस्य भेदेऽपीत्यन्वयः । शब्दानुशासनेतिः अभिधेयस्य शब्दानुशासनज्ञानेनावगम, व्यङ्ग्यस्य तु प्रकरणादिसहितप्रतिभानैर्मल्यसहितेन तेन शब्दानुशासनज्ञानेनावगम इति स्वजन्यप्रतीतिनिमित्तस्य भेदेऽपीत्यन्वयः । शब्दानुशासनस्य व्यञ्जकवाच्यार्थबोधकत्वात् व्यङ्ग्यबोधे तदपेक्षा । बोद्धृमात्रेति, अभिधया सर्वबोद्धृणामेव प्रतीतिमात्रम्, व्यञ्जनया तु विदग्धव्यपदेश्यचमत्कृतिनरप्यधिका जन्यते इति स्वकार्यस्य भेदेऽपीत्यन्वयः । व्यपदेश्यत्वपर्यन्तानुधावनम् उत्कृष्टत्लाभाय तस्यैव चमत्कृतेः । संख्याया इति, स्वबोध्यसंख्याया इत्यर्थः ।

न चेदं पुनरुक्तमिति वाच्यं प्रतिप्रत्तृभेदेन विभिन्नार्थबोधकत्वस्यैव प्रागुक्तत्वात् तत्र स्वबोध्यसंख्यानभिधानात्। कस्स णवेति

**कस्य न वा भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।**
**सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम्॥ इति संस्कृतम्**

उपनायकदष्टाधरां पत्नीं तर्जयन्तं प्रोषितागतं तत्पतिं प्रतारयन्त्याः सख्या उक्तिरियम्। सहस्वेत्यत्र प्रत्युस्तर्जनमिति शेषः। वारितवामे इति 'सभ्रमरपाद्माघ्राणं यन्मया वारितं हे तत्र वामे प्रतिकूले इत्यर्थः पतिबोध्यः। अधरदंशफलिकारतिर्मया वारिता, हे तत्र वामे इति नायिकाबोध्योऽर्थः। सखीतत्कान्तेति, सखी वक्त्र्याः सखी नायिका, तद्बोध्यः "इयं प्रतारयती"ति व्यङ्ग्यार्थः, सभ्रमरं पद्ममियमाघ्रातवतीति तत्कान्ततत्स्थानस्थपरलोकबोध्यो वाच्यार्थः। व्यञ्जनाभिधाजन्यबोधविषययोस्तादृशार्थयोर्भेदेऽपीत्यन्वयः। वैधर्म्यमेवान्योन्याभाव इति मते अयमेवेति। अन्योन्याभावज्ञापकमेव वैधर्म्यमिति मते तु भेदहेतुर्वेति। हेतुरत्न ज्ञापकः। नन्वेवं तार्णातार्णवह्न्योःवैधर्म्याभावाद् भेदस्तज्ज्ञानं वा न स्यादित्यत आह—कारणभेदो वेति।

## सुधासागरः

वाच्यव्यङ्ग्ययोर्भेदकान्तराण्यपि दर्शयति—वाच्यव्यङ्ग्ययोरित्यादि। निषेधविध्यात्मना—निश्चयेन निन्दास्तुतिवपुषा वाच्यव्यङ्ग्ययोः स्वरूपस्य भेदे कालादेश्च भेदेऽपि यद्येकत्वमिति दूरेणान्वयः। अयमाशयः—एवं विलक्षणस्वरूपकालादिभेदोऽपि भेदको द्रष्टव्यः। वैधर्म्यसत्त्वेऽपि यद्यभेदः स्यात्तदा नीलाऽनीलादेरपि न क्वचिद्भेदः स्यात्, वैधर्म्यस्याविशेषात्। यदुक्तम्—अयमेव भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च' इति। भेदोऽन्योन्याभावः। विरुद्धधर्मस्याध्यासो ज्ञानम्। इदं च ज्ञानवैधर्म्यस्यान्योन्याभावत्ववादिमतेनोक्तम्। कारणभेदो भेदहेतुरन्योन्यभावज्ञापक इति मतान्तरम्। क्रमेण योजना 'भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्च' इति। तथा च विरुद्धधर्माध्यासो भेदः कारणभेदो भेदहेतुरित्युभयस्याऽप्यत्र सत्त्वाद् वृत्त्यन्तराद्भेद आवश्यकः। सुप्रसिद्धश्च तत्र तत्र स्वरूपादेर्भेदः। तत्र निःशेषेत्यादौ मात्सर्यमुत्सार्येत्यादौ च स्वरूपभेदः। प्रथमे हि वाच्यो निषेधरूपः, व्यङ्ग्यस्तु विधिरूपः। द्वितीये वाच्यः संशयरूपः व्यङ्ग्यस्तु शान्ते शृङ्गारिणि वा वक्तरि तदुचितैककोटिनिश्चयरूपः। तृतीये वाच्यो निन्दारूपः प्रतीयमानस्तु स्तुतिरूपः। कालभेदस्तु सर्वत्र। पूर्वं हि वाच्यः प्रतीयते पश्चात्तु व्यङ्ग्य इति। वाच्यस्य शब्दमात्रमाश्रयः, प्रतीयमानस्य तु पदशब्दैकदेशीभूतकादितदर्थवर्णसङ्घटनाः इत्याश्रयभेदः। वाच्यस्य व्याकरणकोशादिनामात्रेणावगमः। प्रतीयमानस्य तु प्रतिभानैर्मल्येनाऽप्यधिकेनेति ज्ञापकभेदः। वाच्येन व्युत्पन्नमात्रस्य प्रतीतिमात्रम्। अन्येन तु विदग्धपदवाच्यस्य सहृदयस्य चमत्कृतिरिति कार्यभेदः। गतोऽस्तमर्क इत्यादौ दर्शितनयेन वाच्य एकः प्रतीयमानस्तु नानेति सङ्ख्याभेदः।

कस्स वेत्यादि। प्रोष्यागते प्रियायाः उपपतिदष्टाधरव्रणं वीक्ष्य विमनायमाने गृहपतौ विदग्धसखी समाधत्ते—

**कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।**
**सभ्रमरपद्माघ्रायिणि वारितवामे सहस्वेदानीम्॥**

इति संस्कृतम् । वारितकर्मणि वामा विरुद्धाचारिणी । सहस्व पतिक्रोधनियन्त्रणमनुभवेदानीमविचारद-शायाम् । स्पष्टमन्यत् । अत्र वाच्यार्थस्य सम्बोध्या सखी विषयः । तत्र हि वाच्योऽर्थः श्रोत्र्याः व्यवतिष्ठते । प्रतीयमानस्य तु भ्रमरेणास्या अधरः खण्डितो न तूपपतिनेति तत्कान्तः । आदिपदात् 'ममैवं वैदग्ध्यम्' इत्यस्य प्रतिवेशइनी । इदं मया समाहितं पनरेवं त्वया न विधेयमित्यस्या उपपतिः । भ्रमरेणास्या अधरः खण्डितो न तु भर्त्रेति त्वयेर्ष्या न कार्येत्यस्य सपत्नी । सरलतरेयं न कञ्चित् प्रपञ्चं जानातीति नान्यथा शङ्कनीया इत्यस्याः साध्वी श्वश्रूः । अनया विना त्वत्पत्तिर्न जीवतीति विदितमेव, तदस्मत्समन्विते भेदो न विधेय इत्यस्योपपतिकान्ता विषय इति विषयभेदः । एवं स्वरूपादिभेदादवश्यमङ्गीकर्त्तव्यो वाच्यव्यङ्ग्ययोर्भेदः ।

---

वाचकानामर्थापेक्षा व्यञ्जकानान्तु न तदपेक्षत्वमिति न वाचकत्वमेव व्यञ्जकत्वम्। किं च वाणीरकुडंग्वित्यादौ प्रतीयमानमर्थमभिव्यज्य वाच्यं स्वरूपे एव यत्र विश्राम्यति तत्र गुणीभूतव्यङ्ग्येऽतात्पर्यभूतोऽप्यर्थः स्वशब्दानभिधेयः प्रतीतिपथमवतरन् कस्य व्यापारस्य विषयतामवलम्बामिति।

---

**सङ्केतः**

वाचकानामिति। अयं भावः—सङ्केतितार्थाभिधायित्वेन अर्थापेक्षिणः शब्दाः। व्यञ्जकास्तु मृदुवर्णादयः अर्थनिरपेक्षाः। तत् कथं वाचकत्वमेव व्यञ्जकत्वम्? इति।

वाच्यं स्वरूपे एवेति। इदं मर्म—प्रथमं वाच्यं तावत् स्वेप्रकाश्य व्यङ्ग्यं प्रत्याययति। ततः तृतीयकक्ष्यायां तदेव प्राधान्यात् प्रत्यावृत्य स्वरूपे एव विश्राम्यतीति। अचारुत्वात् ध्वननं नोन्मीलयतीत्यर्थः। अतात्पर्येति व्यङ्ग्यं अप्रधानं चेत् तत् तात्पर्यवाद्यपि वाच्यत्वेन न मन्यते। अतत्परत्वात् शब्दस्येति। तत् भिन्नं वाचकत्वात् व्यञ्जकत्वम्। स्वशब्दानभिधेय इति। रसादिरूप इत्यर्थः। कस्येति। अर्थात् व्यञ्जनव्यापारस्यैव।

**बालचित्तानुरञ्जनी**

भेदकान्तरमाह वाचकानामिति। नियताभिधाव्यापाराणां वाचकानां शब्दानां तत्तद्वर्णादीनामर्थनिरपेक्षाणामनियतव्यञ्जकराक्तीनां कथं न वैलक्षण्यमित्यर्थः। किञ्चेति।

**वाणीरकुडंगुड्डीण सउणिकोलाहलं सुणंतीए**
**घरकम्मवावडाए बहुए सीअंति अंगाइं॥**
**वेतसीकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः।**
**गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि॥**

इत्यादौ वाच्यार्थप्रतीतिपुरःसरा प्रतीयमानार्थप्रतीतिः तदनन्तरं तृतीयकक्षायां वाच्यप्राधान्यात् स्वरूप एव विश्राम्यति। तत्र गुणीभूतव्यङ्ग्यं यस्य तस्मिन् काव्ये अतात्पर्यभूतः शब्दानभिधेयः रसादिस्वरूपोऽर्थः प्रतीयमानः कस्य व्यापारस्य विषयतामवलम्बतां व्यञ्जकव्यापारव्यतिरेकेणेति शेषः।

**काव्यादर्शः**

वारिते वारणायां वामे तदनङ्गीकारिणि सहस्वेदानीमुपालम्भपरंपराम् इत्यर्थः। कांचिद् अविनीतां उपपतिखण्डिताधरां निश्चितसंनिधौ तद्भर्तरि तददृश्यमान इव काचिद् विदग्धसखी तद्वाच्यतापरिहारायैवं वक्ति। 'सहस्वेदानीम्' इति वाच्यमविनयवतीविषयं, भर्तृविषयं तु अपराधो नास्तीत्यावेद्यमान व्यङ्ग्यम्। तत्सपत्न्यां च तदुपालम्भतदविनयप्रहृष्टायां सौभाग्यातिशयख्यापनम्। 'प्रियाया' इति शब्दबलादिति सपत्नीविषयं व्यङ्ग्यम्।

सखीमध्ये इयता खलीकृतास्मीति लाघवमात्मनो न ग्राह्यं, प्रत्युतायं बहुमानः । सहस्व शोभस्वेदानीमिति सखीविषयं सौभाग्यख्यापनं व्यङ्ग्यम् । अद्येयं तव प्रच्छन्नानुरागिणी मयेत्थं रक्षिता, पुनः प्रकटदशनरदनविधिर्न कार्य इत्युपपतिविषयं व्यङ्ग्यम् । नान्यथास्यां संभावनीयमिति प्रातिवेश्मिकविषयं व्यङ्ग्यम् । युक्त्या मया संवृतोऽपराधः सख्या इति स्ववैदग्ध्यख्यापनं विदग्धविषयं व्यङ्ग्यमित्याह—सखीतत्कान्तादिति । भेदेऽपीति । स्वरूपभेदात् कालभेदाद् आश्रयभेदात् कारणभेदात् कार्यभेदात् संख्याभेदाद् विषयभेदाच्च वाच्यव्यङ्ग्ययोरत्यन्तं भेदः ।

## विवेकः

वाचकतात्पर्यात्तस्य वाच्यत्वं न तु व्यङ्ग्यत्वम्; अतश्चाभिधाव्यञ्जनाव्यापारयोरैक्यमेव न पुनर्भेद इति यत् केनचिदाशङ्कितं तदपा कर्तुमुपपत्त्यन्तरमाह वाचकानामिति । पुनस्तात्पर्यवादिनं प्रति दूषणान्तरमाह किञ्चेति । यत्र व्यङ्ग्यस्य गुणभावस्तत्र शब्दर्थत्वमनुपपन्नं शब्दस्याततपरत्वात्, 'यत्परः शब्दः स शब्दार्थ' इत्युक्तत्वात् । प्रतीयते चासावर्थो यथा 'वाणीरकुडङ्गे'त्यादौ (४ उ:) महाकविनिबद्धे लक्ष्ये । न च विना व्यापारं शब्दोऽर्थमवबोधयति । एवञ्चेदनुमन्यसे तर्हि यत्र प्रकारादिप्रतिपत्तिनिर्धारितविशेषस्तात्पर्यालोचनया लब्धविश्रान्तिः प्रतीयमानस्याङ्गत्वेनावभासते तत्र ध्वनित्वमपध्वस्तं कथमपलपितुं पार्यत इति भावः ।

## दीपिका

इह केचिदाहुः—प्रकरणादिलक्षणज्ञापकान्तरानुगमान्वयेऽखण्डः शब्द इति । अत्र श्रीधरः—"ज्ञापकान्तरानुगमेऽपि न क्वचिच्छाब्दताहानिः । अन्यथा शब्दबोधितेऽर्थ सत्यासत्यत्वजिज्ञासायां सत्य एवायमाप्तोक्तत्वादित्यनुमानेन साधिते सत्यत्वे तस्याप्यर्थस्याशाब्दत्वप्रसङ्गात्" इति परिहारमाह । स च न समीचीनः । वाक्यार्थस्वरूपत्वे शब्दस्य व्यापारः, तस्य च सत्यत्वलक्षणे विषयान्तर एवानुमितिप्रवृत्तिरित्येकविषयताविरहात् ।

यदि तु सम्बन्धेऽपि शब्दो व्याप्रियते तदाऽनुमानप्रवृत्तेर्व्यर्थत्वमेव । यद्येवं शब्दप्रामाण्यव्याकोप इति चेन्न, वस्तुगत्या परमार्थविषयतया प्रमाया जननात् । जनितायां तु तस्यां तत्कृतप्रमात्वसंशयदशायां तत्रैवानुमानोदयात् । अन्यथा चाक्षुषादिप्रतीतावपि सत्यासत्यत्वसंदेहे प्रत्यक्षप्रामाण्यं व्याकुप्येत । तस्माद् प्रकरणादेः शब्देतिकर्तव्यतारूपद्वयस्याभिधाऽनवच्छेददशायामिवात्राभ्युपगमः । स्वाङ्गं न व्यवधायकमेवेति न्यायेनेति मुख्यः परिहारः ।

पूर्वं शब्दाश्रयत्वेनेत्यादिना । विषयभेदाङ्गत्वेनाश्रयभेद उक्तः । सम्प्रति तु साक्षादेवान्वयभेदाद् भेदमाहवाचकानामिति । वाचकत्वोपाधिः शब्दानां ज्ञात एव व्याप्रियते नाज्ञाते । तज्ज्ञाञ्चार्थज्ञान एव । न चैवं व्यञ्जकोपाधिः, तस्याज्ञातस्यैव स विषयस्तदर्थनात् । प्रत्युतानेनैव न्यायेन तत्सद्भावबोधनादित्यर्थः ।

यद्वा वाचकानां वाक्यानामर्थबोधकृतयाऽङ्गीक्रियमाणानां पदानामर्थापेक्षा पदार्थज्ञानापेक्षा । व्यञ्जकानां तु नटीकृतगीतकाकलीकोलाहलादीनां रसादिव्यञ्जने पदार्थप्रतिसन्धानाभावान्न तथात्वम् । अपिरत्र पक्षे क्वाचित्कत्वमाह । पूर्वत्र तूक्तवैधर्म्यान्तरसमुच्चये तात्पर्यवादेन ध्वनिस्थलसमावेशेऽपि व्यञ्जनाऽङ्गीकार आवश्यक इत्याह—किञ्चेति । प्रतीयमानं प्राधान्याभावेनातात्पर्यविषयम् । स्वरूप एवेति । न त्वन्यत्रात्मानमुपनयतीत्यर्थः । तात्पर्यस्य व्यापारभूतो विषयतया प्राप्तो नेत्यतात्पर्यभूतः । कुत इत्याह—गुणीभूतोऽप्रधानभूतः सन् व्यङ्ग्यतात्प-

र्यदेव गूढोऽभिधेयोऽभिधेयाबोध्य इति । अभिधैव तर्हि तत्रास्त्वित्याह—स्वशब्देति । अनुपात्तवाचक इत्यर्थः । तर्हि न प्रतीयतामेवेत्याह—प्रतीतिति । तावताऽनुभवदुरपह्नव इति भावः । कस्य व्यापारस्य । व्यञ्जनामन्तरेणेति शेषः । एवंविधे च तात्पर्यस्योपात्तपदार्थनैयत्ये सिद्धे प्रतीयमानताऽन्वितापारम्पर्यमिति भावः ।

**दर्पणः**

प्रकारान्तरेणापि व्यङ्ग्यस्य वाच्याद्भेदमाह वाचकानामिति ।अयमर्थः यस्य शब्दस्य योऽर्थो वाच्यस्तस्यार्थस्य पूर्वपरिज्ञाने तस्य शब्दस्य तद्वाचकत्वं ज्ञातुमशक्यम् । अतः शब्दानां वाचकत्वं सङ्केतितार्थज्ञानसापेक्षमवगम्यते। व्यञ्जकं व्यङ्ग्यार्थस्य पूर्वज्ञानापेक्षयापि भवतीत्यपि न वाचकत्वमेव व्यञ्जकत्वम्। तद्वाचकानां वाचकत्वादिभन्नपदार्थज्ञानापेक्षा । व्यञ्जकानां तु सङ्गीतकाकलीकोलाहलादीनां रसादिव्यञ्जत्वेन पदार्थप्रतिसन्धानाभावोऽपीत्युभयोर्भेदः ।

तात्पर्यवृत्तौ च व्यङ्ग्यार्थबोधनमिति वादिनं प्रति दूषणान्तरमाह किञ्चेति । यत्परः शब्दः स शब्दार्थ इति न्यायेन व्यङ्ग्यस्य गुणीभावे शब्दस्य तत्परत्वाभावात् । व्यञ्जनाङ्गीकारे शब्दार्थत्वमनुपपन्नं स्यादिति कस्य व्यापारो संवेद्यः । पूर्व व्यञ्जनादृत इति शेषः । ननु गतोऽस्तमर्क इत्यादिवाक्येन प्रकरणादिरूपज्ञापकान्तरसहायेन बोधितस्य कान्तमभिसरेत्यादिव्यङ्ग्यार्थस्य कथं शब्दप्रमाणबोध्यत्वं शब्दैकसमधिकत्वाभावादिति चेत् अत्र केचिदाहुः यथा शब्दस्य बोधितस्य क्वचिद्वाक्यस्यार्थस्य सत्यासत्यजिज्ञासायां सत्यमेवायं प्रोक्तवानित्यन्वभावेन साधिते सत्यत्वे यथा शब्दप्रमाणवेद्यत्वं तया व्यङ्ग्यस्यापीति [?] नैवम् । तथाहि । वाच्योऽर्थो यः शब्दप्रमाणविषयः तस्य क्वचित् सत्यासत्यजिज्ञासायां सत्यत्वमनुमानविषय इति शब्दानुमानप्रमाणयोर्भिन्नविषयत्वम् । व्यङ्ग्यस्यत्वेक एव शब्दप्रमाणेन प्रकरणादिना च बोध्यत इति दृष्टान्तदार्ष्टान्तिकयोर्विषयभेदात् का गतिरिति चेत् अत्रैवं सङ्गतिः यथा प्रमाणादेर्विष्णुसिंहाद्यनेकार्थस्यापि हर्यादेरेकविधधियोऽनवच्छेदकत्वम्, यथानेकव्यञ्जकस्यापि शब्दस्यैव व्यङ्ग्ये प्रकरणसाम्यस्येतिकर्त्तव्यतारूपतया शब्दस्याङ्गत्वं साङ्गस्य व्यवधायकत्वं न्यायसिद्धमेवेति न शब्दप्रामाण्यव्याकोपः । इह च यद्यपि वाक्यार्थस्य प्रतीत्यनन्तरं तस्य सत्यासत्यजिज्ञासायां प्रतिपाद्यत्वं प्रमाणान्तरेणार्थज्ञानेनैव बोध्यते तथापि सत्यासत्यजिज्ञासातः पूर्वव्युत्पन्नाया वाक्यार्थप्रमाया अप्रमात्वाभावात् शब्दैकसमासगम्यत्वाच्च न शब्दप्रामाण्यव्याकोपः । न हि चक्षुरादिना प्रतीतौ सत्यासत्यजिज्ञासायां प्रत्यक्षप्रामाण्यं व्याकुप्यते ।

**साहित्यचूडामणिः**

इतोऽपि न वाच्यत्वमेव व्यङ्ग्यत्वमित्याह—वाचकानामिति अर्थवतामेव शब्दानां वाचकत्वम् । अर्थवन्तोऽपि शब्दा व्यञ्जकाः निरर्थका वर्णादयोऽपीति नार्थवत्त्वनैयत्यमेतेषाम् । तदाह—'अवाचकस्यापि गीतशब्दादे रसादिलक्षणावगमदर्शनाद् । अशब्दस्यापि चेष्टादेरर्थविशेषप्रकाशनप्रसिद्धेश्च' इति ।

अथ ध्वनाविव गुणीभूतव्यङ्ग्ये व्यङ्ग्यसिद्धिमुपपादयति—वानीरेति । तात्पर्य नाम शब्दानामिषूणामिव दीर्घदीर्घो व्यापार इत्यूचे । अतो यथा सायकस्य विपक्षवक्षःस्थले विश्रान्तिः, न मध्ये कुत्रचिद्, एवं शब्दशक्तिरपि पर्यन्तकाष्ठा विश्रान्ता चेद् युज्येतापि तात्पर्यम् । न चैवं गुणीभूतव्यङ्ग्ये, यस्मादत्र वाच्यस्य प्रतीयमानमर्थ प्रत्याययतो न तत्र विश्रान्तिः । अपितु पुनरपि स्वात्मन्येव, व्यङ्ग्यादपि तस्य चमत्कारोपयोगित्वात् ।

अतात्पर्यभूत इति पर्यन्तकक्ष्याविश्रान्त्यभावात्। स्वशब्दानभिधेय इति असंकेतितत्वात्। प्रतीतिपथमवतरन्ननपह्नवनीयतया परिस्फुरन्। व्यञ्जनव्यतिरेकेण कस्य व्यापारस्य गोचरतामाढौकताम्। व्यङ्ग्यस्य प्राधान्येनाविवक्षायां वाच्यत्वं तावद् भवद्भिर्नास्याभ्युपगन्तव्यम्, अतत्परत्वाच्छब्दस्य। तदस्ति तावद् व्यङ्ग्यः शब्दानां विषय इति।

अयं भावः—यत्परः शब्दः स शब्दार्थ इति यदि व्यङ्ग्यस्य प्राधान्ये वाच्यत्वमेव तस्याप्राधान्ये किं युक्तमिति चिन्तायां व्यङ्ग्यत्वमेवेति वक्तव्यम्। अथ यत्रापि तस्य प्राधान्यं, तत्रापि तादृक्त्वं समर्थितं समर्थयिष्यते च इति।

### सम्प्रदायप्रकाशिनी

एवं वाच्यव्यङ्ग्ययोरर्थयोर्भेदमभिप्रसाध्य वाचकव्यञ्जकयोः शब्दयोरपि भेदं दर्शयति—वाचकानामर्थेत्यादि। वाचकानि हि पदानि वाच्यार्थमपेक्ष्यैव वाचकतां लभन्ते। व्यञ्जकानि तु पदानि वाच्यं क्वचिदपेक्ष्य क्वचिदनपेक्ष्यापि व्यञ्जकतां लभन्ते। अभिधामूले हि ध्वनौ वाच्यमपेक्ष्य। अत्यन्ततिरस्कृतवाच्यादौ त्वनपेक्ष्यैव।

एवं ध्वनाविव व्यङ्ग्यस्य शक्यन्तरागोचरतां गुणीभूतव्यङ्ग्येऽपि दिङ्मात्रेण दर्शयति—वाणीरेत्यादिना। वाणीरकुडुङ्गुड्डीणेत्यत्र हि गुणीभूतव्यङ्ग्ये सचमत्कारो वाच्योऽर्थः स्वोपपादनाय व्यङ्ग्यमर्थमभिव्यंज्य पुनस्तरां सचमत्कारस्वरूप एव विश्राम्यति। अतो वाच्य एव तात्पर्यविषय इति तत्रैव तात्पर्यशक्तिर्युक्ता, न तु व्यङ्ग्ये। अत्र व्यञ्जनं चेन्नाङ्गीक्रियेत, तदानभिधेयो व्यङ्ग्योऽर्थः शक्त्या प्रतीयमानः कस्य व्यापारस्य विषयोऽस्तु।

### मधुमती

न केवलं वाच्यव्यङ्ग्ययोरेव वैधर्म्यम्। किन्तु वाचकव्यञ्जकयोरपीत्याह—वाचकानामिति। व्यञ्जकानां त्विति। निरर्थकवर्णादेरपि व्यञ्जकत्वादिति भावः।

किञ्च—यत्र व्यङ्ग्ये तात्पर्यं तत्रास्तु तद्बलात् तदुपस्थितिशङ्काऽपि, यत्र तु असुन्दरात्मकगुणीभूतव्यङ्ग्ये वाच्ये एव तात्पर्यम्, तत्र व्यञ्जना न प्रकारः इत्याह—किञ्चेति। विश्राम्यतीत्यत्र विश्रान्तिः—तात्पर्यम्। यद्यपि वाच्ये न विश्रान्तिः। तथापि तदभिव्यङ्ग्ये विश्रान्तिः। एतेन तात्पर्यनिर्वाहकत्वेन अनुमानादपि व्यङ्ग्योपस्थितिः निराकृतेति भाव्यम्।

### विस्तारिका

वाचकेत्यादि। गृहीतसङ्केतं सन्तमेवार्थं वाचका बोधयन्तीति तेषामर्थापेक्षित्वम् असदेव पावनत्वादिकं तटे बोधयन्तीति व्यञ्जकानां नार्थापेक्षेत्यर्थः। वाणीरेत्यादि। प्रतीयमानं व्यङ्ग्यम्। वाच्यमङ्गावसादरूपम्। विश्राम्यति व्यङ्ग्यमनपेक्ष्यैव विप्रलम्भं प्रकर्षयति। गुणीभूतव्यङ्ग्ये सुन्दराख्योऽर्थो व्यङ्ग्यः सङ्केतभङ्गः। चमत्कारप्रत्यासत्तत्वेनाप्रधानतया विधेयताविरहेणातात्पर्यविषयत्वात्। अनभिधेयो विधेयस्यैवाभिधेयत्वमित्युक्तत्वा-

दित्याहुः—अतात्पर्येत्यादि । स्वपदेन व्यङ्ग्याभिधानम् । तस्य शब्दस्तद्बोधकः । प्रमाणमुच्चारयति । प्रतीतीति । प्रतीतिरेव तत्र प्रमाणमित्यर्थः । शाब्दप्रतिपत्तौ व्यापारस्तन्त्रमित्याह—कस्येत्यादि ।

## सारबोधिनी

न केवलं वाच्यव्यङ्ग्ययोरेवं वैधर्म्यमपि तु वाचकव्यञ्जकयोरपीत्याह वाचकानामित्यादि । गृहीतसङ्केतः सन्तमेवार्थं वाचका बोधयन्तीति तेषामर्थपेक्षा । असदेव पावनत्वादिकं तटे बोधयतांव्यञ्जकानां नार्थपेक्षेत्यर्थः ।

## काव्यप्रदीपः

एवं स्वरूपादिभेदादवश्यमङ्गीकर्तव्यो वाच्यव्यङ्ग्योर्भेदः । किं च वाचकव्यञ्जकयोरपि वैधर्म्याद्भेदो वक्तव्यः । यतो वाचकस्य संकेतितार्थपेक्षा । संकेतित एव ह्यर्थेऽभिधा प्रवर्तते । न त्वेवं व्यञ्जकः । अन्यत्रापि व्यञ्जनया प्रत्ययजननात् । यच्चोक्तम्—'तात्पर्यविषये शब्दः प्रमाणं' इति तदितोऽप्यनुपपन्नम् । यतो व्यङ्ग्यस्य वाच्यताभ्युपगमेऽपि नानार्थन्यायेन तात्पर्यादेव नियमो वाच्यः । अन्यथा सर्वत्र सर्वव्यङ्ग्यप्रतीतिप्रसङ्गात् । तथा च यत्र 'वाणीरकुडङ्ग—'इत्यादौ व्यङ्ग्यप्रतीतावपि वाच्य एव चारुत्वविश्रामस्तत्र तात्पर्याविषयो व्यङ्ग्योऽर्थः कथं प्रतीयेत । यत्परः शब्दः इत्युक्तमते तु सुतराम् । एतेन 'तात्पर्यमेक व्यङ्ग्यप्रतीतौ व्यापार' इत्यपि निरस्तम् । तस्मात्तात्पर्यमभिधा वा न प्रतीयमानेऽर्थे व्यापारः । नन्वस्तु लक्षणा । नहि वाच्यवलक्ष्योऽपि व्यवस्थितो विशेषव्यपदेशाहेतुर्वा ।

## आदर्शः

नन्विदमयुक्तम्, सर्वं वैधर्म्यमेकस्या अभिधायाः सहकारिभेदानुपपद्यत एवेत्यत आह—वाचकानामिति । अभिधया अनुभावकानां पदार्थोपस्थितिसापेक्षत्वं व्यञ्जना अनुभावकानां तेषामेव तु विशिष्टस्मरण इव पदार्थोपस्थित्यनपेक्षत्वमपीत्यर्थः क्वचिद्दैववशसम्पन्नतदुपस्थितिसापेक्षत्वमपि व्यक्तिविशेषं प्रतीत्यपेरर्थः ।

ननु दीर्घतरीभूताया अभिधाया एवायं स्वभावो विषयविशेषभेदेन वक्तव्य इत्यत माह—किञ्चेति । शक्तिग्राहककोषाद्यभावेऽपि व्यङ्ग्यार्थे अभिधास्वीकारे प्रमाणं तावत् तव इषुव्यापारदृष्टान्त एव, इषुव्यापारस्य च भिन्नलक्ष्यपुनर्भेदनं नास्तीत्यतो वाणीरकुडङ्गेत्यादावभिधया व्यङ्ग्यार्थं बोधयित्वा रसबोधनार्थ कथं भवन्मते स्वसहायार्थमभिहितार्थपुनरभिधानम्, अतो व्यङ्ग्यार्थो नाभिधागम्यः, तथाच कस्य व्यापारस्य गम्यः स्यादित्यर्थः । 'स्वरूपे' वाच्यतास्वरूपे । 'विश्राम्यति' तिष्ठति, पुनरपि वाच्य एव स्यादित्यर्थः । 'अतात्पर्यभूतः' शक्तिग्राहकपुरुषतात्पर्याविषयीभूतः । न च तत्र वाच्यस्य नाभिधया पुनर्बोधः किन्तु स्मरणमेवेति वाच्यम्, एवं सति वाच्यार्थस्मरणकाले अभिधाविरामे नाभिधा रसबोधिका, तथाच रसबोधनार्थं व्यञ्जनास्वीकारध्रौव्ये इषुव्यापारदृष्टान्तेनाभिधाया दीर्घतरत्ववादः पराहत एवेति भावः ।

## सुधासागरः

न केवलं वाच्यव्यङ्ग्ययोरेव वैधर्म्यं किन्तु वाचकव्यञ्जकयोरपीत्याह—वाचकानामित्यादि । अयमाशयः—वाचकव्यञ्जकयोरपि वैधर्म्याद्भेदो वक्तव्यः । यतो वाचकस्य सङ्केतितार्थपेक्षा । सङ्केतिते एवार्थेऽभिधा

प्रवर्त्तते। न त्वेवं व्यञ्जकः। अन्यत्रापि व्यञ्जनया प्रत्ययजननात्। अयमर्थः—गृहीतसङ्केतं सन्तमेवार्थं वाचका बोधयन्तीति तेषां सङ्केतितार्थापेक्षा। असदेव पावनत्वादिकं तटे बोधयन्तीति व्यञ्जकानां तदनपेक्षेति।

उक्तं मतद्वयं सिंहावलोकनन्यायेन पुनराक्षिपति—किञ्च—वाणीरेत्यादि। प्रतीयमानं व्यङ्ग्यम्, वाच्यमङ्गावसादरूपम्। विश्राम्यति व्यङ्ग्यमनपेक्ष्यैव विप्रलम्भं पोषयति।

गुणीभूतव्यङ्ग्ये असुन्दराख्ये। अर्थो व्यङ्ग्यः सङ्केतभङ्गश्चमत्काराप्रत्यासन्नतयाऽप्रधानत्वेन विधेयताविरहेणातात्पर्यविषयत्वादनभिधेयो 'विधेयस्यैवाभिधेयत्वम्' इत्युक्तत्वादित्यभिप्रेत्याह—अतात्पर्येत्यादि। स्वपदेन व्यङ्ग्याभिधानं तस्य शब्दस्तद्बोधकः। प्रमाणमुत्थापयति—प्रतीतिपथमिति। प्रतीतिरेव तत्र प्रमाणमित्यर्थः। अयमाशयः यदुक्तं तात्पर्यविषये शब्दः प्रमाणमिति, तदितोऽप्यनुपपन्नम्, यतो व्यङ्ग्यस्य वाच्यताऽभ्युपगमेऽपि नानार्थन्यायेन तात्पर्यादेव नियमो वाच्यः, अन्यथा सर्वत्र व्यङ्ग्यप्रतीतिप्रसङ्गात्। तथा च यत्र वाणीरकुडुंग्वित्यादौ व्यङ्ग्यप्रतीतावपि वाच्य एव चारुत्वविश्रामस्तत्र तात्पर्यविषयो व्यङ्ग्योऽर्थः कथं प्रतीयेत। यत्परः शब्द इत्युक्तमते तु सुतराम्। एतेन तात्पर्यमेव व्यङ्ग्यप्रतीतौ व्यापार इत्यपि निरस्तम्। तस्मात्तात्पर्यमभिधा वा न प्रतीयमानेऽर्थे व्यापारः।

---

ननु—'रामोऽस्मि सर्वं सहे' इति, 'रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्' इति।

रामोऽस्मि भुवनेषु विक्रमगुणैः प्राप्तः प्रसिद्धिं पराम्' इत्यादौ लक्षणीयोऽप्यर्थो नानात्वं भजते विशेषव्यपदेशहेतुश्च भवति तदवगमश्च शब्दार्थायत्तः प्रकरणादिसव्यपेक्षश्चेति कोऽयं नूतनः प्रतीयमानो नाम।

उच्यते, लक्षणीयस्यार्थस्य नानात्वेऽपि अनेकार्थशब्दाभिधेयवन्नियतत्वमेव न खलु मुख्येनार्थेनाऽनियतसम्बन्धो लक्षयितुं शक्यते। प्रतीयमानस्तु प्रकरणादिविषयवशेन नियतसम्बन्धः, अनियतसम्बन्धः सम्बद्धसम्बन्धश्च द्योत्यते।

न च

**अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि।**

**सा पहिअ, रत्तिअन्धअ, सेज्जाए मह णिमज्जहिसि॥१३६॥**

इत्यादौ विवक्षितान्यपरवाच्ये ध्वनौ मुख्यार्थबाधः। तत्कथमत्र लक्षणा? लक्षणायामपि व्यञ्जनमवश्यमाश्रयितव्यमिति प्रतिपादितम्।

---

**सङ्केतः**

ननु यथा व्यङ्ग्यः प्रस्तावादिबलात् अनेकः, तथा लक्ष्योऽपीति, तत्र व्यङ्ग्यस्यान्तर्भावो लक्ष्यः इत्याह ननु रामोऽस्मीति। स्निग्धश्यामलेत्यादिः। अत्र वनवासादिः अनन्तो लक्ष्योऽर्थः। रामेणेति। प्रत्याख्यानेत्यादिः।

अत्र हि रामपदं साहसैकरसत्वाद्यनन्तलक्ष्यार्थसङ्क्रमितवाच्यं व्यञ्जकम्। विशेषेति। यथा व्यङ्ग्यवेदी विदग्ध इति व्यपदिश्यते, तथा लक्ष्यवेद्यपि लक्षक इति व्यपदिश्यते—इत्यपि तुल्यमिति भावः। नामेत्यसूयायाम्।

अनेकार्थेति। हरिशब्दार्थवदित्यर्थः। न खल्विति। अनेन तद्योगादिकस्य नियतत्वमुक्तम्। यथा गङ्गाशब्दः मुख्येन स्वार्थेन सम्बद्धं तटादि लक्षयति, न तथा वनादि लक्षयितुं शक्नोति। ध्वनिस्तु प्रस्तावादिसामग्रीवशात् विचित्रो भातीति भवः।

क्वचिच्च अभिधामूले ध्वनौ लक्षणां विनाऽपि व्यञ्जकत्वं दृश्यते इत्याह—न चेति। अत्तेति। ह्रस्वं दिवसं दिवसकम्। दिवसशब्दः पुंक्लीवः। ततोऽल्पं दिनमस्ति, तस्मात् प्रलोकय। यदि वा 'कालाध्वभावदेशं' इति आधारे द्वितीया। तत् कथमिति। तथाच अत्र लक्षणां विनाऽपि व्यञ्जकत्वं स्यादित्यर्थः। यतोऽत्र अभिधामूलत्वमिति।

अभिधापुच्छेति। अमुख्यया वृत्त्या सङ्केतग्रहणस्यापि तत्र भावात् अभिधावयवत्वमेव लक्षणायाः। तदेव अभिधाशेषभूतैव लक्षणा अभिधाव्यापारमाश्रिता, अस्याः लक्षणायाः तद्बाधेनोत्थानात्, ध्वनेस्तु अभिधाव्यापारोतीर्णत्वात्। एवं च भिन्नविषयत्वेन कथं व्यञ्जनलक्षणयोरैक्यम्?।

**संङ्केतः (रुय्यकः)**

**श्वश्रूरत्र शेते अत्राहं दिवसकं प्रलोकय।**
**मा पथिक रात्र्यन्ध शय्यायामावयोः शयिष्ठाः॥**

महमिति निपात आवयोरित्यर्थे। अत्र शेष्वेति विधिः प्रतीयमानः।

**बालचित्तानुरञ्जनी**

ननु यथा व्यङ्ग्यः प्रकरणादिबलादनेकस्तथा लक्ष्योऽपीति, तत्र व्यङ्ग्यस्यान्तर्भावो भविष्यतीति शङ्कते नन्विति।

**स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना**
**वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।**

**कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे**
**वैदेही तु कथं भविष्यति ह हा हा देवि धीरा भव॥**

इति श्लोके रामोऽस्मीत्यत्र कठिनहृदयत्वं वनवासादिदुःखभाजनत्वञ्चेत्यादिरनन्तो लक्ष्योऽर्थः।

**प्रत्याख्यानरुषः कृतं समुचितं क्रूरेण ते रक्षसा**
**सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः।**

**व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा**
**रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्॥**

इति श्लोके, रामेण प्रियजीवितेत्यत्र कातरत्वं, कैतवस्नेहत्वं वेत्यादिर्लक्ष्योऽर्थः। 'रामोऽसावि'त्यत्र सर्वलोकातिशायित्वं खरदूषणादिराक्षसहिंसानिपुणत्वं लक्ष्योऽर्थ इति लक्ष्योऽर्थो नानाविध इत्यर्थः। यथा व्यङ्ग्यबोद्धुर्व्यञ्जक इति व्यपदेशस्तथा लक्ष्यार्थबोद्धुर्लक्षकः। इति विशेषव्यपदेश इत्यपि समानम्। अतो व्यङ्ग्यं लक्ष्येऽन्तर्भवतीति न व्यङ्ग्यं पृथगिति भावः।

व्यङ्ग्यलक्ष्ययोर्भेदं दर्शयन् परिहति उच्यत इति । व्यङ्ग्यवल्लक्षणीयो नानाविधो गोशब्दार्थवन्नियतसम्बन्ध एव । यथा गङ्गायां घोष इत्यादौ मुख्येन गङ्गाशब्दार्थेन तटादिर्लक्ष्यते न तथा पावनत्वादिरपि अनियतसम्बन्धो लक्षयितुं शक्यत इति उक्तमेवार्थं विशदयति न खल्विति । व्यङ्ग्योऽर्थस्तावदेवंविधो न भवतीत्याह प्रतीयमानस्त्वति ।

यत्र यत्र व्यङ्ग्यप्रतीतिस्तत्र लक्षणा न भवतीत्याह न चेति ।

**अत्ता एत्थ णुमज्जइ एत्थ अहं दिअसअं पुलोएहि।**
**मा पहिअ रत्तिअंधअ सेज्जाए महं णुमज्जिहिसि ॥**

**श्वश्रूरत्र निषीदति अत्राहं दिवसकं विलोकय।**
**मा पथिक रात्र्यन्ध। शय्यायामावयोर्निषीदसि ॥**

अत्र च न मुख्यार्थबाध इत्यन्वयः । मुख्यार्थबाधाभावादत्र लक्षणा नास्तीत्यर्थः । किञ्च प्रयोजनं विना लक्षणाया नोपयोग इति लक्षणायामपि व्यञ्जनाव्यापारोऽङ्गीकर्तव्य इति प्राक् प्रतिपादितम् । अतस्तयोर्भेदोऽङ्गीकर्तव्य इत्याह लक्षणायामपीति ।

ननूभयोर्नियतत्वानियतत्वरूपात्तत्र भेदोऽस्तु नानात्वभजनादिना धर्मेणाभेदः किं न स्यादित्यत आह यथा चेति । अभिहितान्वयपक्षमाश्रित्य मुख्यार्थबाधादित्रयमेव समय इत्युक्तम् । यथा अभिधालक्षणयोः सङ्केतापेक्षत्वसाम्येऽपि मुख्यार्थेबाधादित्रयरूपसङ्केतविशेषादिना भेदस्तथा लक्षणाव्यञ्जनयोरपि नानात्वभजनादिधर्मसाम्येऽपि नियतत्वरूपावान्तरभेदेन भेद इति भावः । अभिधालक्षणयोर्भेदकमाह अत एवेति । यत उभयोर्भेदः, अतः मुख्यया वृत्या सङ्केतग्रहणमपि तत्रास्तीति अभिधाशेषभूता लक्षणा । उभयोरभेदे शेषशेषिभावो न स्यादिति भावः । व्यञ्जना लक्षणैवेति यदुक्तं तद्दूषयति न चेति ।

## काव्यादर्शः

तथा वाचकानां समयनियमिताभिधाव्यापाराणां शब्दानां, व्यञ्जकानां तद्वद् वर्णादीनामर्थनिरपेक्षाणामनियतव्यञ्जनशक्तीनां कथं न वैलक्षण्यमित्याह—वाचकानामिति । यत्परः शब्दः स शब्दार्थ इति ।

पुनर्दूषयन्नाह—किंचेति । वाच्यं स्वरूप एवेति । वाच्यार्थप्रतिपत्तिपुरःसरं प्रतीयमानार्थप्रतीतिः, तदनन्तरं च तृतीयकक्ष्यायां वाच्यं प्राधान्यात् स्वरूप एव विश्राम्यति । चारुरूपविश्रान्तिस्थानाभावे व्यञ्जकत्वव्यापारो नोन्मीलतीति प्रत्यावृत्य वाच्यस्य स्वरूप एव विश्रान्तिः क्षणदृष्टनष्टदिव्यविभवप्राकृतपुरुषवत् । अतात्पर्यभूतोऽपीति । व्यङ्ग्यस्याप्राधान्ये वाच्यत्वं तावत् तात्पर्यार्थवादिभिरपि नाभ्युपगम्यतेऽतत्परत्वाच्छब्दस्येति वाचकत्वाद् अन्यदेव व्यञ्जकत्वम् । स्वशब्दानभिधेय इति रसादिरूपः । कस्य व्यापारस्येति, अर्थात् व्यञ्जनव्यापारस्यैवेति । व्यङ्ग्यपरत्वेऽपि काव्यस्य न व्यङ्ग्यस्याभिधेयत्वं, किं तु व्यङ्ग्यत्वमेव ।

वाच्योऽर्थ एक एवेति नियतोऽसौ, व्यङ्ग्यस्तु प्रकरणादिबलाद् अनेक इत्यादिः प्राक्प्रतिपादितो वाच्यव्यङ्ग्ययोर्भेदोऽपि सव्यभिचारोऽन्यत्रापि दर्शनादिति पुनः पूर्वापक्षयन्नाह—ननु रामोऽस्मीति । अत्र वनवासादिरनवधिर्लक्ष्योऽर्थः ।

**'प्रत्याख्यातरुषः कृतं समुचितं क्रूरेण ते रक्षसा**
**सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः।**
**व्यर्थं संप्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा**
**रामेण प्रियजीवितेन'। इति।**

अत्र राम-पदं साहसैकरसत्वादिलक्ष्यार्थसंक्रमितवाच्यं व्यञ्जकम्। विशेषव्यपदेशेति। यथा व्यङ्ग्यबोद्धुर्विदग्ध इति व्यपदेशः, तथा लक्ष्यार्थबोद्धुरपि लक्षक इति विशेषव्यपदेश इत्यपि समानम्। अनेकार्थशब्देति, गोशब्दार्थवत्। न खल्विति। यथा 'गङ्गायां घोषः' इत्यादौ मुख्येन गङ्गाशब्दार्थेन तदादिर्लक्ष्यते, न तथा वनादिरपि लक्षयितुं शक्यते। व्यङ्ग्यस्तु विचित्रः प्रकाशते, प्रकरणादिसामग्रीवैचित्र्यात्। क्वचिच्च अभिधामूले ध्वनौ लक्षणां विनापि व्यञ्जकत्वमित्याह—न चेति। गाथेयं तृतीयोल्लासे व्याकृता। अभिधापुच्छभूतेति। अमुख्यया वृत्त्या संकेतग्रहणामपि तत्रास्तीत्यभिधाशेष भूतैव लक्षणा ततोऽभिधाव्यापारमाश्रिता, तद्बाधेनोत्थानात् कथं ध्वनेर्व्यञ्जनात्मनो लक्षणं स्याद्, भिन्नविषयत्वाद्।

## विवेकः

एव व्यङ्ग्यस्य वाच्यत्वं निराकृत्यास्य लक्ष्यत्वसम्भावनां निराचिकीर्षुराशङ्कते नन्विति। यत् किञ्चिद्व्यङ्ग्यत्वे प्रमाणमुक्तं तत् सर्वं लक्ष्यत्वेऽप्यस्ति। तथाहि—रामोऽस्मीत्यादौ राज्यभ्रंशवनवासादयो लक्ष्यन्ते, प्रत्याख्यानरुचैः (रुषः) कृतं समुचितं क्रूरेण ते रक्षसा सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः। व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा रामेण प्रियजीवितेन तु कृतं प्रेम्णाः प्रिये नोचितम्॥ (रा.अडम अः) इत्यत्र मायासीताशिररछेददर्शने 'राम'पदेन साहसैकरसिकत्व-दुष्कृतफलभीक्तृत्वशोच्यजनात्वादयः, रामोऽसावित्यत्र लोकोत्तरपौरुषत्वादय इति। कोऽयमभिनव इति यतः शब्दो वाचको लाक्षणिकश्चेति विपश्चिद्भिर्निश्चित्य द्विधेवाभिदधे, तद्व्यापारोऽप्यभिधालक्षणलक्षणतया द्विधैव, तद्विषयोऽपि वाच्यलक्ष्यरूपतया तावानेवेत्यश्रुतपूर्वतया किंशब्दः प्रश्ने, नामेत्यसूयायां, लक्ष्यातिरिक्तो नास्त्येवेत्यर्थः।

अत्र सिद्धान्तमाह—लक्षणीयस्येति। प्रतीयमानस्तु वक्तृप्रतिपत्ति(त्तृ) प्रकरणादिसामग्री सन्निधानाच्चारुत्वातिशयलक्षणोपाधिप्रभव औपाधिकः प्रवर्तक इत्यौपाधिकत्वेन प्रवृत्तेर्न तथेति। अतिव्याप्तिञ्चास्य दर्शयति न चेति। 'अत्ता एत्थे' त्यादि गाथा प्रागेव व्याख्याता (४४ पृः)।' अविवक्षितवाच्यो ध्वनिः कथं लक्षणातो भिद्यत इति चेदत्राह लक्षमायामपीति। एतेनाश्रयाश्रयिभावादनयोरैक्यं सर्वथा न सम्भवतीत्युक्तं भवति। अथ प्रयोजनविषयोऽपि द्वितीयो लक्षणाव्यापार एवास्त्विति चेदत्राह यथा चेति। अभिधापुच्छभूता तच्छेषभूतेत्यर्थः।

## दीपिका

इयता प्रबन्धेन व्यञ्जनस्याभिधातात्पर्यव्यतिरेकं प्रसाध्य लक्षणाव्यतिरेकं प्रसाधयितुं पूर्वपक्षमाह—नन्विति। 'रामोऽस्मि' इत्यादौ राज्यभ्रंशवनवासक्लेशसहिष्णुतादयः।

**"प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा**
**सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः ।**
**व्यर्थं सम्प्रति बिभ्रता धनुरिदं तद्व्यापदः साक्षिणा**
**रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम् ॥**

इत्यत्र साहसैकरसिकत्वरणशौण्डतादयः । 'रामोऽसौ' इत्यत्रालौकिकप्रभावत्वादयो राम पदेन लक्ष्यन्त एवेति भवद्भिरप्यङ्गीक्रियते । तस्य प्रकरणादिसाचिव्येन नानात्वं प्राधान्यादिना ध्वन्यादिव्यपदेशबीजत्वं मुख्यार्थसम्भेदादिनाऽर्थान्तरसंक्रमितवाच्यादिव्यपदेशहेतुत्वम् । यच्च व्यञ्जनागम्यस्यार्थस्योभयशक्तिमूलत्वमुक्तं तदपि तत्रास्त्वेव । लक्षणया बाधिताभिधानमुख्यार्थे सम्बन्धापेक्षत्वात् प्रकरणादि लक्षणोत्थापकमेव भविष्यतीति सर्वस्यैव व्यञ्जनानियामककलापस्यान्यथाऽप्युपपत्तेः कुतस्त्यस्तदुपगम् इत्यर्थः ।

अक्षरार्थस्तु शब्दार्थयत्त इति । अत्रार्थशब्दोऽभिधेयवचनः । कोऽयमिति सकामाक्षेपे । अत्र हेतु नूतन इति । प्राचीनतन्त्राप्रसिद्धत्वेनासाम्प्रदायिक इत्यर्थः । प्रतीयमान इति—योऽयं लक्षणिकातिरिक्तोऽभ्युपगम्ते । नाम प्रकाश्ये । अत्रोद्धारमाह—उच्यत्र इति ।

अत्रायमुपस्कारः—किमभिधेयव्यतिरिक्तः सर्व एवार्थो लाक्षणिक इत्यनुमतमस्त्येव दीर्घायुषः, किं वा व्यक्तिर्नियमेन लक्षणासमानाश्रयेति तत्पदे सैवाभिषेच्या लाघवायेति ?

यद्वा 'रामोऽस्मि' इत्यादि तावल्लक्षणयैव गतार्थम्, ततस्तद्दृष्टान्तेनान्यत्रापि तथैव साधयिष्याम इति । अथवा साङ्केतितस्मृतिविन्नियतेतिकर्तव्यतानिरपेक्षतया साजात्यमेव व्यञ्जनालक्षणयोरिति । अन्यत्र वा यथा तथाऽस्तु, लक्षणास्थले तु तयैव गतार्थत्वमिति तदनुगतनैगत्येन वाऽभिधास्यमानत्वस्य बुद्धिसंयोगादि श्रुत्यादिवद्वा पृथगनादरणीयं व्यञ्जनमिति । यदि वा निर्व्रीडीभूय विरोधापहस्तितया शब्दव्यापारो वाचकत्वलक्षणात्वयोरन्यतरत्वं व्यभिचरति, निर्विवादस्थले तथैव दर्शनादिति वाच्यम्, तत्राद्ये लक्षणीयस्येति । नानात्वेऽपि सामग्र्या वैचित्र्येण सम्भाव्ये नियतत्वमेव प्रकरणादिवशात्, स्वरूपवैचित्र्येऽपि प्रसिद्धागमाद्वेतिकर्तव्यताकव्यापारबोध्यत्वमेव ।

एतदेवाह—न खल्विति । उपलक्षणञ्चैतत्, प्रतीयमानापेक्षायामपि ज्ञेयम् । न चैवं व्यङ्ग्यं प्रति नियतेतिकर्तव्यतारहितत्वाद् व्यञ्जनाया इत्याह—प्रतीयमानस्त्विति । तु व्यतिरेके । नियतत्वानियतत्वे त्वत्र प्रसिद्धे । अन्यथा सम्बन्धनियमाभावे व्यञ्जनेति प्रसक्तेः । इत्थमवान्तरवैधर्म्येऽपि यदि लक्ष्यव्यङ्ग्ययोरेकवृत्ति बोध्यता, तदानीमभिधेयलक्ष्ययोरपि न सा कस्मादिति भावः ।

द्वितीये-न चेति । अत्ता श्वश्रूः । णिमज्जइ निषीदति । दिअसअमिति । कालकर्मता । महमिति निपात आवयोरित्यर्थे । अन्यथा विशिष्टवचननिवेशेनाशङ्का स्यादिति श्रीमदाचार्याः । न चात्र मुख्यार्थबाध इति प्रतीतिपर्यवसानादित्यर्थः । तृतीये—लक्षणायामिति । 'रामोऽस्मि' इत्यादावपि हि वनवासादिदुःखसहिष्णुत्वादिधर्मविशिष्टरामार्थेनान्वयप्रतीत्यनन्तरं तेषामेव धर्माणामतिशयो व्यङ्ग्यः । तत्प्रतीतिश्च स्वसंवित्तिसाक्षिका । तदनङ्गीकारे

च लक्षणफलमपि नास्तीति सर्वमेव प्राचीनं स्मारयति-प्रतिपादितमिति। एतेन मूलत एवासिद्धेः स्थानान्तरप्रत्याशाया बीजमेव नास्तीति सूचितम्।

तुर्ये—यथा चेति। समयप्रायो विशेषो व्यञ्जनातो वैलक्षण्यं समयविशेषः। यथा खलु समयप्रतीतावेवाभिधानं व्याप्रियते, तथा मुख्यार्थबाधसम्बन्धरूढिपरिज्ञानं नास्तीति, तत् प्रतीतेर्लाक्षणिकप्रतीतिकार्यत्वात्, तथापि रूढिविहरात् किमप्यत्र प्रयोजनं भविष्यतीति प्रतीतेः कदाचित् सम्भाव्यत इति साधारण्येन त्रितयोक्तिः।

यद्वा रूढिविषयैव त्रितयोक्तिः। प्रयोजनेऽपि यद्यपि सद्भावस्तथापि लक्षणाजातौ सम्भवमात्रेणोक्तं त्रितयेति। न तु समयस्य विशेष इति ज्यायसी व्याख्या। न खलु वाचकत्ववत् स्वार्थबाधादिना परार्थो ज्ञेय इति सङ्केत्यते, किन्तु वाचकताव्युत्पन्नः स्वमेव वाच्यान्वयानुपपत्त्याऽन्वययोगार्थं लक्षयतीति। न चैवं व्यञ्जने, तस्य व्याप्रियमाणतायां ज्ञायमानप्रतिनियतनिमित्तसाचिव्यापेक्षाविरहात्। पुच्छभूतेति। पुच्छ एकदेश विशेष इति यावत् सा लक्षणा।

**दर्पणः**

एवं व्यङ्ग्यस्य वाच्यत्वं तात्पर्यविषयत्वं च निराकृत्य लक्ष्यत्वसंभावनां निराचिकीर्षुराशङ्कते नन्वित्यादिना प्रतीयमानो नामेत्यन्तेन ग्रन्थेन।

**रामोऽस्मीत्यादौ राज्यभ्रंशक्लेशसहिष्णुतादयः।**
**प्रत्याख्यानरुचेः कृतं समुदितं क्रूरेण यद्रक्षसा**
**सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः।**
**व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा**
**रामेण प्रियजीवितेन नु कृतं प्रेम्णः प्रिये नोचितम्॥**

इत्यत्र मायासीतादर्शने सहसैकरसिकत्वदुष्कृतफलभोक्तृत्वादयः। रामोऽस्मीत्यादाव लौकिकप्रभावत्वादयो रामपदेन लक्ष्यन्त एवेति भवतामपि मतं प्रकरणादिसाचिव्येन उक्तरीत्या नानाविधे प्राधान्यादिना धर्म्या पदेत्यादि व्यपदेश्यबीजं[?] वाच्यस्यार्थान्तरसङ्क्रमणादिनाऽर्थान्तरसङ्क्रमितवाच्यत्वादिव्यपदेहेतुः। अर्थोऽभिधेयः। एवञ्चोक्तस्य सर्वस्य व्यङ्ग्यप्रकारस्य लाक्षणिकेऽप्युपपत्तेः तदतिरिक्तः कोऽयं नूतनः प्राचीनतन्त्राप्रसिद्ध असाम्प्रदायिषु[?] प्रतीयमानो नाम?

प्रकाश्य सिद्धान्तमाह-नियतत्वं नियतसम्बन्धत्वम्। एतदेवाह न खल्विति। वाच्यार्थव्यङ्ग्यार्थयोः सम्बन्धस्य नियतत्वानियतत्वे एतदुदाहरणव्याख्याने स्फुटीकरिष्यति न चेति। न च मुख्यार्थबाध इति सम्बन्धः। किन्तु वाच्यवाचकभावाव्युत्पन्नः स्वयमेव मुख्यार्थस्यान्वयानुपपत्तौ अन्वययोग्यमर्थं लक्षयति। व्यञ्जनायास्तु ज्ञायमानप्रतिनियतानिमित्तसापेक्षविरहात् कथं लक्षणाभावः। सुहृद्भता सा लक्षणा। तदनुगमेन तस्या लक्षणायाः पश्चाद्व्याप्रियमाणतया अवाचकवर्णानुमिद्यादयः।

आदि शब्दादधोमुखत्वादि भङ्गादि। एवमुक्तं सर्वमेव कारणार्थमुपसंहरति इतीति। अतिवर्ती अतिक्रान्तो विषयः। अनपह्नवनीयः अपह्नोतुमशक्यः।

## साहित्यचूडामणिः

अथ लक्षणाविषयत्वं तस्यास्त्विति शङ्कते-नन्विति। आदिपदेन 'रामो द्विर्नाभिभाषत' इत्यादि। रामोऽस्मीति राज्यभ्रंशादिक्लेशसहिष्णुत्वम्। रामेण प्रियजीवितेनेति पुरुषकारपराङ्मुखत्वम्। रामोऽसाविति सर्वलोकातिशायित्वमिति लक्षणीयोऽप्यर्थो बहुत्वमवलम्बते, न केवलं व्यञ्जनीयः। विशेषेण वैलक्षण्येन यो व्यपदेशः बोद्धृत्वव्यतिरेकेण विदग्ध इति प्रत्येतुः, प्रतीतिव्यतिरेकाच्चमत्कार इति प्रत्ययस्य, तद्धेतुर्भवति। शब्दार्थेति। द्वयोरपि लक्षकतयाङ्गीकारात् किन्निबन्धनमस्य वैचित्र्यमित्यत्राह—प्रकरणादीति। नूतनः अन्यत्रानुल्लिखितपूर्वः।

दूषयति—उच्यत इति। अनेकार्थेति। गवादिशब्दवन्नियतत्वमेव लक्षणीयस्य, न पुनर्व्यङ्ग्यस्येव सर्वतोमुखता। व्यतिरेकतो हेतुमाह—न खल्विति।

अनियतेति। अव्यवस्थिसम्बन्धः—

**अभिधेयेन सम्बन्धात् सादृश्यात् समवायतः।**
**वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा मता॥**

इत्युक्तवाद यथोचितसम्बन्धनैयत्यरहितस्यार्थस्य लक्षयितुमशक्यत्वम्, अतिप्रसङ्गात्। व्यङ्ग्यविषयमनैयत्यमाह—प्रतीयमानस्त्विति। क्वचिदिन्यतसम्बन्धः क्वचित् सम्बद्धसम्बन्धः इति सर्वाकारमनैयत्यम्।

नन्वविक्षितवाच्ये लक्षणया व्यञ्जनविरोध इति कथञ्चिदाशङ्क्यतां, विवक्षितान्यपरवाच्ये तु कथम्, मुख्यार्थभङ्गाद्यभावादित्याह—न चेति।

अत्ता इति।

**श्वश्रूरत्र शेतेऽत्राहं दिवसकं प्रलोकय।**
**मा पथिक! रात्र्यन्ध! शय्यायामावयोः शयिष्ठाः॥**

इति। महं इति निपातोऽनेकार्थवृत्तिः आवयोरित्यर्थे, ममेत्येकवचनस्य शङ्कावहत्वात्। अत्रेति। प्रयत्नादनिभृतसंभोगपरिहारेण भाव्यम्, दिवसकः कुत्सितो दिवसः। प्राकृते हि न लिङ्गनियमः। मा त्वं यावदस्तमयं त्वरिष्ठाः, न सर्वथा त्वामुपेक्षे, यस्मादत्रैवाहं तत् प्रलोकय मिथो मुखावलोकनविनोदेन दिनमतिवाहयावः, पश्चाच्छ्वश्रूनिद्रान्वेषणपूर्वकं यथोचितमाचरावः' इति व्याख्यायां न व्यक्तिविवेकव्याकृतावद्यावतारः।

अत्र न लक्षणासामग्री तस्याश्च प्रयोजनावश्यम्भावः तच्च व्यङ्ग्यमिति न पुनरपि व्यङ्ग्याङ्कुरोत्पत्तिरित्याह—लक्षणायामिति। यथाभिधा सङ्केतसहाया तथा मुख्यार्थबाधादिसव्यपेक्षा लक्षणा, तत्र त एव प्रमाणमित्याह—अत एवेति। अभिधायाः पुच्छभूता न तु स्वतन्त्रेत्याहुः। सङ्केतापेक्षिण्यभिधा सङ्केतितार्थापेक्षिणी लक्षणा इति क्रियानस्या उच्छ्रायः।

**सम्प्रदायप्रकाशिनी**

इत्थमभिधातात्पर्यशक्त्योरगोचरत्वं व्यङ्ग्यस्य सप्रपञ्चमुपपाद्य लक्षणाशक्त्यगोचरतामपि युक्तिविशेषैरुपपादयति-ननु रामोऽस्मीत्यादिना। लक्षणीयो हि रामशब्दार्थो 'रामोऽस्मि सर्वं सह' इत्यत्र कठिनहृदयत्वदुःखैकायतनत्वादिलक्षणेऽर्थान्तरे संक्रामति। 'रामेण प्रियजीवितेने'त्यादौ कैतवस्नेहत्वादौ। 'रामोऽसौ भुवनेष्वि' त्यादौ तु सकललोकातिशयितविक्रमात्वादौ। अतो लक्षणीयार्थस्य नानात्वं दृश्यते, वाच्यापेक्षया विशेषव्यपदेशहेतुत्वं च, शब्दार्थायत्तश्चैतदवगमः, वैविध्ये प्रकरणवक्त्रादिसव्यपेक्षश्चेति या या व्यङ्ग्ये सामग्री दर्शिता, सा सर्वैव लक्ष्ये दृश्यत इति कोऽयं प्रतीयमानो नाम नूतनोऽर्थ इत्याक्षेपः। तदेतत् समाधत्ते—उच्यते लक्षणीयस्येत्यादिना। यद्यप्युक्तोदाहरणेषु लक्षणीयोऽर्थो नानारूपः, अथापि अनेकार्थशब्दवाच्यवन्नियतत्वं न जहाति। ननु कथं नियतत्वमित्यत आह—न खलु मुख्येनेत्यादि। ननु दोषोऽयं व्यङ्ग्येऽपि तुल्य इत्यत आह—प्रतीयमानस्त्वित्यादि। यथा प्रतीयमानो मुख्येन नियतसम्बन्धोऽनियतसम्बन्धः सम्बद्धसम्बन्धश्च तदुदाहृत्य दर्शयिष्यति। लक्ष्यपक्षे स्फुटं दोषान्तरमाह—न च अत्ता एत्थेत्यादि।

**श्वश्रूरत्र शेते अत्राहं दिवसं प्रलोकय।**
**मा पथिक रात्र्यन्ध शय्यायां मम निमाङ्क्षीः॥**

दिवसमित्यत्यन्तसंयोगे द्वितीया। अत्र हि न वाच्यबाधः, अन्यपरत्वेन विवक्षणात्। अतो लक्षणैव नास्ति। कथं लक्ष्यत्वं व्यङ्ग्यस्य सङ्गच्छताम्। ननु यत्र लक्षणा तत्रायं दोष इत्यत आह—लक्षणयामपीत्यादि। प्रतिपादितं, द्वितीय इति शेषः। नियतत्वादभिधालक्षणयोर्भेदोऽप्यल्पक इत्याह—यथा च समयेत्यादि। अभिधाप्रायतायाः प्रामाणिकप्रसिद्धिं दर्शयति—अत एवाभिधापुच्छेत्यादि।

**मधुमती**

लक्षणया व्यङ्ग्योपस्थितिं शङ्कते—ननु रामेणेति। तथा च—'रामोऽस्मि सर्व सहे' इत्यत्र सर्वदुःखभाजनत्वम्;

**'प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा**
**सोढं तच्च तथा त्वया कुलजनः धत्ते यथौच्चैः शिरः।**
**व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदां साक्षिणा**
**रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये! नोचितम्॥**

इत्यत्र कातरत्वम्; 'रामोऽसौ भुवनेषु' इत्यत्र खरदूषणादिहन्तृत्वं च लक्ष्यते इति रामपदस्य लक्ष्य एव अनेको भवति, अर्थान्तरसंक्रमितवाच्यादिविशेषव्यपदेशहेतुश्च भवति। एवंविधलक्षणीयविशेषावगमश्च प्रकरणादिसापेक्षः इति लक्ष्येणैव निर्वाहे अलं व्यङ्ग्येनेति शङ्काभिप्रायः।

सिद्धान्तयति—उच्यत इति। अनेकेति। नानार्थसैन्धवादिपदाभिधेयस्येवेत्यर्थः।

ननु अस्तु तात्पर्यानुपपत्त्यैव लक्षणा, इत्यस्वरसादाह—लक्षणायामपीति। अत्र लक्षणा भवन्ती न रूढिपूर्विका, प्रसिद्ध्यभावात्, इति प्रयोजनवत्येव वाच्या। प्रयोजनं च व्यञ्जनाव्यापारगम्यमित्युक्तमेवेति भावः।

किञ्च अभिधाया इव लक्षणाया अपि सङ्केतितार्थप्रतिपादकत्वमेव। सङ्केतश्च साक्षात् परम्परया वा इति नात्र विशेषः। न ह्येवमर्थान्तरभूते व्यङ्ग्ये पदस्य साक्षात् परम्पराया वा सङ्केतोऽस्तीत्याह—यथा चेति। यत्र सङ्केतग्रह; तादृशार्थप्रतिपादकत्वमेवाभिधायाः समयसव्यपेक्षत्वम्। अन्यथा समयाभिधयोरैक्यात् अपेक्षैव न स्यात्। न च तद्भिन्न एव शब्दव्यापारः अभिधा, मानाभावात्। एवं समयविशेषेत्यस्य परम्परासमयेत्यर्थः।

## विस्तारिका

ननु व्यङ्ग्येषु नानात्वमर्थान्तरसंक्रमितवाच्यध्वनित्वादिति विशेषव्यपदेशविषयत्वं शब्दार्थान्वयव्यतिरेकानुविधायित्वं प्रकरणादिसव्यपेक्षत्वमिति धर्मा दृश्यन्ते, ते च लक्ष्येष्वपीति व्यङ्ग्या लक्ष्या एवेत्याह—'रामोऽस्मी'त्यादि।

'रामोऽस्मि' इत्यत्र दुःखसहिष्णुत्वेन, 'रामेण' इत्यत्र निःस्नेहत्वेन, 'रामोऽसौ' इत्यत्र विविधगुणाश्रयत्वेन नानात्वमित्यर्थः। विशेष्यव्यपदेशेऽर्थान्तरसंक्रमितवाच्यादिलक्षणस्तद्धेतुस्तद्विषयः, तस्य लक्ष्यस्यावगमः, लक्षणया शब्देन प्रतिपाद्यत्वाच्छब्दायत्तः, मुख्यार्थबाधज्ञाने मुख्यार्थज्ञानस्यावश्यकतयाऽर्थायत्तम्। प्रकरणादीति। तात्पर्यग्राहकत्वेन तस्यापेक्षणीयत्वात्। तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वात्। तस्माल्लक्ष्यवैधर्म्यानाश्रयत्वेन लक्ष्यते, न तद्भेद इत्याह—कोऽयमिति।

प्रतीयमानो व्यङ्ग्यः। सिद्धान्तयति—उच्यत इति। नियतत्त्वं तात्पर्यज्ञानाधीनज्ञानविषयत्वम्। तेन लक्ष्यार्थान्वयानुपपत्तेर्लक्षणाबीजत्वमुद्घाटितम्। तात्पर्यज्ञानं विनाऽपि व्यङ्ग्यस्यावगतेः, मुख्यार्थयोगस्य नियामकत्वमाह—न खल्वित्यादि। अयं मुख्यमर्थं प्रतीत्य तद्बाधेन तत्सम्बन्धिनं प्रत्येतीति मुख्यलक्ष्यप्रतीत्योरेकोद्देश्यकत्वं सम्बन्धनियमः। अतथाभूतस्य प्रत्यायने लक्षणाया असामर्थ्यादित्याह—लक्षयितुमित्यादि। व्यङ्ग्ये तथात्वमित्याह—प्रतीयमानस्त्वित्यादि। सम्बन्ध-सम्बन्धः, सम्बन्धपरम्पराश्रयत्वेन प्रतीतिपरम्पराविषयः।

लक्षमाऽपि च वैरिणं मुख्यार्थबाधविरहमुद्भावयति—अत्ता एत्थेत्यादि।

**श्वश्रूरत्र निमज्जति अत्राहं दिवसकं व्याप्य विलोकय।**
**मा पथिक रात्र्यन्धक शय्यायामावयोर्निमक्ष्यसि॥**

स्वयं दूत्या इयमुक्तिः।

निमज्जति जरात्वेन निस्पन्दं शेते। अत्राहमिति। निमज्जतिक्रियानन्वयेन सज्जा स्थास्यामीत्यर्थः। दिवसकमिति निन्दायां कः। स चावयोः श्रेयः प्रतिबन्धकत्वात्। प्रलोकय प्रलोकनविनोदेनैव दिवसं गमयावः। मह इत्यावयोरर्थे निपातः। अन्यथा स्वमात्रोत्थाने रहस्यप्रकाशः स्यादिति लोचनकारः। वस्ततस्तु रजन्यां शय्यायां पातेन दुःशङ्का, मम तु महद्भयमिति विशेष्यनिर्देशेऽप्यदोषात्।

अत्र गृहे श्वश्रूरहञ्च, श्वश्रूश्चातिजरठत्वेन वधिरा निस्पन्दा जनान्तरसञ्चारो नास्तीति यथेच्छं व्यवहरेति ध्वनिः व्यङ्ग्यपक्षे माशब्दोऽन्धत्वनिषेधे। अरात्र्यन्ध पथिक ममैव शय्यायां पतिष्यसीत्यर्थः। न बाधो नान्वयानु-

पपत्तिः, तात्पर्यविषयान्वयानुपपत्तिरस्त्येवेत्याह—लक्षमायामपीति । प्रतिपादितलक्षणाग्रन्थे । प्रयोजनवत्यां तस्यां प्रयोजनस्य व्यञ्जनव्यापारगम्यत्वाभिधाने न लक्षणाबीजसामग्र्या एव विप्रतिपत्तिमाह—यथा चेति । समयः सङ्केतः, मुख्यार्थबाधे प्रयोजनप्रतिपत्तये मुख्यार्थसम्बन्धी बोद्धव्य इति लक्षमायां व्युत्पादनम् । तदाह—समयविशेषेति । मुख्यार्थबाधादिना विशेषणाद् विशेषः । न चैवं व्यञ्जनायाम्, सामान्यविशेषसङ्केतरहितस्याभिबोधनात् । पुच्छभूता पृष्ठलग्ना । शक्यसम्बन्धस्य लक्षणात्वेन तन्निरूप्येत्यर्थः ।

### सारबोधिनी

ननु व्यङ्ग्येषु नानात्वमर्थान्तरसङ्क्रमितवाच्यध्वनित्वादिविशेषव्यपदेशविषयत्वं शब्दार्थाधीनत्वं प्रकरणादिसव्यपेक्षत्वमिति धर्मा दृश्यन्ते, ते च लक्ष्येष्वपीति व्यङ्ग्या लक्ष्या एवेत्याह रामोऽस्मीति । 'रामोऽस्मी'त्यत्र दुःखसहिष्णुत्वेन, रामेणे'त्यत्र निःस्नेहत्वेन 'रामोऽसावि'त्यत्र विविध गुणाश्रयत्वेन प्रतीतेर्नानात्वमित्यर्थः । विशेषव्यपदेशाः अर्थान्तरसङ्क्रमितर्वाच्यादियो लक्षणाहेतुविषयः । लक्ष्यस्यावगमः लक्षणया शब्देन प्रतिपाद्यत्वात् । यतः मुख्यार्थबाधज्ञाने मुख्यार्थज्ञानस्यावश्यकतया प्रकरणादितात्पर्यग्राहकत्वेन तस्यापेक्षणीयत्वात् । तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वात् । तस्माल्लक्ष्ये वैधर्म्यानाश्रयत्वेन लक्ष्यतो न तद्भेद इत्याह कोऽयमिति । प्रतीयमानो व्यङ्ग्यः ।

सिद्धान्तयति उच्यत इति । अनेकार्थशब्दाभिधेयवदिति । भद्रात्मन इत्यादिवदित्यर्थः । नियतत्वं नियतसम्बन्धत्वम्, वाच्यावाच्ययोरेकप्रतिपाद्यविषयत्वम् । तच्चानुपदं विवेचयिष्यते । सम्बन्ध इति । सम्बन्धपरम्पराश्रयत्वेन प्रतीतिपरम्पराविषय इत्यर्थः ।

कथं च मुख्यार्थबाधं विना लक्षणेत्याह अत्ता एत्थेति । स्वयंदूत्या इयमुक्तिः । निमज्जति जरातुरत्वेन निष्पदं निःशब्दं शेते । अहमित्यावयोरर्थे निपातः । अन्यथा स्वमात्रोट्टङ्कने रहस्यप्रकाशः स्यादिति लोचनकारः । वस्तुतस्तु ममेत्येवार्थः स्यातीव शङ्केति । ममेति विशिष्योक्तिरिति भावः । अत्र गृहे श्वश्रूरहं च । श्वश्रूरिति जरात्वेन निष्पन्दा । जनान्तरसञ्चारो नास्ति । यथेच्छं व्यवहरेति । ध्वनिव्यङ्ग्यपक्षे मा शब्दोऽन्धत्वनिषेधे । अरात्र्यन्ध पथिकः ! ममैव शय्यायां पतिष्यसीत्यभिप्रायः ।

न च मुख्यार्थान्वयानुपपत्तिः । ननु तात्पर्यविषयानुपपत्तिरस्त्येवेत्यत आह लक्षणायामपीति । प्रतिपादितं लक्षणाग्रन्थे । तत्र प्रयोजनस्यावश्यकत्वात् । तस्य च व्यापारान्तरानवगमत्वात् । तदर्थं व्यञ्जनावश्यकत्वे अन्यत्रापि तस्यौचित्यात् । वस्तुतस्तु, व्यञ्जकवाक्यस्य वाक्यान्तराद्वैलक्षण्यं प्रतीयते । तत्र चाभिधादितोऽर्थोपस्थितौ यावती सामग्री तावती न व्यङ्ग्योपस्थितावििति स्थिते सहकारिविशेषे कल्पनीये अभिधाया एव तत्कल्प्यते चेत् तदा स्वभावभङ्ग इत्यगत्या वृत्त्यन्तरं कल्प्यते । अन्यथा मुख्यार्थबाधादिसहकारेणाभिधयैव लक्ष्यार्थोपस्थितिसंभवे लक्षणापि वृत्त्यन्तरेण न सिद्ध्येदिति भावः ।

नवीनास्तु, पदपदार्थभिन्ना व्यञ्जना नाम काचिद्वृत्तिरङ्गीक्रियत इति न ब्रूमः, किन्तु यो व्यापारः सत्यपि बाधाद्यवतारे विनापि तात्पर्यज्ञानं वक्तृबोद्धव्यादिवैशिष्ट्येन बोधयति सैव व्यञ्जना, शक्तिलक्षणयोर्वैधर्म्यादित्याहुः ।

नन्वस्तु, निरूढलक्षणावत् सर्वत्र न तदपेक्ष्येत्यत आह—यथा वेति। समयः सङ्केतः। मुख्यार्थ बाधे प्रयोजनप्रतिपत्तये मुख्यार्थ संबन्धो बोद्धव्य इति व्युत्पादनम्। तदाह समयविशेषेति। मुख्यार्थबाधादिना विशेषणाद्विशेषः। न चैवं, व्यञ्जनया सामान्यविशेषसङ्केतरहितस्यापि बोधनात्। पुच्छभूता पृष्ठलग्ना। शक्यसम्बन्धस्य लक्षणात्वे तन्निरूप्येत्यर्थः। यद्वा, यतो मुख्यार्थानन्तरमेव लक्षणेत्यर्थः।

## काव्यप्रदीपः

यतः 'रामोऽस्मि सर्व सहे' इत्यत्र रामपदेन सर्वदुःखभाजनत्वम्।

**प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा**
**सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः।**

**व्यर्थं संप्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा**
**रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्॥**

इत्यत्र कातरत्वम् 'रामोऽसौ भुवनेषु विक्रमगणैः—' इत्यत्र खरदूषणादिहन्तृत्वं च लक्ष्यते। अतो रामपदस्य लक्ष्य एवानेको भवति। अर्थान्तरसंक्रमितवाच्यादिविशेषव्यपदेशहेतुश्च भवति। एवमन्यत्रापि स्यात्। तदुक्तम्—'भाक्तमार्गस्तदन्यः' इति। लक्षणीयविशेषावगमश्च प्रकरणादिसापेक्षेण शक्यार्थेन स्यात्। अतो नास्त्यतिरिक्तः प्रतीयमानः। मैवम्। लक्षणीयस्य नानात्वेऽपि हि नानार्थसैन्धवादिपदाभिधेयस्येव नियतत्वमेव। न खल्वनियतसंबन्धोऽनियतसंबन्धः संबद्धसंबन्धश्चेति तत्स्वरूपं सोदाहरणमग्रे दर्शयिष्यते। किं च 'अत्ता एत्थ णिमज्जइ—' इत्यादौ विवक्षितान्यपरवाच्ये कथं लक्षणा। मुख्यार्थबाधाभावात्। ननु तत्रापि तात्पर्याधीनान्वयानुपपत्तिः। 'छत्रिणो यान्ति' इत्यादाविवेति चेत्, न। लक्षणायां प्रयोजननियमात्। तस्य च व्यापारान्तरागम्यत्वात्। तदर्थं व्यञ्जनास्वीकारे किं प्रथमतोऽपि लक्षणया। अथ निरूढलक्षणायामिवान्यत्राप्यस्तु प्रयोजनानपेक्षेति चेत्, न। यथा हि संकेतग्रहसापेक्षाभिधा तथा मुख्यार्थबाधतद्योगरूढिप्रयोजनान्यतरस्य मुख्यार्थसंकेतग्रहस्य च सापेक्षा लक्षणा। तत्कथं रूढेः प्रयोजनस्य वा भावे भवेत्। यतः संकेतग्रहसापेक्षात एवाभिधापुच्छभूता सेत्याहुः।

## आदर्शः

व्यङ्ग्यार्थे लक्ष्यार्थसाधर्म्यात् लक्षणीयत्वमृजुबुद्धिराशङ्कते—नन्विति। 'रामोऽस्मी'त्यत्र दुःखसहिष्णुरूपो लक्ष्यार्थः, रामेणे'त्यत्र निःस्नेहरूपः, 'रामोऽसौ भुवनेष्वि'त्यत्र तु तन्नाम्ना ख्यातरूपः। विशेषव्यपदेशेति, काव्यस्य शब्दशक्त्युत्थार्थशक्त्युत्थत्वादिव्यपदेशहेतुर्यथा व्यङ्ग्यार्थस्तथा अर्थान्तरसंक्रमितवाच्यलक्षणामूलत्वादिविशेषव्यपदेशहेतुर्लक्ष्यार्थोऽपीत्यर्थः। अनेकार्थशब्देति, तस्य यथा कोषकारगणितनियतत्वं तथा लक्ष्यार्थस्यापि उपस्थितशक्यार्थसम्बन्धिस्वरूपं नियतत्वमित्यर्थः। न खल्विति, 'अनियतसम्बन्धः' 'अनियतोपस्थितशक्यसम्बन्धः। प्रतीयमानस्त्विति। 'नियतसम्बन्धः' नियतोपस्थितस्वसम्बन्धः। 'अनियतसम्बन्धः' 'अनियतोपस्थितशक्य सम्बन्धः'। व्यङ्ग्यार्थबोधने लक्षणाहेतुर्मुख्यार्थबाधोऽपि नास्तीत्याह—अत्ता एत्थेति।

**श्वश्रूरत्र निमज्जति अत्राहं दिवस एव प्रलोकय।**
**मा पथिक रात्र्यन्धक शय्यायामावयोर्निमङ्क्ष्यसि॥ इति संस्कृतम्।**

रात्र्यन्धत्वेन कथितात्मानं कृतावासं पथिकं प्रति स्वयं दूत्या उक्तिरियम्। अत्ता श्वश्र्वां देशी। निमज्जति शय्यानिमग्ना मृतप्राया तिष्ठतीत्यर्थः। अत्राहमिति निष्क्रियनिर्देशात् आत्मनोऽतथाभूतत्वं सूचितम्। अत्र निषेधस्य मुख्यार्थस्य बाधो नास्ति। न च स्वशय्याप्रवेशे तात्पर्यान्निषेधस्य बाध एवेति वाच्यम्, उभयशय्याप्रवेशनिषेधस्यैव वाच्यत्वेन तस्याबाधादेव। प्रतिपादितमिति, यस्य प्रतीतिमाधातु'मित्यादिनेत्यर्थः। लक्षणाव्यञ्जनयोरन्यदपि वैधर्म्यमाह—यथा चेति। लक्षणायाः शक्तिरूपसमयविशेषसापेक्षत्वं बाधप्रतियोगितया मुख्यार्थोपस्थित्यर्थम्।

## सुधासागरः

ननु 'व्यङ्ग्येषु नानात्वम्, अर्थान्तरसङ्क्रमितवाच्यध्वनित्वादि विशेषव्यपदेशविषयत्वम्, शब्दार्थाधीनत्वम्, प्रकरणादिसर्वपेक्षत्वम्' इति धर्मा दृश्यन्ते, ते च लक्ष्येष्वपीति व्यङ्ग्या लक्ष्या एवेत्यत आह—रामोऽस्मीत्यादि। रामोऽस्मीत्यत्र सर्वत्र दुःखभाजनत्वेन, रामेणेत्यत्र खरदूषणादिहन्तृत्वेन। यत्तूक्तं सारबोधिनीकारैः—सर्वगुणाढ्यत्वेनेति, तन्न रमणीयम्। दुष्टमारकत्वसूचनस्यैव प्रकृतकाव्यानुगुणत्वात्। तथा चैवं प्रतीतेर्नानात्वमित्यर्थः। विशेषव्यपदेशाः—अर्थान्तरसङ्क्रमितवाच्यादयो लक्षणायाः हेतुस्तद्विषयः। तस्य लक्ष्यस्यावगमो लक्षणया शब्देन प्रतिपाद्यत्वाच्छब्दायत्तः। मुख्यार्थ बाधज्ञाने मुख्यार्थज्ञानस्यावश्यकतयाऽर्थायत्तः। प्रकरणादीति तात्पर्यग्राहकत्वेन तस्यापेक्षणीयत्वात्। तात्पर्यानुपपत्तेरेव लक्षणाबीजत्वात्। तस्माल्लक्ष्ये वैधर्म्यानाश्रयत्वेन लक्ष्यतो न भेद इत्याह—कोऽयमित्यादि। प्रतीयमानोव्यङ्ग्य इत्यर्थः।

व्याख्यातं च प्रदीपकारैः—नन्वस्तु लक्षणा, न हि वाच्यवल्लक्ष्योऽपि व्यवस्थितः, विशेषव्यपदेशहेतुर्वा। यतो 'रामोऽस्मि सर्वं सहे' इत्यत्र रामपदेन सर्वदुःखभाजनत्वम्।

**प्रत्याख्यानरुचेः कृतं समुचितं क्रूरेण ते रक्षसा**
**सोढं तच्च तथा त्वया कुलजनो धत्ते यथोच्चैः शिरः।**

**व्यर्थं सम्प्रति बिभ्रता धनुरिदं त्वद्व्यापदां साक्षिणा**
**रामेण प्रियजीवितेन तु कृतं प्रेम्णः प्रिये नोचितम्।**

इत्यत्र कातरत्वम्। 'रामोऽसौ भुवनेषु विक्रमगुणैः' इत्यत्र खरदूषणादिहन्तृत्वं च लक्ष्यते। अतो रामपदस्य लक्ष्य एवानेको भवति, अर्थान्तरसंक्रमितवाच्यादिविशेषव्यपदेशहेतुश्च भवति, एवमन्यत्रापि स्यात्। तदुक्तं 'भाक्तमार्गस्तदन्य' इति। लक्षणीयविशेषावगमश्च प्रकरणादिसापेक्षेण शक्यार्थो न स्यादतो नास्त्यतिरिक्तः प्रतीयमानो नामेति।

सिद्धान्तयति—उच्यत इति। सम्बन्ध इति। सम्बन्धपरम्पराश्रयत्वेन प्रतीतिपरम्पराविषय इत्यर्थः। कथं च मुख्यार्थबाधं विना लक्षणेत्याह–अत्ता एत्थेत्यादि। न च मुख्यार्थबाध इति सम्बन्धः। प्राकृतमिदं व्याख्यातं तृतीयोल्लासे।

अयमाशयः—लक्षणीयस्य नानास्तेऽपि हि नानार्थसैन्धवादिपदाभिधेयस्येन नियतत्वमेव। न खल्वनियतसम्बन्धो मुख्येनार्थेन लक्षयितुं शक्यते। प्रतीयमानस्तु प्रकरणादिवशेन नियतसम्बन्धेऽनियतसम्बन्धः सम्बद्धसम्बन्धश्चेति तत्स्वरूपं सोदाहरणामग्रे [एतदुल्लासान्ते] प्रदर्शयिष्यते।

किञ्च 'अत्ता एत्थ णिमज्जइ एत्थ अहं दिअहए पलोएहि' इत्यादौ विवक्षितान्यपरवाच्ये कथं लक्षणा मुख्यार्थबाधाभावात्। ननु तात्पर्यविषयानुपपत्तिरस्त्येवेत्यत आह—लक्षणायामपीति।

नन्वस्तु निरूढलक्षणावत् सर्वत्र तदनपेक्षेत्यत आह—यथा चेत्यादि। अयमाशयः—ननु तत्रापि तात्पर्याधीनान्वयानुपपत्तिः, छत्रिणो यान्तीत्यत्रेवेति चेत्। न। लक्षणायां प्रयोजननियमात्, तस्य च व्यापारान्तरागम्यत्वात्, तदर्थं व्यञ्जनास्वीकारे किं प्रथमयाऽपि लक्षणया। अथ निरूढलक्षणायामिवान्यत्राप्यस्तु प्रयोजनानपेक्षेति चेन्न। यथा हि संकेतग्रहसापेक्षाऽभिधा तथा मुख्यार्थबाधतद्योगरूढिप्रयोजनान्यतरस्य मुख्यार्थसङ्केतग्रहस्य च सापेक्षा लक्षणा; तत्कथं रूढेः प्रयोजनस्य वाऽभावे भवेत्। यतः सङ्केतग्रहसापेक्षाऽत एवाभिधापुच्छभूता सेत्याहुरिति।

---

न च लक्षणात्मकमेव ध्वननम् तदनुगमेन तस्य दर्शनात्। न च तदनुगतमेव, अभिधावलम्बनेनापि तस्य भावात्। न चोभयानुसार्येव, अवाचकवर्णानुसारेणापि तस्य दृष्टेः। न च शब्दानुसार्येव, अशब्दात्मकनेत्रत्रिभागावलोकनादिगतत्वेनापि तस्य प्रसिद्धेः इति, अभिधातात्पर्यलक्षणात्मकव्यापारत्रयातिवर्त्ती ध्वननादिपर्यायो व्यापारोऽनपह्नवनीय एव।

तत्र 'अत्ता एत्थ' इत्यादौ नियतसम्बन्धः। 'कस्स वाण होइ रोसो' इत्यादावनियतसम्बन्धः।

**विपरीअरए लच्छी बम्हं दट्ठूण णाहिकमलट्ठं।**
**हरिणो दाहिणणअणं रसाउला झत्ति ढक्केइ॥ १३७॥**

इत्यादौ सम्बद्धसम्बन्धः। अत्र हि हरिपदेन दक्षिणनयनस्य सूर्यात्मकता व्यज्यते तन्निमीलनेन सूर्यास्तमयः, तेन पद्मस्य सङ्कोचः, ततो ब्रह्मणः स्थगनं, तत्र सति गोप्याङ्गस्यादर्शनेन अनिर्यन्त्रणं निधुवनविलसितमिति।

---

**सङ्केतः**

लक्षणात्मकमेव लक्षणैकरूपमेव। तदनुगमेनेति। लक्षणानुगमेन ध्वननस्य दर्शनादित्यर्थः। तत् ध्वननं अनुगतमेव लक्षणानुगतमेव। तस्य ध्वननस्य। भावादिति। न हि व्यङ्ग्ये प्रतीयमाने वाच्यात् बुद्धिः दूरीभवतीति भावः। न चोभयेति। अभिधालक्षणारूपं उभयम्। अवाचकेति। अर्थानुपयोगेऽपि कोमलादिवर्णानां रसव्यञ्जकत्वदर्शनात्। अशब्दात्मकेति। अभिधाव्यापारेणास्पृष्टेत्यर्थः। अवलोकनादीत्यादिशब्दात् शब्दव्यतिरिक्तः अधोवक्त्रत्ववाष्पावेशकुचकम्पादिः गृह्यते। तस्य ध्वननस्य। अनपह्नवनीय एवेति। स च नाभिधात्मा, सङ्केताभावात्। न तात्पर्यात्मा, अन्वयप्रतीतावेव शक्तिपरिक्षयात्। न लक्षणात्मा, स्खलद्गतित्वाभावात् इति भावः।

तत्रेति। तेषु नियसंबद्धादिषु मध्ये इत्यर्थः। अत्ताइत्यत्रैव शेष्वेति पुरुषाभ्यर्थनलक्षणो विधिः। नियतसम्बद्धः—नियतेन नियत्वेन—इयत्तया सम्बद्धः—नियन्त्रितः। कस्सइत्यादौ पुनः अनियतसम्बद्धः—पतिविषयं हि सतीत्वप्रकटनादि, सपत्न्यादिषु च अन्यदेवेति। सम्बद्ध-सम्बद्ध इति। सम्बद्धस्य व्यङ्ग्यस्य सम्बद्धः अपरो व्यङ्ग्योऽर्थः इत्यर्थः। वाक्यार्थ एवेति। न पदार्थ इत्यर्थः। वाक्यमेवेति। न पदमित्यर्थः। येऽपीति। अखण्डवाक्यवाक्यार्थवादिनः शब्दब्रह्मवादिनो वा भट्टाः वैयाकरणा वा। तैरपि भट्टैः वैयाकरणैरपि देशकालावच्छेदेन

सर्वव्यवहर्तृनिष्ठतया कल्पितपदार्थसंश्रयेण वाच्यवाचककल्पना क्रियत एवेति, तन्मतेऽपि शब्दस्य अर्थान्तरप्रतीतौ व्यञ्जकत्वमेव, न तु वाचकत्वमिति ध्येयम्। एवं पदार्थवाक्यार्थन्यायं तात्पर्यशक्तिसाधकं निराकृत्य, प्रकृते व्यञ्जनशक्तिं योजयितुमाह—तत्पक्षेऽपीति। उक्तोदाहरणादौ 'निःशेषच्युतचन्दनम्' इत्यादौ।

## बालचित्तानुरञ्जनी

व्यञ्जना लक्षणैवेति यदुक्तं तद् दूषयति न चेति। व्यञ्जनाया लक्षणात्मकत्वं अनुगममात्रात् साध्यते। नियतानुगमाद्वेति विकल्प्यमाद्यं दूषयति तदिति। तदनुगमेन लक्षणानुगमनेन तस्या व्यञ्जनाया अनुगममात्रात्तदात्मकत्वे साध्यमाने अतिप्रसङ्ग इति भावः। द्वितीयं दूषयति, चेति। विवक्षितान्यपरवाच्ये ध्वनौ अभिधामूलत्वेन ध्वननत्वसंभवात् न लक्षणानुगतमेव ध्वननमित्यर्थः। अस्तु तर्हि ध्वननमभिधालक्षणानुगतमेवेत्याह न चोभयेति। ललितपरुषादिवर्णानुप्रासस्य अर्थाभिधानानुपयोगिनोऽपि रसं प्रति व्यञ्जकत्वदर्शनात् न ध्वननमुभयानुगतमेवेत्यर्थः। अस्तु तर्हि वर्णानुसारेण ध्वननम् तत्राह न च शब्देति। अशब्दात्मकं यन्नेत्रविभागेन विलोकनादि तद्गतत्वेनापि तस्य ध्वननस्य प्रसिद्धेर्दर्शनात् न ध्वननं वर्णानुगतमेवेत्यर्थः। 'मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः' इत्यत्र गुरुजनमवधीर्यापि साभिलाषगर्भमन्थरं विलोकितवतीति स्मरणे विप्रलम्भोद्दीपनम्। आदिशब्देन अधोवक्त्रत्वकुचकम्पनवाष्पावेशादि गृह्यते। व्यञ्जनस्याभिधादिव्यतिरेकसाधनमुपसंहरति इतीति। शब्दस्य मुख्यो व्यापारः अभिधावाच्यार्थव्यापारस्तात्पर्यं, लक्षणीयव्यापारो लक्षणेति त्रिविधात्मकं यद्व्यापारत्रयं तदतिवर्ति "कस्स व ण होइ" इत्यादौ सतीत्वप्रकटनादिव्यङ्ग्यं सपत्नीप्रभृतीनां चान्यदिति अनियतसम्बन्धः। विपरी अरए इत्यादि। लट्ठी लक्ष्मीः। विपरीअरए विपरीतसुरते उपरिसुरत इत्यर्थः। णाहिकमलट्ठं नाभिकमलस्थं वलं लल्लाणं बम्हं ब्राह्माणं? दटठूण दृष्ट्वा, रसाउला रसाकुला सती, हरिणो हरेः दाहिणणयणं दक्षिणनयनं, कडिति झडिति छेद छादयति स्थगयति। दाहिणेति न वा तीर्थदुःखदक्षिणदीर्घ इति[?] सूत्रेण शब्दस्य हत्वे हेदक्षिणेऽस्येति सूत्रेण दीर्घत्वे दक्षिणमिति भवति। पक्षे दक्षिणमिति "छदेर्नुमनुमोवालढंकयष्वासंनुमा"[?] सूत्रेण छदेर्ढकादेशः। वालदलोदशतृष्विति[?] एत्वम्। अत्र सम्बद्धसम्बन्धत्वं व्यङ्ग्यस्य दर्शयति। अहोति। अत्र सम्बद्धस्य व्यङ्ग्यस्यार्थस्य सूर्यात्मकस्य सम्बन्धोऽपरो व्यङ्ग्योऽर्थः सूर्यास्तमयरूपः। तस्य च पद्मसङ्कोचरूपोऽपरः सम्बन्धः। ततो ब्रह्मणाः स्थगनं, तस्मिंश्च सति गोप्याङ्गस्यादर्शनेन निर्लज्जरतप्रवृत्तिरित्यर्थः।

## काव्यादर्शः

न च लक्षणेति। न हि लक्षणैकरूपमेव ध्वननं लक्षणानुगमेन ध्वननस्य दर्शनात्। यथा 'गङ्गायां घोषः' इत्यादौ। न च लक्षणानुगतमेव ध्वननं, विवक्षितान्यपरवाच्येऽभिधामूलत्वेन ध्वननस्य भावात्। न हि व्यङ्ग्ये प्रतीयमाने वाच्ये बुद्धिर्दूरीभवति। न चोभयेति। अभिधालक्षणानुसारेणैव ध्वननमित्यपि नेत्याह—अवाचकेति। ललितपरुषादिवर्णानुप्रासस्यार्थाभिधानामुपयोगिनोऽपि रसं प्रति व्यञ्जकत्वस्य दर्शनात्। न च वर्णमात्रानुसारेणैव ध्वननमित्याह—अशब्दात्मकेति, अभिधाव्यापारेणास्पृष्ट इत्यर्थः। यथा—'मय्यासक्तश्चकितहरिणीहारिनेत्रत्रिभागः। अत्र गुरुजनमवधीर्यापि यथातथा साभिलाँषगर्वमन्थरं विलोकितवतीति स्मरणे विप्रलम्भोद्दीपनम्। 'अवलोकनादि' इत्यादिशब्दाच्छब्दव्यतिरिक्ताधोवक्त्रत्वकुचकम्पनवाष्पावेशादि। तस्येति ध्वननस्य। ध्वननादिपर्याय इति। अस्ति तावच्छब्दस्य व्यापारः। स च नाभिधानात्मा, समयाभावात्। तात्पर्यात्मा, तस्यान्वयप्रतीतावेव

परिक्षयात्। न लक्षणात्मा, स्खलद्गतित्वाभावात्। तत्रापि स्खलद्गतित्वे पुनर्मुख्यार्थबाधानिमित्तं प्रयोजनमित्यनवस्था स्यात्। तस्माद् अभिधाव्यापारव्यतिरिक्तचतुर्थोऽसौ व्यापारौ ध्वननद्योतनप्रत्यायनावगमनादिपर्यायोऽभ्युपगन्तव्य एव।

तत्रेति। तेषु नियतसंबद्धादिषु मध्ये। नियतसंबद्ध इति। अत्रैव 'शेष्व' इति पुरुषाभ्यर्थनलक्षणो विधिर्व्यङ्ग्यः। अनियतसंबद्ध इति। पतिविषयं हि सतीत्वप्रकटनादि व्यङ्ग्यं, सपत्नीप्रभृतीनां चान्यदिति।

संबद्धसंबद्ध इति। संबद्धस्य व्यङ्ग्यस्य संबद्धोऽपरो व्यङ्ग्योऽर्थः।

## विवेकः

नापि लक्षणा ध्वनिश्चेति पर्यायरूपमित्याह न चेति। तदनुगमेन लक्षणोपजीवकत्वेन। यथाऽविवक्षितवाच्ये ध्वनावेतद्रूपेणैवास्त्विति चेदत्राह अभिधाऽवलम्बनेनापीति। यथा विवक्षितान्यपरवाच्ये ध्वनावर्थे तत्ति (द्द्व) तयात्मकमेतदेवैकं रूपमस्तित्वति चेदत्राह अवाचकेति। यन्त्रे मालवाच्छृङ्गारस्य कौशिकात् करुणविप्रलम्भयोष्टक्काद्वीररौद्रभयानकरसानामभिव्यक्तिः। सा च तद्विदामनुभवसिद्धैव। तर्हि शब्दमात्राश्रितत्वमस्यास्त्विति चेदत्राह—अशब्देति। आदिपदादधोवक्तृ[त्व]कुचकम्पवाष्पावेगादयचेष्टाविशेषा रहस्यव्यञ्जकतया प्रसिद्धः। तदेवमेतेभ्यः सर्वेभ्यो विलक्षणमन्यद्रूपमिति प्रकरणमुपसंहरति इत्यभिधेति।

अथ व्यङ्ग्यस्य नियतानियतसम्बन्धत्वम्। 'कस्स व ण होइ' इत्यत्रानियतविषयसम्बन्धत्वं प्रदर्शितमेव। सम्बद्धसम्बन्धो यथा विपरीअरए इत्यादि। विपरीतरते लक्ष्मीब्राह्मणं दृष्ट्वा नाभिकमलस्थम्। हरेर्दक्षिणनयनं रसाकुला झगिति स्थगयति॥ सम्बद्धसम्बन्धा च विषयपरम्परया ग्रन्थकृतैव दर्शिता।

## दीपिका

पञ्चमे—न चेति। अनुगमेन पश्चाद् व्याप्रियमाणतया। दर्शनादिति दर्शितत्वादित्यर्थः। षष्ठे लक्षणामात्राङ्गत्वं यथायथमभिधानलक्षणयोर्द्वयोरङ्गत्वं वा। आद्ये—न च तदनुगतमेवेति। द्वितीये न तथेत्यवाचकानां वाच्यार्थानुसन्धानमन्तरेणापि प्रतीयमानमात्राणां वर्णानामनुसारेणाश्रयणादनुप्रसादौ, नाट्ये प्रगीतादौ च रसाद्युत्कर्षकत्वस्य दर्शनात्, सर्वथा वाचकत्वहीना एव वा ये वर्णास्तेष्वपि हुं हुं हमित्यादौ प्रकरणादिसाचिव्येन तत्तदर्थप्रकाशकतादर्शनात्। न च तत्राभिधालक्षणासद्भावो येन तद्भुजिष्यं व्यञ्जनं स्यात्। तयोरङ्गत्वसम्भवस्तत्र तावदस्त्विति। चेत्? मैवं वोचः, पश्चात्तनत्वमात्रेण तदङ्गत्वे तात्पर्यस्याभिधाऽङ्गत्वप्रसङ्गात्।

न चैवं तादर्थ्येन तस्यैव तदङ्गत्वाद् हेयोपादेयतासंवितिः निखिलव्यापारोऽपि तदङ्गमेव स्यात्। संयोगादयस्त्वभिधाविषयमेव नियमयन्ति, न तु तत्पृथग्विषयानिति तदङ्गान्युच्यन्ते। श्रुत्यादेः कस्यचिच्छब्दाङ्गत्वेन प्रकटत्वाच्छब्दतः पार्थक्यानादरणम्। न चैवम्, प्रत्युत तादर्थ्येन व्यञ्जने तस्याभिधादेश्च स्वरूपविषयभेदोपपादनात्, अत एव तदितिकर्तव्यतारूपत्वविरहाच्च। सप्तमे—अशब्देति। तृतीयो भागः त्रिभागः। तेन हि नर्तकीनां नृत्यप्रवृत्तानां तत्तदवान्तरविशेषवद्विलोकनं तत्तर्थानुकूल्याय प्रतिपद्यते। लौकिकमपि च तत्तद्दृग्रहस्यञ्च विदग्धगोष्ठीषु विदितमेव। आदिनाऽधोमुखत्वाङ्गभङ्गमुखविकृत्यादि सर्वम्। शब्दगतस्यैव व्यञ्जनस्यास्माभिः पार्थक्यमिष्यत इति चेत्? न, तस्य विषयस्वरूपादिलिङ्गमुखेन भेदोपपादनात्।

सम्प्रति सर्वमेव प्रकरणार्थमुपसंहरति—इत्यभिधेति। अतिवती अतिक्रान्तिविषयः। ध्वननादित्यादिना प्रत्यायनोन्नायनप्रकाशनसूचनादिध्वनितन्त्रप्रसिद्धभाषासंग्रहः अनपह्नवनीय इति। शक्यार्थे कृत्यप्रत्ययो विप्रतिपत्तिदौर्बल्यपरः।

सम्प्रति व्यङ्ग्यस्य नियतसम्बन्धत्वादिकं सिंहवत् परिवृत्त्यावलोक्योदाहृतिदानेन द्रढयति—तत्रेति पूर्वविषयान्तरव्यग्रिम्णाऽदर्शिताविषयविभागेन नियतसम्बन्धदावित्यर्थः। नियतसम्बन्ध इति। अत एव प्रतिपाद्यप्रकरणादिविशेषपर्यालोचनया प्रचुरतरमेव प्रसिद्धमेवं विधार्थव्यञ्जनमिति नियतता वाच्यव्यङ्ग्यसम्बन्धस्य। सम्बन्धसम्बन्ध इति पाठे कर्मधारयः। एवमनन्तरेऽप्यनियतसम्बन्ध इति। अत्र प्रतिविषयव्यङ्ग्यवाच्ययोरेव सम्बन्धः प्रसिद्धः। स च वक्तृवैशिष्ठ्यात्, तावद्भिरविश्रान्तेः, उपपत्तिविषयादिव्यङ्ग्यानान्तु तथा प्रसङ्गविरहात्। विषयव्यङ्ग्यापेक्षया दृष्टत्वाच्च वाच्यसम्बन्धानैयत्यम्।

केचित्तु सम्बन्धनियतत्वानियतत्वे वाच्ययोर्विषयस्यैक्यानैक्ये वर्णयन्ति। हरिपदेन स्वार्थसचिवेनेत्यर्थः। तत्सम्बन्धिनो दक्षिणनयनस्य सूर्यात्मकत्वं व्यङ्ग्यम्। तत्सम्बन्धं दक्षिणनयनसम्बन्धमिति सम्बन्धसम्बन्धत्वं व्यङ्ग्यस्य। एतत्प्रसङ्गेन वैधर्म्यमप्याह—तन्निमीलनेत्यादि। न तु व्यङ्ग्यपरम्परावल्लक्ष्यपरम्पराऽस्तीति कथं लक्ष्यव्यङ्ग्ययोरैक्यमिति भावः। केचित्तु द्वितीयादिव्यङ्ग्ये वाच्यस्य साक्षात्सम्बन्धाभावात् सम्बन्धसम्बन्धतामाहुः। अनिर्यन्त्रणं स्वच्छन्दक्रीडादि, प्रतिबन्धकविगमात्।

अथ लक्षणान्तरोपक्रमेऽखण्डबुद्धिनिर्ग्राह्य इति, "सत्यं ज्ञानमानन्दं ब्रह्म" इत्यादिना परमतत्त्वप्रतिपादकेन तस्य निर्धर्मकत्वात्। सत्यादिपदेन खण्डशो धर्मसंप्रतिपत्तिविरहादविभक्त एवार्थः प्रकाश्यते। तन्नीत्या तथैव वाक्यान्तराणीति वेदान्तिनः। वाक्यमेव निर्भागम्। अविद्यापदपतितैर्व्यवहारान्यथाऽनुपपत्त्या शरणीकृताविद्यैः कर्तव्यैवेति। अवश्यमिति। अन्यथा व्युत्पन्नतदितराविशेषात्, शब्दावदर्थव्याकोपाच्च व्यङ्ग्य एवेति भट्टपक्षोक्तयुक्तेस्तत्पक्षप्रवेशात्, तदा तु व्यवहारे भट्टनय इति।

**दर्पणः**

**श्वश्रूरत्र निषीदति अत्राहं दिवसं प्रलोकय।**
**मा पथिक[?] रात्र्यन्ध शय्यायां मम निषीद॥**

दिवसमिति काले कर्म्म। कथमत्र लक्षणा। मुख्यार्थबाधजीवितेत्यर्थः। प्रतिपादितं लक्षणानिरूपणप्रस्तावे। तथेति। समयविशेषः समप्रायो विशेष्यव्यञ्जनातो वैलक्षण्यम्। यद्यपिप्रयोजनलक्षणायां प्रयोजनस्य लाक्षणिकप्रतीतिकार्यत्वात् मुख्यार्थबाधसंबन्धयोरेव प्रथमं परिज्ञानं तथापि रूढिलक्षणाद्युपात्तत्रितयपरिज्ञानस्य पूर्वं संभवात्। लक्षणाजातीयसंभवमात्रेण किमप्यत्र प्रयोजनं भविष्यतीति प्रतीतेर्बुद्धिस्थतया चोक्तं मुख्यार्थबाधत्रितयेति। न खल्वत्र वाचकवन्मुख्यार्थबाधादिना परार्थो ज्ञेय इति संबन्ध्यते। विषयान्तरप्रतिपादनव्यग्रतया पूर्वप्रमदर्शितानि [नि] यतसंबन्धा [दी ?] न्युदाहरणानि दर्शयन् आह तत्रेति। नियताः संबन्धाः, वाच्यव्यङ्ग्ययोरेकविषयत्वात्। "कस्स व न होइ" इत्यादौ तु वाच्यार्थः सखीविषयः व्यङ्ग्यार्थस्तु तत्तत्प्रतिविषय इत्युभयोर्भिन्नविषयसंबन्धादनियतः। यद्वा प्रथमे तत्तद्वाच्यत्वात् तत्तद्व्यङ्ग्यार्थस्य एकरूपेण प्रतीतेः सार्वत्रिकत्वात् संबन्धी

नियतः [?] । 'कस्स ण व होइ' इत्यादौ व्यङ्ग्यार्थस्य संभवे त्वसत्यतयावगतिः अन्येषां तु लिख्याहेनैवेत्यनियतः[?] । एवमेव हि संबन्धस्यानियतत्वं सर्वथा संबन्धनियमत्वाभि तीरे व्यञ्जने अतिप्रसङ्गः स्यात्[?] ।

**विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम्।**
**हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति ॥**

**साहित्यचूडामणिः**

तथाविवक्षितवाच्येऽपि व्यञ्जनस्य न लक्षणया तादात्म्यमित्याह—न चेति। लक्षणाया अनुगमनेन साहचर्यमात्रेण तस्य ध्वननस्य दर्शनात्। यद्यपि—

**रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः।**
**निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते॥ ध्व० १॥**

इत्यत्राप्यस्त्युपचारः, तथापि न तदात्मैव ध्वनिः, तद्व्यतिरेकेणापि भावात्।

यदाह—

**वाचकत्वाश्रयेणैव गुणवृत्तिर्व्यवस्थिता।**
**व्यञ्जकत्वैकमूलस्य ध्वनेः स्याल्लक्षणं कथम्॥ ध्व० १.१८॥ इति।**

तत्रापि नियमो नास्तीत्याह—न चेति। अविवक्षितवाच्यव्यतिरिक्ते सर्वत्र ध्वननमभिधामवलम्ब्य इत्युक्तत्वात्। यदाह—

**भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः॥ ध्व० १.१४॥ इति।**

**कस्यचिद् ध्वनिभेदस्य सा तु स्यादुपलक्षणम्॥ ध्व० १.१९॥ इति।**

अभिधालक्षणोभयानुधावनसङ्कोचोऽप्यस्य न विद्यत इत्याह—न चेति। तत्र हेतुमाह—अवाचकेति। न शब्दानुसार्थेव वर्णानामपि शब्दनस्वभावतया शब्दशरीरानुप्रवेश इति सर्वाकारेण शब्दवृत्त्यनुसरणयन्त्रणा तस्य नास्ति। अशब्देति। शब्दस्वरूपाननुप्रविष्टकटाक्षादिगततया तस्य प्रसिद्धेः। किञ्च क्वचिदनुमानादभिप्रायादौ, कुत्रचित् प्रत्यक्षाद् दीपालोकादौ, क्वचन कारणत्वाद् गीतध्वन्यादौ च। क्वचिदपि शब्दवृत्तेरविवक्षितवाच्यादित्यनियतिरुन्नेया। उपसंहरति—इतीति।

नियतसम्बन्ध इत्यादिना यदुक्तं तद् विभागेन दर्शयति—अत्तेति। रात्र्यन्धत्वनटितकवैदग्ध्यवन्तं पान्थं प्रति व्यङ्ग्यस्य सम्बन्धनियमः। 'कस्य व णे'त्यत्र सखी तत्कान्तस्तत्पत्यस्तदुपपतिरित्यादेरनेका विषय इत्युक्तम्।

विवरीअरए इति।

**विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम्।**
**हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति॥**

ननु महिम्ना प्रहेलिकाप्रायमिति [व्यक्तिवि० पृ० ९१.१९] दूषितमिति चेत्, तन्न।

**अष्टौ पुत्र! कुरु श्लोकानिति पित्रोदितः सुतः।**
**चकार पञ्च च श्लोकान् पितुराज्ञा न खण्डिता॥**

इत्यादि हि प्रहेलिका। न च तस्याः सर्वस्या नीरसत्वनियमः।

**आकृष्यादावमन्दग्रहमलकभरं वक्त्रमासज्य वक्त्रे**
**कण्ठे लग्नः सुकण्ठः पृथुनिकुचरते दत्तगाढाङ्गसङ्गः।**
**बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स तादृक् प्रियो मे**
**बाले! लज्जा निरस्ता नहि नहि सरले! चोलकः किं त्रपाकृत्॥**

इत्यादौ व्यभिचारात्। यदि च व्यवधानवत्त्वादिदं प्रहेलिकाप्रायं, नहि (? तर्हि) 'पत्युः शिरश्चन्द्रकलामनेने'-त्यादावपि प्रहर्षौत्सुक्यादिभावान्तरितत्वात्, तथा—

**लावण्यकान्तिपरिपूरितदिमुखेऽस्मिन्**
**स्मेरेऽधुना तव मुखे तरलायताक्षि।**
**क्षोभं यदेति न मनागपि तेन मन्ये**
**सुव्यक्तमेव जलराशिरयं पयोधिः॥**

इत्यत्र यो वदनपूर्णेन्दुबिम्बयोरभिव्यक्तो रूप्यरूपकभावस्तदन्तरिता चाटुकावगतिरिति न तथात्वापत्तिः? यदि तु व्यभिचार्यलङ्कारप्रयुक्तव्यवधानं सहामहे न वस्तुमात्रप्रयुक्तमित्युच्येत तदाग्रहमात्रम्, अनिबन्धनत्वात्। ततश्च

**"चित्रवस्तुव्यवायिनि।**
**प्रहेलिकादिरूपेऽपि वाक्ये ध्वन्यात्मता यतः॥ व्यक्तिवि० पृ० ९३॥**

इत्येतद् पर्यहारि। एतावदालोचनीयं—यत् 'विवरीअरए' इत्यादौ व्यञ्जनं प्रति शाब्दी शक्तिरल्पीयसी आर्थी पुनरतिप्रभूतेति।

### सम्प्रदायप्रकाशिनी

इत्थमभिधानक्षणयोर्नियतत्वं प्रसाध्य व्यञ्जनस्यानियतत्वं नानामुखमुपपादयति—न च लक्षणात्मकमेवेत्यादिना। तर्ह्यभिधानुसारीति नियच्छाम इत्यत आह—न च तदनुगतमेवेत्यादि। तर्ह्युभयानुसारत्वेन नियम्यत इत्यत आह—न चोभयेत्यादि। तर्हि शब्दानुगमेन नियम इत्यत आह—अशब्दात्मकेत्यादि। तदेतन्मतत्रयमुपसंहरति—इत्यभिधातात्पर्येत्यादि। अत्ता एत्थेत्यादाविति 'अत्ता एत्थ णिमज्जइ' इत्यत्र हि व्यङ्ग्यो वाच्येन नियतसम्बन्धः। कस्स व ण होई इत्यादि। अत्र हि विषयभेदाद् अनियतसम्बन्धः।

विवरीएत्यादि।

**विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम्।**
**हरेर्दक्षिणनयनं रसाकुला झटिति स्थागयति॥**

अत्र सम्बन्धसम्बन्धतां विविच्य दर्शयति—अत्र हि हरिपदेनेत्यादि। अनेन वाच्य सम्बन्द्वैर्व्यङ्ग्यैरुत्तरोत्तरैर्व्यङ्ग्यैः सम्बन्ध इति सम्बद्धसम्बन्धता।

## मधुमती

लक्षणाव्यञ्जनयोर्भेदे मूलयुक्तिमाह—न चेति। अविवक्षितवाच्ये ध्वनाविति शेषः। अभिधेति। विवक्षितवाच्ये ध्वनाविति शेषः। ननु अस्तु वृत्तिनियमः इत्यत आह—अवाचकेति।

निष्कर्षस्तु—लक्षणया व्यङ्ग्योपस्थितिः न सम्भवति, मुख्यार्थबाधाद्यभावेऽपि तदुपस्थितेः, मुख्यार्थबाधस्थलेऽपि प्रयोजनं विना लक्षणायाः असम्भवेन प्रयोजनस्य व्यञ्जनाविषयत्वावश्यंभावात्। प्रयोजनस्यापि लक्ष्यत्वे प्रयोजनान्तरकल्पनापत्तेः अनवस्थाप्रसङ्गात्। परम्परासम्बन्धिनि व्यङ्ग्ये लक्षणानुपपत्तेश्च। नाप्यभिधया व्यङ्ग्योपस्थितिः, स्वरूपकालाश्रयविषयसंख्यादिविरुद्धधर्मत्वेन वाच्यव्यङ्ग्ययोरैक्यायोगात्। 'भद्रात्मनः' इत्यादिशब्दशक्तिमूलध्वनौ अभिधायाः नियमनात्, अप्राकरणिकपदार्थेन उपमादौ सङ्केताग्रहात्, रसादेश्चापूर्वत्वेन प्रागनुपस्थितेः सङ्केतग्रहाविषयत्वात्, प्रकरणादिसहायापेक्षानियमाच्च, नाभिधया अनपह्नवनीयव्यङ्ग्योपस्थितिः युक्ता। ननु लौकिकवाक्यात् काव्ये विशेषः अवश्यं वाच्यः इति उभयमतसिद्धम्। स च विशेषः चमत्काराधीनः, चमत्कारश्च व्यञ्जनाधीनः। तत्र च प्रकरणौचित्यादिज्ञानमपेक्षितमिति स्थिते, तेषां प्रकरणादीनां अक्लृप्तवृत्त्यन्तरसहकारित्वकल्पनात् वरं क्लृप्ताभिधासहकारित्वकल्पनमिति चेत्—न। अभिधायाः अर्थोपस्थापकत्वकल्पनादशायां प्रकरणादीनां नियमेन तत्सहकारित्वं न क्लृप्तमिति, अत्रापि तत्सहकारित्वकल्पनं न युक्तम्, स्वभावभेदप्रसङ्गात्। अन्यथा मुख्यार्थबाधादीनामपि तत्सहकारित्वकल्पनेन 'सैन्धवमानये' त्यादाविव लक्ष्योपस्थितिसंभवे लक्षणाऽपि न स्यादिति।

यत्तु—व्यङ्ग्यत्वाभिमते सर्वत्र तात्पर्यं कल्प्यमेव। 'वाणीरकुडङ्गे'-त्याद्यसुन्दरस्थले व्यङ्ग्ये तात्पर्यविश्रान्त्यभावेऽपि तात्पर्यस्यावश्यमभ्युपेयत्वात्। अन्यथा 'अभिधातात्पर्यलक्षणे' त्याद्युपसंहारविरोधात्। तथाच तात्पर्यमेव व्यापारोऽस्तु कृतं व्यञ्जनया—इति, तन्मन्दम्। तथा सति वृत्त्यन्तरस्यैवोच्छेदप्रसङ्गात्। सर्वत्र तात्पर्यादेव अर्थोपस्थितिसम्भवात्। 'तात्पर्यस्य अभिधादिवृत्तिसहकारितैव, न तु स्वतो वृत्तिकार्यकारिता' इत्येव उपसंहारग्रन्थाभिप्रायात्। तस्मात् तात्पर्यभिन्नाऽपि व्यञ्जना नैवापह्नवनीया इति।

## विस्तारिका

लक्षणाव्यञ्जनयोर्भेदमाह—न चेति। तदनुगमेन लक्ष्यार्थ प्रत्याय्य विरतायां तस्यामित्यर्थः। अभिधाया आलम्बनं नानार्थव्यञ्जनायां सम्बन्धित्वेनाश्रयणात्। वर्णानुसारेण वर्णाननुसृत्य तेषां गुणव्यञ्जकत्वात्। नेत्रेति। कटाक्षेणाभिलाषव्यञ्जनात्। शब्दादन्यत्र कथं व्यापार इत्यत आह—प्रसिद्धेरिति। अनया कटाक्षेणाभिलाषो व्यञ्जित इति सर्वसाधारणप्रयोगात्।

उपसंहरति—इतीति। तात्पर्यवृत्तेर्धमिग्राहकप्रमाणे न संसर्गनियतत्वादुपसंहारेणाप्युद्भावयति—अभिधेत्यादि। अतिक्रम्य वर्तत इत्यतिवर्ती तेषां स्वाधीनीकरणादपदाद् व्यञ्जनावगमादिपरिग्रहः। समानेन प्रकारेणैकार्थोपस्थापकोऽनेकः शब्दः पर्यायक्रमेण बोधक इत्यर्थः। तेन सामानाधिकरण्येनानुपपत्तिः। अनपह्नवनीयो मात्सर्यान्नापलपनीय इत्यर्थः।

व्यञ्जनायां सम्बन्धनियमः क्व दृष्ट इत्यत आह—अत्ता एत्थेत्यादि।

वाच्यव्यङ्ग्ययोः पथिकस्यैवोद्देश्यत्वेनैकोद्देश्यकत्वसम्बन्ध नियमः। कस्स वेत्यादि। अत्र सम्बन्धनियमः, सखी तत्कान्तविषयत्वेनानियतोद्देश्यकत्वात्।

**विपरीतरतेर्लक्ष्मीब्रह्माणं दृष्ट्वा नाभिकमलस्थम्।**
**हरेर्दक्षिणनयनं रसाकुला झटित्याच्छादयति॥**

रसाकुला समुद्रिक्तमन्मथा। नयनाच्छादनं हस्तप्रदानानर्हे अर्थे निमिषणवत्। सम्बन्धस्य सम्बन्धनिर्वाह्यनिर्वाहकतायां सन्तानीभूय व्यङ्ग्य इत्यर्थः। हरिपदेनेति। हरेर्दक्षिणवामनयनयोः सूर्यचन्द्रात्मकतया प्रसिद्धत्वात्। किमत आह—तन्नियमनेनेति। नियमनमाच्छादनम्। अस्तमयोऽप्रकाशः। सङ्कोचो मुद्रणम्। स्थगनं विधानम्। तत्र स्थगने अदर्शनेन ब्रह्मणो नियन्त्रणमाश्वस्तम्।

## सारबोधिनी

लक्षणाव्यञ्जनयोर्भेदमाह न चेति। तदनुगमनेन तदुपजीवनेन, लक्ष्यार्थं प्रत्याय्य विरतायां तस्यामित्यर्थः। अभिधाया आलम्बनं नानार्थव्यञ्जनायां सम्बद्धत्वेनाश्रयणात्। नियतसम्बन्ध इति। नियतसम्बन्धत्वं वाच्यव्यङ्ग्ययोरेकबोधृविषयत्वम्। वाच्यव्यङ्ग्यप्रतीत्योरेकाधिकरणत्वमिति यावत्। 'अत्ता एत्थे' त्यत्र तस्य सत्त्वं द्वयोः पथिकरूपैकाधिकरणत्वात्। "कस्स व" इत्यादौ तदभावः। सखीकान्तादिगतेत्वनाधिकरणभेदात्। लक्षणायान्तु नियतसम्बन्धत्वम्। यस्यैव वाच्योपस्थितिस्तस्यैव तद्बाधेन लक्ष्योपस्थितिस्वीकारात्।

विवरीअ इति।

**विपरीतरतौ लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम्।**
**हरेर्दक्षिणनयनञ्च रसाकुलत्वाज्झटिति स्थगयति॥**

सम्बद्धसम्बन्धः। निर्वाह्यनिर्वाहकतया सन्तानीभूयं व्यङ्ग्य इत्यर्थः। हरिपदेनेति। हरेर्दक्षिणवामनयनयोः सूर्यचन्द्रात्मकत्वेन प्रसिद्धत्वात्। किमत आह तन्निमीलनेनेति। निमीलनमाच्छादनम्। अस्तमयोऽप्रकाशः। सङ्कोचो मुद्रणम्। स्थगनं पिधानम्। तत्र स्थगने अदर्शने ब्रह्मणोऽनियन्त्रणमाश्वस्तम्।

## काव्यप्रदीपः

किं च न लक्षणाव्यञ्जनयोरभेदः। लक्षणामुपजीव्यातद्व्यापारात्। नापि लक्षणानुगतमेव ध्वनमिति ध्वनेस्तल्लक्षणमिति वाच्यम्। अभिधोपजीवनेनापि भावात्। न च लक्षणाभिधोभयानुसार्येव। वर्णमात्रानुसारेणापि हि दृश्यते रसादिव्यञ्जना। न च वर्णमात्रेऽभिधा लक्षणा वा। नापि शब्दानुसार्येव। विकसन्नर्तकीनेत्रत्रिभागालोकनादावपि प्रसिद्धेः। तस्मादभिधालक्षणातात्पर्यविलक्षणस्तुरीयो ध्वननव्यञ्जनद्योतनप्रकाशनादिपर्यायो

व्यापारोऽनपह्नवनीय एव। तत्र 'अत्ता एत्थणिमज्जह'—इत्यादौ व्यङ्ग्योऽर्थो नियतसंबन्धः। 'कस्स व ण होइ रोसो—'इत्यादावनियतसंबन्धः। 'नियतसंबन्धत्वं च वाच्यव्यङ्ग्यप्रतीत्योरेकविषयतास्माकम्। प्रथमे तस्य भावः। पथिकरूपैकविषयकत्वात्। द्वितीये तु तदभावः। सखीतत्कान्तादिविषयभेदात्' इति केचित्। तन्न सम्यगाभाति। लक्ष्यस्य नियसंबन्धत्वमेव, व्यङ्ग्यस्य तु तथात्वमन्यथात्वं चेति पूर्वप्रतिपादितस्य हीदमुदाहरणमिति लक्ष्यसाधारणं नियतसंबन्धत्वं वाच्यम्। न चोक्तं तथा भवति। अन्ये तु 'प्रथमे सर्वेषामेव सत्यताप्रतीतिः, द्वितीये तु कान्तस्यैव सत्यतयान्येषां त्वसत्यतयेति नियतानियतसंबन्धत्वम्' इत्याहुः। तदपि न मनोरमम्। यत एवं वाच्यप्रतीतेरेव सत्यत्वासत्यत्वप्रतीतिविषयत्वरूपं वैलक्षण्यमात्रमुच्यते। न तु व्यङ्ग्यप्रतीतेः। तस्मान्नियतसंबन्धत्वं तेन वाक्येन सह ज्ञाप्यत्वरूपसंबन्धनियम इति युक्तमुत्पश्यामः।

संबद्धसंबन्धो यथा—

**'विवरीअरए, लच्छी बह्मं दट्ठूण णाहिकामलट्ठम्।**
**हरिणो दाहिणणअ्रणं रसाउलाझति ढक्केइ॥'**

अत्र हरिपदेन दक्षिणनयनस्य सूर्यात्मकत्वे तन्निमीलनेन सूर्यास्तमयः। तेन पद्मसंकोचः। ततो ब्रह्मणः स्वगतम्। तस्मिन्सति गोपनीयस्याङ्गस्यादर्शनेन निर्यन्त्रणं निधुवनविलसितमिति संबद्धसंबन्धानि द्योत्यन्ते।

**आदर्शः**

'तदनुगमेन' लक्षणापश्चाद्भावेन, 'तस्य' ध्वननस्य। ननु लक्षणैव दीर्घतरीभूता ध्वननमस्त्वित्यत आह—न च तदन्विति। ननु तत्रापि दीर्घतरीभूता अभिधैव ध्वननमस्त्वियत आह—न च उभयेति। ननु वर्णघटितपदाभिधैव तत्राप्यस्तीत्यत आह—न च शब्देति। 'नियतसम्बन्धादिकं यदुक्तं तद्विषयं दर्शयति—तत्र अत्तेति। शय्याप्रवेशाप्रवेशयोर्व्यङ्ग्यवाच्ययोर्भावाभावरूपत्वेन प्रतियोग्यनुयोगिभावरूपसम्बन्धोपस्थितिनियमादिति भावः। कस्स ण वेत्यादाविति, प्रतारणं व्यङ्ग्यार्थः, सभ्रमरपद्माघ्राणञ्च वाच्यार्थः, तत्कथनजन्यत्वञ्च प्रतारणे तत्सम्बन्धः, तस्य च न नियमत उपस्थितिः तत्कथनजन्यत्वानुपस्थितावपीयं प्रतारयतीति बोधोदयात्। चक्रवर्त्ती तु अनियतसम्बन्धः विभिन्नबोद्धृकत्वम्, व्यङ्ग्यवाच्याबोद्धोः कान्ताकान्तयोर्विभिन्नत्वात् लक्ष्यार्थे तु तन्नास्ति तद्बोद्धुरेव वाच्यबोद्धृत्वादिति व्याचष्टे, तन्न; विभिन्नबोद्धृकत्वं यदि वाच्यार्थाबोद्धृबोध्यत्वं तदा प्रकृतेऽपि तन्नस्तकान्ताया उभयबोद्धृत्वात्। न च वाच्यार्थबोधः शाब्दो विवक्षितः कान्तायास्तु बाधावतारात् न शाब्दो वाच्यार्थबोध इति वाच्यं लक्ष्यार्थबोद्धुरपि बाधात् शाब्दवाच्यार्थबोधाभावेन तुल्यत्वात्। यदि तु स्वाबोद्धृबोध्यवाच्यकत्वं तत्, तदा लक्ष्यार्थेऽपि तदस्ति' अनवतीर्णबाधेन पुरुषेण वाच्यार्थस्यैव बुद्धत्वादित्यतस्ततो वैलक्षण्याभावात्। विपरीअ इति—

**विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम्।**
**हरेर्दक्षिणनयनं रसाकुला झटिति ढौकते॥ इति संस्कृतम्।**

ढौकते आच्छादयति। प्रकृतरते हरेर्न्युब्जत्वेन नाभिकमले ब्रह्मणः स्थित्यसम्भवाद् विपरीतेत्युक्ताम्। रसाकुलत्वेन व्रीडयाऽति न रतित्याग इति सूचितम्। दक्षिणनयनढौकनबीजं स्वयमेव व्याचष्टे—अत्र हि हरिपदेनेति। सूर्यात्मकता न पुराणसिद्धा। तन्निमीलनेनेति; अत्र निमीलनजन्यत्वं सम्बन्धः, एवमुत्तरोत्तरमपि बोध्यम्।

## सुधासागरः

किञ्च व्यञ्जकवाक्यस्य वाक्यान्तराद् वैलक्षण्यं प्रतीयते तत्राभिधादितोऽर्थोपस्थितौ यावती सामग्री तावती न व्यङ्ग्योपस्थिताविति स्थितेः सहकारिविशेषे कल्पनीयेऽभिधाया एव तत्कल्प्यते चेत्तदा स्वभावभङ्ग इत्यगत्या वृत्त्यन्तरं कल्प्यते, अन्यथा मुख्यार्थबाधादिसहकारेणाभिधयैव लक्ष्यार्थोपस्थितिसम्भवे लक्षणाऽपि वृत्त्यन्तरं न सिध्येत्।

अत्र जयरामन्यायपञ्चाननाः—यथा समयापेक्षत्वरूपादभिधावैधर्म्यादभिधाभेदो लक्षणायास्तथा मुख्यार्थबाधादिनिरपेक्षत्वरूपलक्षणावैधर्म्याल्लक्षणाभेदो व्यञ्जनायाः, अन्यथा मुख्यार्थबाधादिसापेक्षयाऽभिधया लक्ष्यार्थोपस्थितिसम्भवे लक्षणाऽपि वृत्त्यन्तरं न स्यात्। न च तन्निरपेक्षत्वं व्यञ्जनाया असिद्धम्, 'गच्छ गच्छसि' इत्यादौ तद्दर्शनात्। तदाहुः—'मुख्यार्थान्वयानुपपत्तिर्लक्षणाबीजमिति।'

अत्राहुः—किमिदं लक्षणाया बीजत्वम्। न तावज्जनकत्वम्, तीरादौ शक्यनीरादिसम्बन्धस्य तदजन्यत्वात्। नापि ज्ञापकत्वम्, विनाऽप्यनुपपत्तिज्ञानं तीरनीरादिसम्बन्धस्य चक्षुरादिना ग्रहात्। नापि नियमतस्तत्तात्पर्यग्राहकत्वम्, प्रकरणादिव्यापारान्तरेणापि तद्ग्रहात्। अथ लक्षणाजन्यशाब्दबोधजनकत्वं तदिति चेन्न मुख्यार्थबाधबुद्धिरूपस्य तस्य सति लक्ष्यतात्पर्ये मुख्यार्थबोधविघटकत्वेन जनितान्वयबोधवारकतया प्रयोजकत्व एव विश्रामात्।

किञ्च 'यष्टीः प्रवेशय' इत्याद्यनुरोधात् तात्पर्यविषयानुपपत्तिरेव तद्बीजं वाच्यम्, तर्हि तात्पर्यानुपपत्तिरेव बीजमस्तु। सा चेहाप्यस्ति। अथ तात्पर्यानुपपत्तिरनुपपद्यमानं तात्पर्यम्, तज्ज्ञानं च लक्ष्यार्थबोध एव जनकं न तु व्यङ्ग्यार्थबोधे, कुतः, तात्पर्याविषयस्यापि सहृदये स्फुरणात् इति चेन्न। लक्ष्यार्थबोधेऽपि सर्वत्र तत्पदस्य नानार्थोपस्थितिकालीनैकतरार्थबोधे एव तस्य जनकत्वात्, तच्चेदमिहापि, कथमन्यथा 'गङ्गायां' घोष इत्यादौ शैत्यपावनत्वादिकमेव प्रतीयते, न तु केशवालुकादिमत्त्वमिति नियमः। एतेन नानार्थपदाभिधेयार्थविशेषप्रत्यये प्रकरणादीनामननुगमेन सहकारित्वानुपपत्तेः, तात्पर्यग्राहकत्वेनानुगमे तु तात्पर्यग्रहस्यैव सहकारित्वौचित्यात्।

स्यादेतत्। 'गङ्गायां घोषः' इत्यादौ लक्षणायाः प्रयोजनं शैत्यपावनत्वादिप्रतीतिर्व्यञ्जनयैव न तु लक्षणया, प्रयोजनाभावात्। लक्षणायाः प्रयोजनवत्त्वनियमादिति चेत्। न। लक्ष्यप्रतीतिरेव प्रयोजनत्वात्। लक्षणा हि प्रयोजनेन नियता, न तु लक्ष्यप्रतीत्यतिरिक्तप्रयोजनेन, गौरवादप्रयोजकत्वाच्च। अथ तथाऽप्याश्रयभेदाद् भेदः। लक्षणा हि पदवृत्तिः। इयं तु पदतदेकदेशकाकुरचनार्थव्यङ्ग्याद्याकाराश्रितेति चेन्न। असिद्धेः। तदेकदेशादयो ह्यर्थविशेषतात्पर्यका न तु तत्प्रतिपादका इति।

अत्रोच्यते—इदं पदमेतदर्थस्य न वाचकं न वा लाक्षणिकं किन्तु व्यञ्जकमिति प्रामाणिकव्यवहारादेव व्यञ्जनासिद्धिः। अन्यथा एकयाऽभिधयैवार्थसिद्धौ लक्षणाऽपि विलीयेत। कियतामेव प्रयोजनान्तराद्यनियतानां लक्षणासंज्ञा। अन्वेषां व्यञ्जनासंज्ञा। अस्तु प्रयोजनवती लक्षणा लक्ष्यप्रतीत्यतिरिक्तप्रयोजनवत्येवादुष्टा, अन्यथा लक्ष्यप्रतीतेः प्रयोजनस्य सर्वत्र सम्भवाद् दुष्टलक्षणोच्छिद्येत। अपि च व्युत्पन्नाय लक्षणाजन्यबोधे मुख्यार्थबाधादिज्ञानं प्रयोजकम्। किञ्च शक्तिलक्षणे ज्ञाते प्रयोजिके, व्यञ्जना तु स्वरूपसती वक्त्राद्यौचित्यज्ञानसहकारादिति नातिप्रसङ्गः। न चैवमलं व्यञ्जनया, कमलादिपदात् कदाऽप्यसौरभाद्यव्यक्तेः माधुर्यादिघटनातश्चौजः प्रभृतेः सत्यप्यौचित्येऽव्यक्तेः। अन्यथा प्रतिकूलवर्णादेरदोषत्वापातात्। न च सम्बन्धज्ञानाभावे कथं सम्बद्धान्तरस्मृतिस्ततः

स्मृत्यभावे च कथं तच्छाब्दबोध इति वाच्यम्, व्यञ्जनास्थले एवमस्वीकारात्। प्रकारात् प्रकारान्तरेणोपीस्थितार्थेष्वेव व्यञ्जनायाः शाब्दबोधनियामकत्यादित्यपि क्रमः।

शक्यसम्बन्धो लक्षणा, बोध्यसम्बन्धो व्यञ्जना। न चेयमेव लक्षणा, अपभ्रंशानामपि साधुत्वापत्तेः। न चास्याः शाब्दबोधप्रयोजकत्वकल्पने गौरवम्। एतज्ज्ञानस्य स्मृतिजनकत्व संसर्गीभूय प्रयोजकानामन्यतमत्वेनाननुगमेऽप्यदोषात्। अस्तु वा साधुशब्दमात्रनिष्ठबोधकत्वविशेषः शक्तिः, तादृशबोधकत्वविशेषप्रकारकेच्छातो लघुत्वात्। बोधकत्वविशेषो लक्षणा। भ्रमकल्पने गौरवात्, तत्तदर्थशाब्दबोधे तत्तदर्थशाब्दबोधकत्वज्ञानत्वेन प्रयोजकत्वे लाघवाच्च। इत्थं च वाच्यलक्ष्यादिरूपार्थानां रचनादीनां च व्यञ्जकत्वं सूपपादम्। अर्थादीनां न व्यञ्जकत्वं किन्तु पदस्यैवेति त्वयुक्तम्। तत्तदर्थादिप्रतीत्युत्तरमेव व्यङ्ग्यप्रतीतेः, पुनः पदावृत्तौ गौरवात्, व्यञ्जनाया लक्षणान्यथासिद्धिप्रसङ्गाच्चेति मादृशामभिनवः पन्थाः। वक्तृबोद्धव्याद्यौचित्यज्ञानबोधकप्रतिभानुसंहितेन [व्यञ्जकेन] तत्पदज्ञानादिकमुपस्थाप्यापि विशिष्टार्थबोधकतादृशबोधकत्वं व्यञ्जना, न तु तज्ज्ञानमपि शाब्दहेतुरित्यपि क्रम इति वदन्ति।

अथ लक्षणाव्यञ्जकयोर्भेदमाह—न चेत्यादि। अयमाशयः—न लक्षणाव्यञ्जनयोरभेदः, लक्षणामुपजीव्य तद्दर्शनात्। नापि लक्षणानुगतमेव ध्वननमिति ध्वनिस्तल्लक्षणमिति वाच्यम्, अभिधोपजीवनेनापि भावात्। न च लक्षणाभिधोभयानुसार्येव, वर्णमात्रानुसारेणापि हि दृश्यते रसादिव्यञ्जना। शब्दामात्रेऽभिधा लक्षणा वा। नापि शब्दानुसार्येव, विकसन्नर्तकीनेत्रत्रिभागावलोकनादिगतत्वेनापि प्रसिद्धेः।

इदं त्ववधेयम्। अनया कटाक्षेणाभिलाषो व्यञ्जित इति सर्वसाधारणप्रसिद्धेः कटाक्षादेरभिलाषोपस्थापकत्वं व्यञ्जनयैव, परन्तु तत्र शब्दसम्बन्धासम्भवे मानसो बोध इति। तस्मादभिधालक्षणातात्पर्यविलक्षणस्तुरीयो ध्वननव्यञ्जनद्योतनप्रकाशनादिपर्यायो व्यापारोऽनपह्नवनीय एव। तत्र 'अत्ता एत्थ णिमज्जइ' इत्यादौ व्यङ्ग्यार्थो नियतसम्बन्धः। 'कस्स व ण होइ रोसो' इत्यादावनियतसम्बन्धः। नियतसम्बन्धत्वं च वाच्यव्यङ्ग्यप्रतीत्योरेकविषयात्मकत्वम्। प्रथमे तस्य भावः, पथिकरूपैकविषयत्वात्। द्वितीये तु तदभावः, सखीतत्कान्तादिविषयभेदात् इति केचित्। तन्न सम्यगाभाति। लक्ष्यस्य नियतसम्बन्धत्वमेव, व्यङ्ग्यस्य तथात्वमन्यथात्वं वेति पूर्वप्रतिपादितस्य हीदमुदाहरणमिति लक्ष्यसाधारणं नियतसम्बन्धत्वं वाच्यम्, न चोक्तं तथा भवति।

अन्ये तु प्रथमे सर्वेषामेव सत्यप्रतीतेः, द्वितीये तु कान्तस्यैव सत्यतयाऽन्येषां त्वसत्यतयेति नियतानियतसम्बन्धत्वमित्याहुः। तदपि न मनोरमम्। यत एवं वाच्यप्रतीतेरेव सत्यत्वासत्यत्वप्रतीतिविषयत्वरूपं वैलक्षण्यमात्रमुच्यते, न तु व्यङ्ग्यप्रतीतेः। तस्मान्नियतसम्बन्धत्वं तेन वाक्येन सह ज्ञाप्यत्वरूपसम्बन्धनियम इति युक्तमुत्पश्यामः।

सम्बद्धसम्बद्धयोर्यथा—विपरीतेत्यादि। गाथा छन्दः।

**विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम्।**
**हरेर्दक्षिणनयनं रसाकुला झटिति छादयति॥**

इति संस्कृतम्। स्पष्टम्। अत्र हरिपदेन दक्षिणनयनस्य सूर्यात्मकत्वं तन्निमीलनेन सूर्यास्तसमयस्तेन पद्मसङ्कोचस्ततो ब्रह्मणस्स्थगनं तस्मिन्सति गोपनीयस्याङ्गस्यादर्शनेनानिर्यन्त्रणं निधुवनविलसितमिति सम्बद्धसम्बद्धानि द्योत्यन्ते।

'अखण्डबुद्धिनिर्ग्राह्यो वाक्यार्थ एव वाच्यः वाक्यमेव च वाचकम्' इति येऽप्याहुः, तैरप्यविद्यापदपतितैः पदपदार्थकल्पना कर्तव्यैवेति तत्पक्षेऽप्यवश्यमुक्तोदाहरणादौ विध्यादिर्व्यङ्ग्य एव ।

ननु वाच्यादसम्बद्धं तावन्न प्रतीयते यतः कुतश्चित् यस्य कस्यचिदर्थस्य प्रतीतेः प्रसङ्गात् । एवं च सम्बन्धात् व्यङ्ग्यव्यञ्जकभावोऽप्रतिबन्धेऽवश्यं न भवतीति व्याप्तत्वेन नियतधर्मिनिष्ठत्वेन च त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानं यत् तद्रूपः पर्यवस्यति । तथा हि—

**भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ तेण ।**
**गोलाणइकच्छकुडङ्गवासिणा दरिअसीहेण ॥ १३८ ॥**

अत्र गृहे श्वनिवृत्त्या भ्रमणं विहितं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयति । यत् यत् भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकं, गोदावरीतीरे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धिः ।

---

सङ्केतः

व्यञ्जकत्वं शब्दानां गमकत्वम्, तच्च लिङ्गत्वमेव । अतः व्यङ्ग्यप्रतीतिः लिङ्गिप्रतीतिरेवेति, व्यङ्ग्यव्यञ्जकभावः लिङ्गिलिङ्गभाव एव इत्याहानुमानवादी—वाच्यादिति । सम्बन्धात् गम्यगमकभावरूपात् । अप्रतिबन्धे अविनाभावाभावे । एतेन अन्वयव्यतिरेकात्मकसपक्षसत्त्वविपक्षासत्त्वरूपा व्याप्तिः दर्शिता । नियतधर्मिनिष्ठत्वेनेत्यनेन पक्षधर्मता उक्ता । त्रिरूपादिति । पक्षधर्म-सपक्षसत्त्व-विपक्षव्यावृत्तयः रूपत्रयी लिङ्गस्य । लिङ्गिनि अनुमेये । तद्रूप इति । एवं निर्वाहे—पर्यवासनतः अनुमानरूप एव व्यङ्ग्यव्यञ्जकभावः, अनुमेय एव च व्यङ्ग्योऽर्थः इति सिद्ध्यतीति भावः ।

एतदेव उदाहरणेन द्रढयति—भमेति । सिंहस्योत्तमत्वेन श्ववधाभिधानं जातिविरुद्धमनुचितमिति 'दरि-अरिक्खेण-दृप्तवृकेण' इति अन्ये पठन्ति । गृहे इति । यत्र गृहे सा दुश्शीला विद्यते तत्रेत्यर्थः । भ्रमणमिति । भ्रमणविधिः वाच्यः, निषेधस्तु अनुमेयः । गोलाणई इत्यादिना गोदावरीकच्छकुहरस्य धर्मित्वनिर्देशः । दरिअसीहेणेति श्वमारणकारणाभिधानद्वारेण उपात्तस्य दृप्तसिंहसद्भावस्य हेतुत्वम् । कुडङ्गवासिणेति तद्विशेषणेन धर्मिणि

सिंहस्य सद्भाव: उपदर्शित: । यद्यदिति । अत्र भीरुभ्रमणं व्याप्यम् । भयहेतुनिवृत्ति: व्यापिका । सिंहसद्भावश्चेति व्यापक विरुद्धोपलब्धि: । असौ च एकादशविधानुपलम्भमध्ये कश्चन अनुपलम्भभेद: ॥

अनैकान्तिक: व्यभिचारी । बिभ्यदिति । अत्र अधमत्वादिति हेतु: । अप्रतिबन्धादिति । अयं भाव:— वचनार्थयो: तादात्म्य तदुत्पत्तिलक्षणौ सम्बन्धौ न घटेते । तथाहि—तयो: तादात्म्ये, मोदकादिवचनोच्चारे मुखादे: पूरणादिप्रसङ्गात् । तदुत्पत्तौ हि, किं वचनादर्थस्योत्पत्ति: ? किं वा अर्थात् वचनस्य । उभयमपि न घटते । वचनस्य ताल्वादिभ्य: उत्पत्ते:, अर्थस्य मृत्पिण्डादिस्वकारणादुत्पत्ते: । किञ्च—वचनादर्थोत्पत्तिस्वीकारे 'राज्यादि मे भूयात्' इत्युक्त्यैव तत्प्रसङ्ग: । अर्थाच्च वचनोत्पत्तिस्वीकारे अर्थे पृष्टे शब्दैर्भाव्यमित्येव स्यात् इति । एवं विधात् अनैकान्तिकविरुद्धासिद्धरूपात् हेतो: साध्यस्य व्यङ्ग्यस्य सिद्धि: । कथमित्यर्थ: ।

**सङ्केतः (रुय्यकः)**

**विपरीतरते लक्ष्मीर्ब्रह्माणं दृष्ट्वा नाभिकमलस्थम् ।**
**हरेर्दक्षिणनयनं रसाकुला झगिति स्थगयति ॥**

**भ्रम धार्मिक विश्वस्त: त श्वाऽद्य मारितस्तेन ।**
**गोदावरीनदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥**

कच्छं कूलं, कुञ्जं लतागहनम् ।

**इति पञ्चम उल्लासः**

**बालचित्तानुरञ्जनीः**

ननु "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादौ धर्मिधर्मभावाभावात् अखण्ड: परब्रह्मात्मको वाक्यार्थ एव वाच्य:, अखण्डवाक्यमेव वाचकमिति ब्रह्मवादिन: उपनिषद: शब्दब्रह्मवादिनो भर्तृहरिप्रभृतयश्च कथयन्ति । अतो विध्यादिव्यङ्ग्यो वाच्य एवेति शङ्कते अखण्डेति । अखण्डया बुद्ध्या नितरां ग्राह्यो वाक्यार्थ एव वाच्य:, अखण्डवाक्यमेव वाचकमित्यर्थ: । तैरपि देशकालावच्छेदेन अशेषव्यवहर्तृनिष्ठतया कल्पितपदपदार्थसंश्रयेण वाच्यवाचकल्पना तैरपि क्रियत एवेति तन्मतेऽपि शब्दस्यार्थान्तरप्रतीतौ व्यञ्जकत्वमेवाङ्गीकर्तव्यमिति परिहरति तैरपीति । अविद्यापदं व्यवहारमार्ग: । उक्तोदाहरणादौ नि:शेषच्युतेत्यादौ विध्यादि: तदन्तिकमेव रन्तुं गतासीत्यादिरूप: ।

व्यञ्जकत्वं शब्दानां गमकत्वम् वाक्यार्थप्रतीतिपूर्विका व्यङ्ग्यार्थप्रतीति:, वाच्योऽर्थो लिङ्गरूप:, व्यङ्ग्योऽर्थो लिङ्गिरूप इति व्यङ्ग्यव्यञ्जकभावो लिङ्गिलिङ्गभाव एवेति व्यक्तिविवेककारमतमवलम्ब्य पूर्वपक्षमाह वाच्यादिति । वाच्यादर्थादसम्बद्धं वस्तु न प्रतीयते । असम्बद्धमपि यदि प्रतीयते तदा यत: कुतश्चिच्छब्दाद्यस्य कस्यचिदर्थस्य प्रतीति: स्यादित्यतिप्रसङ्गमाह यत: कुतश्चिदिति । वाच्यसम्बद्धस्यैव प्रतीतिरस्तु प्रकृते किमागतं तत्राह एवञ्चेति । प्रतिबन्धो व्याप्ति: । अप्रतिबन्धस्तदभाव: । व्याप्तत्वेनत्यनेन सपक्षसत्त्वं, नियतेत्यनेन विपक्षाद्व्यावृत्ति:, धर्मिनिष्ठत्वेनेत्यनेन पक्षधर्मत्वमुक्तम् । अथवा व्याप्तत्वेनेत्यनेनैव पक्षधर्मत्वं सपक्षे सत्त्वञ्च दर्शितम् । तद्रूप: अनुमानरूप एवायं व्यङ्ग्यव्यञ्जकभाव: पर्यवस्यतीति भाव: । तथा चोक्तम्

'अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्॥' इति।

तदेतदनुमानं ध्वनिकारोक्ते ध्वनेरुदाहरणे योजयति तथा हीति। धम्मिअ धार्मिक। हे धार्मिक वीसद्धो विस्रब्धं यथा तथा भम भ्रम चरेत्यर्थः। कुत इत्याकाङ्क्षायामाह अत्रेति। यच्छ्वा [यः श्वा] दुःशीलो निवसति सः श्वा मारित इति श्वनिवृत्त्या अत्र गृहे भ्रमेति धार्मिकभ्रमणं विहितं तत् वाच्यं, गोदावरीतीरे मा भ्रमेति प्रतीयमानमनुमानगम्यं, गोदावरीतीरं भीरुभ्रमणयोग्यं न भवति भयानकाक्रान्तत्वात् सम्प्रतिपन्नवदित्यनुमानस्य व्यतिरेकव्याप्तौ भीरुभ्रमणं गोदावरीतीरे श्वभ्रमणमनुमापयतीत्यर्थः तामेव व्यतिरेकव्याप्तिमाह यद्यदिति।

एवं व्यतिरेकव्याप्तिभिधायान्वयव्याप्तिं दर्शयति गोदावरीति। व्यतिरेकव्याप्तौ यद्व्यापकं भयकारण-निवृत्तिरूपं तद्विरुद्धं भयकारणाक्रान्तत्वं, तस्योपलब्धिः। यद्यद्भयकारणाक्रान्तं तत्तद्भीरुभ्रमणयोग्यं न भवति। यथा सम्प्रतिपन्नमित्यन्वयव्याप्तिः। अतोऽन्वयव्यतिरेक्यनुमानेन गोदावरीतीरे मा भ्रमेत्यस्यार्थस्य सिद्धत्वान्न व्यङ्ग्यं पृथक्कल्पनीयमित्यर्थः। सिद्धान्त प्रतिजानीते अत्रेति। गोदावरीतीरं भीरुभ्रमणयोग्यं न भवति भयानका-क्रान्तत्वादित्ययं हेतुः पक्षत्रयवृत्तित्वादनैकान्तिकः। न केवलमनैकान्तिकः विरुद्धोऽपीत्याह शुन इति। यथा श्वभीतभ्रमणयोग्यं न भवति सिंहाक्रान्तत्वादिति प्रयोगस्तथा तावत्पक्षे वर्तते श्वभीतपुरुष भ्रमणविशिष्टसङ्ग्रा-मादौ सपक्षे। [वर्तते] न च वर्तते विपक्षे पर्वतादौ। श्वभीतोऽपि वीरत्वात्सिंहादबिभ्यद् भ्रमतीति पक्षविपक्षयोरेव वर्तमानो हेतुः विरुद्ध इत्यर्थः। किञ्चासिद्धोऽपीत्याह गोदावरीति। सिंहक्रान्तत्वादिति हेतुरसिद्धः, प्रत्यक्षानुमाना-भ्यामानश्चितत्वात्। न च वचनेन सिद्धिरिति वाच्यम्। वचनस्य कुलटोक्तत्वेनार्थव्यभिचारादिति भावः। उक्त-मर्थमुपसंहरति तदिति। तत्तस्मात्कारणात् एवं विधात् अनैकान्तिकादिदोषसहितात् कथं साध्यसिद्धिः, न कथञ्चिदपीत्यर्थः।

## काव्यादर्शः

येऽप्याहुरिति। अखण्डवाक्यवाक्यार्थवादिनो भट्टाः। 'वाक्यार्थमतये हि पदार्थानां प्रवृत्तौ नान्तरीयकं, पाके ज्वालेव काष्ठानामिति पदार्थानामविद्यमानत्वाद् न स्ववाचकैः संबन्धग्रहणमुपपद्यते इति शब्दावगतैः पदार्थै-स्तात्पर्येण योऽर्थ उत्थाप्यते स एव वाक्यार्थः स एव वाच्यः' इत्याहुस्तैरपि देशकालावच्छेदेन अशेषव्यवहर्तृनि-ष्ठतया कल्पितपदार्थसंश्रयेण वाच्यवाचकल्पना क्रियत एवेति तन्मतेऽपि शब्दस्यार्थान्तरप्रतीतौ व्यञ्जकत्वमेव, न वाचकत्वम्। एवं पदार्थवाक्यार्थन्यायं तात्पर्यशक्तिसाधकं निराकृत्यं प्रकृते व्यञ्जनशक्ति योजयितुमाह— तत्पक्षेऽपीति। उक्तोदाहरणादाविति 'निःशेषे'त्यादौ।

अनुमानवादी त्वाह—'व्यञ्जकत्वं शब्दानां गमकत्वं, तच्च लिङ्गत्वम्, अतो व्यङ्ग्यप्रतीतिर्लिङ्गिप्रतीतेरेवेति व्यङ्ग्यव्यञ्जकभावो लिङ्गिलिङ्गभाव एव।' इत्याह—वाच्यादसंबद्धमिति। संबद्धादिति कार्यकारणभावमूलस्य गम्यगमकभावस्योपगमात्। अप्रतिबन्ध इति। अव्यभिचाराभावेन भवति, किं तु व्यङ्ग्य व्यञ्जकभावः प्रति-बन्धेऽव्यभिचारे एव स्यादिति व्याप्तिः, यथा 'अग्निरत्र धूमाद्' इति। नियतधर्मिनिष्ठत्वेनेति। अनेन अन्वयव्य-तिरेकप्रतिपादनं सपक्षसत्त्वविपक्षासत्त्वभणनमित्यर्थः। त्रिरूपादिति। पक्षधर्मः, सपक्षसत्त्वं विपक्षाद् व्यावृत्तिरिति त्रिरूपं लिङ्गम्। येन लीनोऽर्थो गम्यते प्रतिपद्यते तल्लिङ्गं बौद्धानाम्। लिङ्गिनीति अनुमेये। तद्रूप इति। पर्यवसाने

अनुमानरूप एव व्यङ्ग्यञ्जकभाव इत्यर्थ: । एतदेवोदाहरणेन द्रढयति—भमेति । प्रथमोल्लासे व्याकृता । सिंहस्य चेभकुम्भनिर्भेदहेवाकिन: श्ववधाभिधानं जातिविरुद्धमित्यनुचित्तम् । ततो 'दरिअ—रिक्खेण' इत्यन्ये पठन्ति । गृह इति । यत्र गृहे सा दु:शीला विद्यते । भ्रमणमिति । भ्रमणविधिर्वाच्यस्य, तत्प्रतिषेधस्तु अनुमेय: तत्र 'गोलाणइ—कच्छकुडङ्गवासिणा' इति गोदावरीकच्छकुहरस्य धर्मित्व निर्देश: । 'दरिअसीहेण' इति श्वमारणकारणाभिधानद्वारेणोपात्तस्य दृप्तसिंह सद्भावस्य हेतुभाव: । 'कुडङ्गवासिणा' इति तद्विशेषणेन तस्य धर्मिणि सद्भावो पदर्शनम् । यद्यदिति । 'भयकारणनिवृत्तिर्व्यापिका, भीरुभ्रमणं व्याप्यं, सिंह सद्भावश्च व्यापकविरुद्धोपलब्धिरेकादशविधानुपलम्भमध्येऽनुमानभेद: । यथा नात्र तुषारस्पर्शोऽग्ने:' इति । 'अत्र' इति धर्मी, 'तुषारस्पर्शो न' इति साध्यम्, वह्ने: इति हेतुर्व्यापकविरुद्धोपलब्धि: । तुषारस्पर्श: प्रतिषेध्यो व्याप्यो व्यापकश्च शीतस्पर्श: ।

**विवेक:**

इदानीमखण्डवादिनामपि मते व्यङ्ग्य दर्शयन्नाह अखण्डेति । त एवमाहु:—वाक्येनैव तावद्वृद्धव्यवहार: । न च वाक्यावस्थायां पदानि पदार्था वा वि(भि)द्यन्ते । यथा हि चित्रे नीलपीतरक्तादय: पानके गुडाम्लीकामरिचादय: ग्रामरागे षड्जर्षभगान्धारदय: पृथक्त्वेन नावभासन्ते (वृ. दे. (१.८९) तथा क्रियाकारकविशेषणादिपदानि तदर्थवाक्यार्थाभ्यामभेदेनैव प्रतीयन्ते । वाक्यार्थो हि पदपर्यायस्त्वखण्ड एवाभिधीयमानो दृश्यते तद्यथा मुण्डं करोति मुण्डयति, श्लोकैरुपस्तौति उपश्लोक यति, श्रुत्वा छन्दोऽधीते श्रोत्रिय:, कलापिषूद्भिद्यमानकलापेषु विगलितकलापेषु वा देयमृणं कलापकं, केशेषु केशेषु गृहीत्वा युद्धं वृत्तं केशाकेशि, अश्नीत पिबतेति सातत्येन यस्यां क्रियायां नामात्मानमिच्छति सा अश्नीतपिबतेति, दक्षिणपार्श्वे लुब्धेन विषदिग्धेन शरेण मर्मणि निर्मितं व्रणं यस्यास्ति स दक्षिणेर्मा, दक्षिणात् समुद्राददिराजं हिमवन्तं यावद्योजनानां दशशतीं विजयमान: समस्तरत्नानां य आयतनंचक्रवर्ती यो राजसूययाजी य ईश्वरो मण्डलस्य यथाज्ञयैव राज्ञा: प्रशस्ति स सम्राड्विज्ञेय (अ. को. क्ष. व. २३) इति । अपि च ललाटं पश्यतीति लालाटिक:, कुक्कुटीं चरतीति कौक्कुटिक: । तत्र ललाटशब्देन दूरेऽवस्थानं लभ्यते । तेनानुपश्लेष: कार्येषु चानुपस्थानम् । य: सेवक: स्वामिन: कार्येषु नीपयुज्यते ललाटमेव वा कोपप्रसाद चिन्हं लक्षणाय पश्यति स लालाटिक उच्यते । तथा कुक्कुटीशब्देन कुक्कुटीपातो लक्ष्यते तेन देशस्याल्पता । यो हि भिक्षुरविक्षिप्तदृष्टि: पादविक्षेपदेशे चक्षु: संयम्य गच्छस्तावत्येव देशे चरति यो वा तथाविघमात्मानमतथाभि(वि)धोऽपि दर्शयति कुक्कुटीपातास्त्रिकानां (पातान्तिकानां) चेष्टालां(नां) वाऽनुकरोति य: स कौक्कुटिक इत्युच्यते (पा, ४/४/४६ भा. वृ:) । एवञ्च यथा पदपर्यायवाक्यानामखण्ड एवाविभक्तो द्देशविभाग एकोऽर्थोऽभिधेयस्तथा 'देवदत्त गामभ्याज श्रुत्वा दण्डेने' त्यादीनामपदपर्याया[णा]मपि वाक्यानां सन्निविष्टानेकशक्तिरूप: सर्वोपाधिविशिष्ट: क्रियाऽऽत्मा नष्टोद्देशविभाग एक एवाभिधेयो भवति । पदानान्तु प्रकृतिप्रत्ययादिपदविभक्तप्रतिपत्त्यर्थमेवान्वयव्यतिरेकाभ्यां व्यावहारिकोऽर्थापोद्धार: शब्दापोद्धारश्च क्रियते, अपोद्धारणाञ्च विनिविष्टभेदानामिव पुनर्योगो विधीयत इति ।

अत्रापरे ब्रुवते—किमत्रैवं वक्तव्यम्, अखण्डवादिभिरेभि: पदपदार्थानामिव वाक्यावस्थायां वाक्यवाक्यार्थानामाप्यवान्तरवाक्यावस्थायामसत्यत्वं मन्यते न वा ? यथा 'दुह्यतां गौ:, उपाध्याय: पयसा भुक्त्वा माम-ध्यापयतु, येन मामधीयानं दृष्ट्वा पिता तुष्यति, तुष्टश्च मे मोदकान् ददाती'ति । किञ्चातो यदि मन्यते पदै:

किमपराद्धम् ? अथ न मन्यते तथापि पदैः किमपराद्धं येन तुल्येऽप्यारभ्यारम्भकत्वे पदानामेवासत्यत्वमभ्युपगम्यते न वाक्यानाम् ? अथ वाक्यान्यवान्तरवाक्यावस्थायामसत्यानि तर्ह्यवान्तरवाक्यामपि महावाक्यावस्थायां, महावाक्यानामपि विद्यास्थानावस्थायां, विद्यास्थानानामपि शब्दब्रह्मावस्थायां, शब्दब्रह्मणोऽपि परब्रह्मावस्थायामसत्यत्वमिति न कस्यचित् किञ्चिदपि विचार्यं भवति। न च पद स्यात्यन्तमसत्यत्वं तेऽपि मन्यन्ते येनाविद्यमानावपि प्रकृतिप्रत्ययादिवदविद्वत्प्रतिपत्त्यर्थमन्वयव्यतिरेकाभ्यामपोद्धृतपदपदार्थौ भिन्नाविव पुनर्योजयन्ति। यदि हि सर्वथैवासत्यत्वमवाचकत्वञ्च पदानामभ्युपेयते तत्तदारब्धवाक्यानामपि तथात्वे शब्दव्यवहारोच्छेदः प्रसज्यते, अतः पदपदार्थपदवीकल्पनाऽवश्यमपरिहार्यैव। एवञ्च सर्वं परमेश्वराद्वयं ब्रह्म, तदतिरिक्तं सर्वं मिथ्या—तथाहि विश्वमिदं न सद् विचारवाध्यत्वात्, नासत् प्रतीयमानत्वात्, नाप्युभयात्मकं विरोधात्, नाप्यनुभयात्मकं तत्त्वादेव, अतश्चतुः शिखरशेखरशून्यमिदं ब्रह्मातिरिक्तं निर्वक्तुमशक्यम्। ब्रह्मणस्तु पदेनाभिधानमनुपपन्नं, निर्धर्मकत्वेन सङ्केतागोचरत्वात्। अतः पदपदार्थविभागमन्तरेणैव चक्षुरादिवत् वाक्यं वाचकं ज्ञानजनकमिति आहुस्तैरपि शाब्दं ज्ञानविद्यादशायां सविकल्पकमेवेति व्यवहारार्थमवश्यं पदपदार्थपदवीकल्पनाऽपि स्वीकर्तव्यैव। तदेतदाह तैरपीत्यादि। ततश्च खण्ड़पक्ष इवाखण्डपक्षेऽपि व्यङ्ग्य एव विध्यादिरित्याह तत् पक्षेऽपीति।

अथ शब्दस्य शब्दव्यङ्ग्यं प्रति लिङ्गत्वं ध्वनिकृतैवाशङ्क्य निराकृतमित्यभि प्रेत्य बोध्यस्या(वाच्यस्या)र्थस्य व्यङ्ग्यं प्रति यद्व्यञ्जकत्वं तल्लिङ्गत्वमेवेत्याशङ्कते ननु वाच्यादिति। तावच्छब्देन न कस्याप्यत्र विमतिरिति दर्शयति इतरथाऽतिप्रसङ्गात्। तथाच ध्वनिकारः 'शब्दार्थयोः प्रसिद्धो यः सम्बन्धो वाच्यवाचकभावाख्यस्तमनुरुन्धान एव व्यङ्ग्यव्यञ्जके(कत्व)लक्षणो व्यापारः' (ध्व. आ. ३/३३ वृः १९७ पृः) इति। एवञ्चेति सम्बन्धमन्तरेण नास्ति व्यञ्जकभाव इति व्यवस्थितौ ध्रुवमप्रतिबन्धोऽत्र बोद्धव्यः। अप्रतिबन्धे सति तस्यावश्यमभावात्। प्रतिबन्धस्तु व्यापकयोगव्यवच्छेदनाय व्याप्तिव्यतिरेकेण न विभाव्यत इत्यत आह व्याप्तत्वेनेति। ततश्च नियतधर्मिविषयतोन्मिषत्येव। नियतपदेन सन्दिग्धाश्रयसिद्धत्वं निरस्यति। त्रिरूपादिति पक्षधर्मताऽऽदिसंज्ञकरूपत्रययुक्तादित्यर्थः।

तत्रानुमेये पर्वतादौ धर्मिणि लिङ्गस्य सत्त्वमेव विनिश्चितमित्येकं रूपं पक्षधर्मतासंज्ञकम्। तथा सपक्ष एव सत्त्व निश्चितम्, समानः पक्षः सपक्षः पक्षेण सह सदृशो दृष्टान्तधर्मेत्यर्थः। सपक्ष एव सत्त्वं निश्चितमित्यन्वयसंज्ञकं द्वितीयं रूपम्। तथाऽसपक्षे चासत्त्वमेव निश्चितं, न सपक्षोऽसपक्षस्तत्रासत्त्वमेवेति व्यतिरेकसंज्ञकं तृतीयं रूपम्। यद्यपि सपक्ष एव सत्त्वमित्युक्ते सामर्थ्यादिवासपक्षे चासत्त्वमिति गम्यते तथापि द्वयोरुपादानं प्रयोगनियमार्थम्। अन्वयप्रयोगो व्यतिरेकप्रयोगो वा नियमवानेक एव प्रयोक्तव्यो न तु द्वावपीति। तदित्थं त्रीणि रूपाणि यस्य लिङ्गस्य तस्मादनुमेये परोक्षविषये प्रतिपत्तुर्ज्ञानमनुमानं यत् तद्भूयः पर्यवस्यति, अतो नास्ति लिङ्गलिङ्गिभावादपरो व्यङ्ग्यव्यञ्जकभाव इति। यद्यपि 'कार्यकारणभावाद्वा स्वभावाद्वा नियामकात्। अविनाभावनियमोऽदर्शनान्न न दर्शनात्॥' (प्र. वा. ३/३०) इति तदुत्पत्तितादात्म्याभ्यामेवाविनाभावनियमः, न च वाच्यव्यङ्ग्ययोः सम्बन्धस्तदुत्पत्तिलक्षणः कार्यकारणभावाभावात्, नापि तादात्म्यलक्षणोऽत्यन्तं भिन्नत्वेन प्रतिभासमानात् (...नत्वात्)। तादात्म्यं ह्येकत्वमभिधीयते यथा वृक्षशिंशपयोः, तथापि वाच्यप्रतीति(त्य)विनाभाविनी व्यङ्ग्यप्रतीतिरिति चेत् तत्प्रतीत्योर्निमित्तनिमित्तिभावेनावस्थानादस्ति तदुत्पत्तिलक्षणः सम्बन्ध इति भावः (न्या. कु. अ. १/१८ वृ)। अनुमानन्तु द्विधा स्वार्थं परार्थश्च। स्वस्मा एव यत्तत् स्वार्थं ज्ञानात्मकम्। पर्वतादौ धूमादिकं दृष्ट्वा यस्य प्रतिपत्तुर्ज्ञानमुत्पद्यते स

एव तेन ज्ञानेन परोक्षमर्थं प्रतिपद्यते नान्य इति स्वार्थं तदनुमानमुच्यते। परस्मै यत्तत् परार्थं वचनात्मकम्। त्रिरूपलिङ्गप्रतिपादकं हि वचनं परं प्रतिपादयति ज्ञापयतीति वचनमप्यनुमानशब्देनोच्यते, उपचारात्। यत्र यत्र धूमस्तत्र तत्राग्निर्यथा महानसे, धूमाश्चा[त्र] द्रव्य इति व्याप्तिपक्षधर्मतासंज्ञकं द्व्यवयवमेव साधनवाक्यं सौगतानाम्। अन्ये तु प्रतिज्ञा हेतुर्दृष्टान्त उपनयो निगमनश्चेति पञ्चावयवं साधनवाक्यमाहुः। अग्निरत्र धूमात्। यत्र धूमस्तत्राग्निर्यथा महानसे, तथाचायं, तस्मादग्निरत्रेति निगमनमित्यास्तामेतत्।

तथाहीति—तथात्वे ध्वनिकृतोदाहृतां गाथामेव प्रथममुपदर्शयति भम इत्यादि। भ्रम धार्मिक विश्वस्तः स श्वाऽद्य मारितस्तेन। गोदावरीकच्छकुडङ्गवासिना दृप्तसिंहेन॥ कच्छं कूलं, कुडङ्गं लतागहनम्। इयं हि कस्यचिद्विविक्तनदीलतागृहे परपुरुषपदत्तसङ्केतायाः पुष्पावचयादिनिमित्तं धार्मिकस्य तद्देशभ्रमणं मनोरथविघ्नभूतं मन्यमानाया उक्तिः। अत्र यौ वाच्यव्यङ्ग्याख्यौ विधिनिषेधात्मकार्थौ तयोर्धूमाग्न्योरिव साध्यसाधनभावेनावस्थितिः। तदिह गोदावरीनिकुञ्जो धर्मी, दृप्तसिंहसद्भावो हेतुः, कुडङ्गवासिनेति तद्विशेषणेन पक्षधर्मता च सुव्यक्तैव। तदस्य हेतोः साध्यस्य च विश्वस्तभ्रमणविधिलक्षणस्य महानसस्थान (सहानवस्थान) लक्षणो विरोधः प्रसिद्ध एव। तदिह प्रेक्षावतः प्रवृत्तिरनिष्ठसाधनाभावत्वाव्याप्ता, तद्विरुद्धस्यात्र दृप्तसिंहत्वमिति व्यापकविरुद्धोपलब्ध्या भ्रमणविधेः प्रतिषेधो न तु व्यङ्ग्य इति। तदेतदाह अत्र गृह इत्यादि। एवञ्च सर्वस्यैव ध्वनेरनुमानान्तर्भावो वेदितव्यः। अनुमानस्य तदु(तद) पेक्षया महाविषयत्वात्, महाविषयत्वञ्चास्य ध्वनिव्यतिरिक्तेऽपि विषये समासोक्त्यादौ गुणाभूतव्यङ्ग्यादौ च सर्वत्र सम्भवात्।

## दीपिका

किञ्चाखण्डब्रह्मणि लौकिकप्रामाण्यागम्ये न तावदभिधाप्रसक्तिः, सङ्केतागोचरत्वात्। नापि लक्षणा, सामग्रीविरहात्। न च सा द्वितीया, तस्याः पदार्थसंसर्गमात्रनैयत्यप्रतिपादनात्, अखण्डस्यार्थस्य तदतिरिक्तत्वात्। नाप्यनुमानत्वादिश्रुतिः, पृथक्प्रामाण्याद्, व्याप्तिग्रहादिविरहाच्चेति व्यापारान्तरमेवाङ्गीकृतं भवद्भिरन्वयवृत्त्यादिभाषाव्यपदेश्यम्, अस्माभिस्तु व्यञ्जनादिव्यपदेश्यमिति सदेव तत्।

अश्रुतकाव्यौपनिषदिकानां सम्प्रति तार्किकम्मन्यानां खण्डिकोपाध्यायानां व्यञ्जनाया अनुमानान्तर्भाववादमुपन्यस्यति—वाच्यादिति। तावदिति। भवद्भिरेवेदं वच उच्यत इति भावः। एवञ्चासम्बन्धादिति दैवसिद्ध एवायमर्थ इत्यर्थः। सम्बन्धादिति तु पाठे व्यङ्ग्यव्यञ्जकभावः सम्बन्धमूल इत्यर्थः। अप्रतिबन्धे कादाचित्कसम्बन्धेऽवश्यं न भवतीति भवद्भिश्च व्यञ्जके परिपूर्णेऽभिव्यक्तिरवश्यमुच्यत इति भावः। व्याप्तत्वेनेति—व्याप्यव्यापकयोर्यथायोगं व्याप्यायोगव्यापकविरुद्धयोगाव्यवच्छेदेन नियतः प्रकृतो यो धर्म्याश्रयस्तन्निष्ठत्वेनाङ्गिनि व्यापके व्यङ्ग्यत्वाभिमते ज्ञानमनुमानमिति सङ्गतिः। कथं पुनरेवमनुमानमित्याह—त्रिरूपादिति। पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तिनामरूपतयोपपन्नाल्लिङ्गाद् व्याप्यात्। सपक्षसत्त्वं तु 'भम धम्मिअ' इत्यादावनुपनिबद्धमपि सामर्थ्यादवसेयम्। एवञ्च विपक्षव्यावृत्तिरपि।

नन्वननुमानप्रवेशेऽपि किं व्यञ्जनस्येत्याह—यो लिङ्गस्तद्रूपो व्यङ्ग्यरूपः पर्यवस्यति। भवदभिप्रायसिद्धव्यङ्ग्यव्यवहारविषयत्वेनायमेव विश्राम्यतीति नानुमेयाधिको व्यङ्ग्य इत्यर्थः। यत्तद्रूप इति पाठेऽनुमानमित्यन

तरमितीति शेषं कृत्वा व्यङ्ग्यव्यञ्जकभाव इति पदं सम्बन्धनीयम् । ततश्च व्यङ्ग्यव्यञ्जकभावो यद्रूपः परिशीलितपूर्व एवेति नात्यन्तमादरणीयः पर्यवस्तीत्यर्थः ।

एतच्च ध्वनिकारोदाहृतिमुखेन द्रढयति—तथाहीति । सणओ कुक्कुरः, सुणओ इति पाठे स एवार्थः । गोलाणई गोदावरी । दरिअ इति दर्पिष्ठार्थे । कुसुमाद्यवचयार्थे गोदावरीकण्ठे शश्वद् भ्रमतो धार्मिकात् प्रहस्य भङ्गाभीरोः कस्याश्चिदियमुक्तिः ।

उदाहृतौ प्रकृतयुक्तियोगं प्रतिजानीते—अत्रेति । एवमेव व्याप्त्यादिभाग विवेचनेन स्फुटयति—व्यापकेति । व्यापकं भीरुभ्रमणस्य भयहेतुविरहबोधनम् । तद्विरुद्धोपलब्धिर्भयहेतुप्रतीतिः स्वव्याप्यमभ्रणमनुमापयति । अत्र पक्षे गोलेत्यादि निर्दिष्टगोदावरीकच्छो भ्रमणयोग्यो न भवतीति साध्यम् । सिंहसञ्चाराक्रान्तत्वादिति हेतुः । एवमन्यत्रापि मृग्यम् ।

**दर्पणः**

अत्र वाच्येन प्रथमव्यङ्ग्यस्य संबन्धः । अयमर्थः । सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि श्रुतिवाक्येन ब्रह्मणो निर्धर्मकत्वात् सत्यादिभेदेन खण्डशो धर्मप्रतिपत्तिविरहात् अविभक्त एवेत्यर्थः प्रकाश्यते । तन्वीत्या वाक्यान्तरेणापत्तिः[?] । येऽप्याहुः, वेदान्तिन इत्यर्थः । आरिसापादयाता[?] तैर्व्यवहारदशायां पदपदार्थकल्पना कर्तव्यैव । अन्यथा पदपदार्थव्याकोपे व्युत्पन्नाव्युत्पन्नयोर्विशेषः [न] स्यात् । उक्तोदाहरणं निःशेषच्युतेति । व्यङ्ग्य एव भट्टपक्षोक्तयुक्त्येति विशेषः । तेषां हि व्यवहारे भट्टनयः । किञ्चैषां मते सदानन्दस्वरूपब्रह्मणः अभिधाया विषयः शक्यतागोचरत्वात् । नापि लक्षणायाः सामग्रीविरहात् । नहि एतस्य तात्पर्यस्य अपदार्थस्य, सर्गमात्रनैयत्यात् । नाप्यनुमानस्य, व्याप्तिग्रहाभावात् । श्रुतेः प्रामाण्यात् इत्यन्यवृत्त्यादिभाषाव्यपदेश्यं तत्प्रकाशकं यद् व्यापारान्तरमङ्गीकृतं वेदान्तिभिस्तदेव व्यञ्जनादिव्यपदेश्यमस्माकं काव्योपनिषदानामिति[?] निर्विवादम् ।

अधुनाध्वनेरनुमानान्तर्भावं वाच्यादित्यादिना व्यापकविरुद्धोपलब्धिरित्यन्तेन ग्रन्थेन शङ्कते भ्रमेति । व्यञ्जनावादिभिर्भवद्भिरपि एतदभ्युपगन्तव्यमिति भावः । तदुभयव्यवच्छेदरूपाव्याप्तिसंबन्धेन[?] नियतः प्रकृतो यो धर्मी आश्रयस्तन्निष्ठत्वेन त्रिरूपात् पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तिनामकरूपत्रयवतो लिङ्गाद् व्याप्यात् लिङ्गव्यापकेना [कानु ?] नुमानमित्युच्यते । तटस्थरूपः पर्यवस्यति । वाच्याद् व्यङ्ग्याच्चावगम इत्यर्थः । हेतुमाह तथाहीति ।

**भ्रम धार्मिक विश्वस्तः स श्वाऽद्य मारितस्तेन ।**
**गोदावरीनदीकच्छकुञ्जवासिना दृप्तसिंहेन ॥**

इह हि वञ्जुललतागृहे सङ्के[ति ?] तायाः केनापि निमित्तेन धार्मिकेण तद्देशभ्रमणं स्वमनोविप्रकृतं मन्यमानांया वचनम् । अत्र यौ वाच्यव्यङ्ग्यार्थौ तयोः धूमाग्न्योरिव साध्यसाधनभावेनावस्थितिः । तदिह गोदावरीतीरे वने कुञ्जे आश्रयभूते भीरुभ्रमणरूपः साध्यः । तत्र वाच्यरूपो दृप्तसिंहसद्भावः साधनम् । इह च लिङ्गस्य पक्षसत्त्वं निबद्धमेव । सपक्षसत्त्वविपक्षव्यावृत्तत्वे अनिबद्धे अपि सामर्थ्यादवसेये इत्यतो नानुमेयभावो व्यङ्ग्यत इति भावः ।

**साहित्यचूडामणिः**

अथ वैयाकरणानां साधूनां ध्वनिवादविरुद्धं प्रमेयं प्रतिक्षिपति—अखण्डेति। अखण्डया बुद्ध्या निर्ग्राह्यत्वनियमाद् वाक्यान्तरप्रतीतः सर्वोऽप्यर्थो वाच्य एव, तथा वाक्यमेव वाचकं पदमिति ये प्राहुस्तैरप्यविद्यापदपतितैर्मार्यापथप्रवृत्तैः प्रकृतिप्रत्यययोरिव पदपदार्थययोः कल्पना सर्वा कर्त्तव्येति तन्मतेऽपि 'निश्शेषच्युते'-त्यादौ विध्यादिर्व्यङ्ग्य एव। तदुक्तं—'येऽप्यविभक्तं स्फोटमेव वाक्यं तदर्थमाहुः, तैरप्यविद्यापदपतितैः सर्वेयमनुसरणीया प्रक्रिया। तदुत्तीर्णत्वे तु परमेश्वराद्वयमयं ब्रह्मेत्यस्मच्छास्त्रकारेण न न विदितं तत्त्वालोकग्रन्थं विरचयतेत्यास्तामि'ति।

अथ सौगतानुसारादनुमानैकप्रधानो महिमा प्रत्यवतिष्ठते वाच्यादिति। अविवक्षिताद् विवक्षिताद् वा सम्बन्धरहितं यद् वस्तु तन्न प्रतीयते, यतः कुतश्चिद् वाच्याद् यस्य कस्यचिदर्थस्य या प्रतीतिस्तस्या प्रसङ्गात्। एवं सम्बन्धो भवदभिमतो व्यङ्ग्यव्यञ्जकभावः प्रतिबन्धहानौ न सम्पद्यते। तत् एतत् संवृत्तम्। व्याप्तत्वेन सपक्षावगाहितया। नियतेति। धर्मिणि साध्यधर्मविशिष्टे निष्पत्तिर्यस्य। एतेन पक्षवृत्तित्वसिद्धिः। नियत्वेन विपक्षाद् व्यावृत्तिरिति त्रिरूपाद्। यदाहुः "त्रिरूपाल्लिङ्गतोऽर्थदृगि"ति। लिङ्गिनि व्यङ्ग्यलक्षणे यद् ज्ञानमनुमानाकारं तद्रूपः पर्यवस्यति। न पुनरलौकिकशब्दशक्त्यन्तरमूलतास्योपपद्यत इति। तत्र ध्वन्युदाहरणमादौ पर्यालोचयति—तथाहीति। भमेति।

**भ्रम धार्मिक! विस्त्रब्धः स श्वाद्य मारितस्तेन।**
**गोदावरीकच्छकडुंगवासिना दृप्तसिंहेन॥**

इति केनचिदभिमतेन यूना सह सम्भोगाभिलाषिण्या गोदावरीतीरलतानिकुञ्जदत्तसंकेतायास्तत्रैव समित्कुसुमादिहेतुना भ्रममाणं धार्मिकापसदमक्षममाणयाः सारमेयमारणोपन्यासेन तद्भ्रमणं प्रतिषेद्धुं कस्याश्चिदुक्तिः। भ्रम अतिसृष्टोऽसि प्राप्तः काल इति वा। धार्मिक! कुसुमाद्यर्थे युक्तं ते भ्रमणम्। विस्त्रब्धः शङ्काकारणवैकल्यात्। स यस्तव भीत्युत्कर्षमकार्षीत्। श्वा नित्योपद्रवस्वभावः। अद्य दिष्ट्या वर्धसे। मारित इति न तस्य पुनरुत्थानम्। तेन यः पूर्वं कर्णाकर्णिकया श्रुतः। गोदेत्यादि, सदा निगूढं वर्तमानेन। दृप्तसिंहेन दर्पारोपान्मत्तमातङ्गमिव क्षुद्रं कुक्कुरमपि प्रहर्तुमुद्युक्तेन। अत्र स्वतस्सिद्धमपि भ्रमणं कुक्कुरभयादपोदितमिति प्रतिप्रसवात्मको विधिर्न नियोगादिरूपः।

तदेतदनुमानानुकूल्येन व्याचष्टे—अत्रेति। गृहे शुनो निवृत्त्या निषेधरूपतया विहितं सद् भ्रमणं गोदावरीतीरे सिंहसद्भावमुपलम्भवात् धार्मिकस्य भीरुस्वभावस्य भ्रमणप्रतिषेधमनुमापयति।

प्रयोगं रचयति—यद्यदिति। व्यापकेति। प्रतिषेध्यस्य यद् व्यापकं तस्य यद् विरुद्धं तस्योपलब्धिः। यथा नात्र तुषारस्पर्शोऽग्नेः' इति अनुपलब्धिषोडशके [प्रमाणवा. २.४] काचिदेषा। भ्रमणस्य सिंहसद्भावस्य च निवर्त्यनिर्वतकभावो विरोधः।

अयं भावः—भीरुभ्रमणस्य भयकारणाभावपूर्वकत्वनैयत्यात् क्षुद्रसत्त्वस्य कुक्कुरस्य व्यावृत्त्या सम्भवन् भ्रमणविधिः क्रूरतरस्य केसरिणः सद्भावोपलब्ध्या तत्प्रतिषेधहेतुः। येन स श्वा मारित इति णिच्प्रयोगः। केसरिव्यापारो हि वाच्यकक्ष्यायां धार्मिकभ्रमणविधौ हेतुः। तमेव परीक्षमाणो विचक्षणस्तन्निषेधमनुमातुमर्हति।

नहि कश्चित् स्वस्थचित्तः सारमेयभयादपि भ्रमितुमप्रभवन् पञ्चास्यसंचारोचिते प्रदेशे परिभ्रमतीति स्वभावविरुद्धोपलब्धो प्रयोगः पर्यवस्यति । यथा नात्र शीतस्पर्शोऽग्नेरिति ।

**सम्प्रदायप्रकाशिनी**

ननु 'सत्यं ज्ञानमि'त्यादिवाक्यनयेनाखण्डया बुद्ध्या निर्ग्राह्यो वाक्यार्थ एव वाच्यः, वाक्यमेव वाचकमिति मन्वानान् प्रत्याह—अखण्डबुद्धीत्यादिना । सत्यज्ञानादिषु हि वाक्येषु धर्मधर्मिभावाभावादखण्डो योऽयं परब्रह्मात्मको वाक्यार्थः, स एव वाच्यः । अखण्डं वाक्यमेव वाचकम् । अनया प्रक्रियया व्यङ्ग्योऽपि विध्यादिर्वाच्य एवेत्याक्षेपः । तैरप्यविद्येत्यादि । अविद्यापदं व्यवहारदशा । योऽयमेषां समर्थनप्रयासस्तदेव ह्यविद्यापदं भवति । तत्पतितैः पदपदार्थकल्पना दुर्लङ्घ्या । विद्यापदे तु समर्थनादिसमस्तप्रपञ्चोपशमशालिनि तूष्णीम्भावोऽपि नावशिष्यत इति तेषामपि मते निर्विवादा व्यङ्ग्यसिद्धिः ।

अथ सर्वेषां ध्वनीनामनुमानेऽन्तर्भाव इत्युक्तवतो व्यक्तिविवेककृतो मतमुपन्यस्यति—वाच्यादसम्बद्धस्तावदित्यादिना । यद्यसम्बद्धः प्रतीयेत, ततः को दोष इत्यत आह—यतः कुतश्चिदित्यादि । सम्बन्धाभ्युपगमे तु व्यङ्ग्यव्यञ्जकभावः सर्वथा प्रतिबद्ध एव भवती (त्यत आ ? त्य) ह—एवञ्च सम्बन्धादित्यादि ।

प्रतिबन्धो नियतः सम्बन्धः । इत्थं व्याप्तिसिद्धावनुमानता ध्वनेः पर्यवस्यतीत्याह—व्याप्तत्वेन नियतेत्यादि । सपक्षे सत्त्वं विपक्षाद् व्यावृत्तिश्च व्याप्तत्वम् । नियतधर्मिनिष्ठत्वं पक्षधर्मता । इत्थं त्रिरूपाल्लिङ्गाद् वाच्यरूपाल्लिङ्गिनि व्यङ्ग्याभिमते यदनुमानात्मकं ज्ञानं तद्रूपः पर्यवस्यति, तवायं व्यञ्जनाव्यापार इति शेषः । तामिमामनुमानतां प्रसिद्धे ध्वनिकारोदाहरणे योजयितुमाह—तथा हि भम धम्मिअ इति ।

**भ्रम धार्मिक विस्रब्धः स श्वाद्य मारितस्तेन ।**
**गोदानदीकच्छनिकुञ्जवासिना दृप्तसिंहेन ॥**

इयं सङ्केतनिकुञ्जे कुसुमाद्यर्थिनो धार्मिकस्य भ्रमणनिवारणपरा स्वैरिण्युक्तिः । इह व्यङ्ग्यस्यानुमेयतां दर्शयितुमाह—अत्र गृह इत्यादिना । श्वा सिंहेन व्यापादित इति श्वनिवृत्त्या गृहे यद्तद् भ्रमणं विहितं तद् गोदावरोतीरे सिंहोपलब्धिमाविष्कुर्वद् भ्रमणनिषेधमनुमापयति । तत्र लिङ्गस्य व्याप्तिं दर्शयति—(यद्यदित्यादि) यद्यद् भीरुभ्रमणं तत्तद् भयकारणानिवृत्त्युपलब्ध्या प्रतिबद्धमिति यावत् । गोदावरीतीरे तु सिंह उपलभ्यत इति व्यापकविरुद्धोपलब्धिः ।

**मधुमती**

उपोद्घातसङ्गत्या ब्रह्मवादिनो मतमवतार्य व्यञ्जनां समर्थयति—अखण्डेति । बुद्धेः अखण्डत्वं नाम वाक्यार्थगोचरत्वम् । तथाच—'सत्यं ज्ञानमनन्तं ब्रह्म ।' 'एकमेवाद्वितीयं ब्रह्म ।' इत्यादिश्रुतयः वाक्यार्थविधया ब्रह्म बोधयन्ति । तेन वाक्यार्थो ब्रह्मैवार्थः । तत्प्रतिपादकत्वात् वाक्यमेव वाचकमिति का वार्ता व्यञ्जनायाः ? इत्याक्षेपनिगर्वः । समाधत्ते—तैरपीति । तत्त्वदशायां वाक्यमप्यलीकम् । अविद्यादशायां तु तैः भट्टमतानुसारिभिः उक्तयुक्त्या व्यञ्जनं अवश्यमङ्गीकार्यमेवेति भावः ।

व्यक्तिविवेककारमतं आशङ्कते—ननु वाच्यादिति। तथाच अतिप्रसङ्गः इति भावः। एवं चेति। तथाच सम्बन्धमात्रेऽप्यतिप्रसङ्गः तदवस्थ एवेति अविनाभाव एव पर्यवसानं वाच्यमिति भावः। प्रतिबन्धः प्रति—नियतो बन्ध—नियतसम्बन्धः, व्याप्तिरिति यावत्। अवश्यं नियमेन। सहृदयानां तु व्यङ्ग्यप्रतीतिर्नियतैवेति भावः। व्याप्तत्वेनेत्यनेन सपक्षसत्त्वम्। नियतेत्यनेन विपक्षव्यावृत्तत्वम् धर्मिनिष्ठत्वेनेत्यनेन पक्षधर्मत्वं च सूचितम्। तदेवोक्तं त्रिरूपादिति। तथाच अनुमानादेव तदर्थसिद्धेः न वृत्त्यन्तरकल्पनावश्यकतेति भावः।

ध्वनिकारोक्तोदाहरणे अनुमानसामग्रीमुपपादयति—अत्रेति। यद्यपि गृहाधिकरणकभ्रमणं गोदावरीतीराधिकरणकभ्रमणाभावं अनुमापयितुं न प्रभवति, व्यधिकरणत्वात्। तथापि व्याप्तिग्रहौपयिकत्वेन इदमुक्तम्। गोदावरीतीरनिकुञ्जवासिदृप्तसिंहजनितश्वनिवृत्त्या गृहभ्रमणं हि विहितम्। तत्र च गृहे श्वनिवृत्तिवत् गोदावरीतीरनिकुञ्जे सिंहसद्भावोऽपि वाक्यादेवास्मात् प्रतीयते। एवं च—गोदावरीतीरनिकुञ्जः पक्षः। दृप्तसिंहसद्भावः हेतुः। 'भ्रमधार्मिके' त्यादिना व्यतिरेकव्याप्त्युपदर्शनेन भ्रमणाभावः साध्यः इति लभ्यते। एतदेवाह—यद्यदिति। अत्र—यद्यत् भीरुभ्रमणं तत्तत् सिंहनिवृत्त्युपलब्धिपूर्वकम्' इत्यपि द्रष्टव्यम्। तेन 'शुनो बिभ्यदपि' इत्यादिग्रन्थेऽपि सङ्गच्छते। व्यापकेति। भीरुभ्रमणस्य व्यापकः भयकारणनिवृत्त्युपलम्भः, तद्विरुद्धोपब्धिः भयकारणोपलब्धिः इत्यर्थः।

## विस्तारिका

ननु 'घटमानय' इत्यखण्डवाक्यादखण्डघटकर्मकानयनप्रतीतौ शक्तेरेव प्रभुत्वेन किं लक्षणाव्यञ्जनाभ्यां तयोः खण्डशः प्रत्यायनेनानुमितेरिति वेदान्तिमतमाशङ्क्य आह—अखण्डेति।

घटत्वकर्मत्वानयनकृतीनां स्वातन्त्र्येण पृथक्तया ग्राहिणी बुद्धिः सखण्डा, तदितरा त्वखण्डा विशिष्यविषयिका। तद्ग्राह्यस्तया विषयीकृतो वाक्यार्थः। परस्परवैशिष्ट्यमेवार्थोऽभिधया प्रतिपाद्यः। वाक्यमखण्डः। ब्रह्मणः शक्तिरेव विद्याऽविद्या वा; निवृत्तिहेतुत्वे प्रथमा, प्रवृत्तिहेतुत्वे चापरा। अविद्यापदपतितैरविद्यापादग्राहिभिस्तदवलम्बनं विना व्यवहारानुपपत्तेः। सा हि 'घटमानय' इति 'घटं नय' इति शब्दाभ्यां घटस्यानयनयनयोर्व्यवहारयति। अनयोर्वाक्योरखण्डत्वेनाविशेषाद् व्यवहारवैजात्यं न स्यादिति पदपदार्थयोर्वृत्तिरङ्गीकार्या, सा च सङ्केताच्छक्तिः। मुख्यार्थबाधादिभिर्लक्षणा। तयोरसाध्ये व्यञ्जनैवेति। तैरित्यादिः सिद्धान्तप्रतीकार्थः। आवापोद्वापाभ्यामिदं पदमत्रार्थे बोधकम् नापरत्रेति पदपदार्थविभागकल्पना कर्तव्यैवेत्यावश्यकार्थः, अन्यथा व्यवहारवैजात्यानुपपत्तेः। उक्तोदाहरणादाविति। उक्तं प्रदर्शितम्। आदिपदादनुक्तपरिग्रहः। व्यङ्ग्य एव। वादिविप्रतिपत्तीर्निरस्य व्यवस्थापित इत्यर्थः।

वाक्यार्थव्यङ्ग्यार्थयोर्ज्ञाप्यज्ञापकभावो भवद्भिरुपेयत एव, तथा चानुमानेन तत्सिद्धौ किं व्यञ्जनया, वृत्तेः शब्दपरिकरत्वादनुमितावशब्दप्रमाणादिति नैयायिकाः प्रत्यवतिष्ठन्ते। वाच्यादित्यादि। असम्बद्धप्रत्यायनेऽतिप्रसङ्गमाह—यत इत्यादि। प्रतिनियतो बद्धः सम्बन्धो नियतसम्बन्ध इत्यर्थः। अवश्यं नियमेन सहृदयानां तु व्यङ्ग्यप्रतीतिर्नियतैवेत्यर्थः। व्याप्तवेन व्याप्तिवैशिष्ट्येन। नियतः साधनवन्निष्ठात्यन्ताभावाप्रतियोगित्वेन साधनवत् प्रतियोग्याद्यवच्छिन्नः साध्यस्तद्धर्मी, आश्रयः पक्षस्तन्निष्ठत्वेन पक्षधर्मत्वेनेत्यर्थः। पक्षधर्मत्वम्, सपक्षसत्त्वं विपक्षव्यावृत्तत्वं चेति रूपत्रयम्। स्वार्थनुमितावेतस्यैवोपयोगात् तेनाबाधितत्वात् सत्यप्रतिपक्षत्वयोर्नोपादानम्,

लिङ्ग्यद्धेतौ। लिङ्गिनि साध्ये साध्यविषयकं ज्ञानमित्यर्थः। अनुमानमनुमितिः, तद्रूपोऽनुमित्यात्मको व्यङ्ग्यव्यञ्जकभावविशेषणम्। व्यञ्जनया बोध्यो व्यङ्ग्यः, बोधको व्यञ्जकस्तयोर्भावः, व्यञ्जनयाऽर्थविषयकशाब्दप्रतीतिः, तत्र पक्षसत्त्वेन पक्षधर्मता। साध्यवत्तया निश्चितः सपक्षः, तत्सत्त्वेन साध्यसामानाधिकरण्यं व्याप्तिः। साध्याभाववत्तया निश्चितो विपक्षः, तद्व्यावृत्तत्वेन व्यभिचाराभावः, साध्यात्यन्ताभावद्भावित्वस्य व्यभिचारत्वात्। तेनाव्यभिचरितसाध्यसामानाधिकरण्यं व्याप्तिरिति।

अनुपदं विवेचयति—तथाहीति।

**भ्रम धार्मिकविश्वस्तः स शुनकोऽद्यमारितस्तेन।**
**गोदावरीकच्छनिकुञ्जवासिना दृप्तसिंहेन॥**

पुष्पाहरणाय निकुञ्जोपान्तमभिसारविघ्नकारिणं कञ्चन धार्मिकं प्रति भीषयितुं कस्यचिदियमुक्तिः। धार्मिकेति सोत्रासं परश्रेयो विघटकस्य तत्त्वविरहात्। विश्वस्तोऽभीतः, तेन भीरुस्वभावः स इति यद्भयाद् गृहान्न निर्यासि। नगरं प्रविश्य जन्तुकर्षणाद् दृप्तता। वासिनेति ताच्छील्यात् सततनिवासिना। तेन हेतोः पक्षवृत्तिता दर्शिता। व्युत्पन्नानां सामाजिकानां व्याप्तिमरणं प्रागेव जायते, सपक्षसत्त्वविपक्षव्यावृत्तत्वे तु व्याप्तिशरीरमेव।

गृह इत्यादि। श्वाभयहेतुस्तन्निवृत्त्या तदपगमेन विहितः। भ्रमेति प्राप्तकालविहितलिङ्गभिधेयविधिविषयः। प्रतिबन्धकाभावेन भ्रमणस्य प्राप्तवसरत्वात्। भ्रमणस्याभ्रमणानुमापकत्वम्। व्यतिरेकेण व्याप्यत्वात्। व्यतिरेकिणि व्यतिरेकव्याप्तस्तन्त्रत्वात्। एतदेव विवृणोति— यद्यदित्यादि। भयहेतुनिवृत्तिज्ञानं भीरुभ्रमणव्यापकं तद्विरुद्धात्यन्तभयहेतुसिंहोपलब्धिस्तद्व्यापकाभावस्य व्याप्याभावप्रयोजकत्वमभिधाय साध्याभावव्यापकाभावप्रतियोगित्वं व्यतिरेकित्वमभिहितम्। प्रयोगस्तु गोदावरीतीरं न भीरुभ्रमणविषयः, भयहेतुसिंहवत्त्वात्, यन्नैवं तन्नैवम्, यथा गृहमिति रूपः।

## सारबोधिनी

वेदान्तिभिरपि दशाविशेषे व्यञ्जनाङ्गीकरणीयैवेत्याह अथाखण्डबुद्धीत्यादि। अविशिष्टरत्यादिजनितयाखण्डबुद्धया निर्ग्राह्यः परब्रह्मात्मको वाक्यार्थ एवं वाच्यः अखण्डमेव वाक्यं वाचकं तदव्यङ्ग्यो वाच्य एवेति पौर्वापर्यनिकशब्दप्रकाशितं एकं वेदान्तनिष्णा" तास्तमखण्डं प्रपेदिरेत्यादि" शब्दं ज्ञानमनन्तं" मिति वाक्यमेव वाचकमिति। वाचकं एतादृशबुद्धिनिमित्तम्। यदाहुर्व्यासपादाः—"अनवयवमेव वाक्यमनाद्यविद्योपदर्शितालीकपदवर्णविभागमस्या निमित्तम्।" अस्याः बुद्धेः। केचित्तु-अखण्डबुद्धिर्महावाक्यबुद्धिस्तया निर्ग्राहयो महावाक्यार्थः स एव वाच्यः इत्याहुः। वाक्यमेव वाचकम् एतद्व्यङ्ग्योऽपीति वेदान्तैकदेशिमतं निराकरोति तैरपीति। अविद्यापदं व्यवहारमार्गमाह। अन्यथा व्युत्पन्नाव्युत्पन्नव्यवहारो न स्यात्। तत्तद्विशेषपदार्थोपस्थितिश्च न स्यात्। अविद्यापदे च तेषां भट्टनयस्तत्र व्यञ्जना स्थापितैव।

अथानुमानाद् व्यङ्ग्यप्रतीतिरिति महिमभट्टमतमाह वाच्यादिति। यद्यप्यनुमितौ नियतसम्बन्धस्यपेक्षणीयत्वम् व्यञ्जनायां तदनैयत्यम् संभावनमात्रादेव तदुपपत्तेः तथापि मया तत्रापि व्याप्तिः साधनीया इति पूर्वपक्षिणोऽभिप्रायः। तावच्छब्देन व्यक्तिवादिनोऽपि नात्र विप्रतिपत्तिरिति दर्शितम्। प्रतिबन्धः प्रतीनियतो बन्धः

सम्बन्धः नियतसम्बन्धः इत्यर्थः। अवश्यं नियमेन सहृदयानां तु व्यङ्ग्यप्रतीतिर्नियतैवेत्यर्थः। व्याप्तत्वेनेत्यनेन सपक्षसत्त्वं, नियतेत्यनेन विपक्षव्यावृत्तत्वम्। धर्मिनिष्ठत्वं, धर्मी पक्षस्तन्निष्ठत्वं तेन पक्षवृत्तित्वम्। द्वयोः समासानन्तरं त्वप्रत्यय इति रूपत्रयम्। अबाधितत्वस्य सर्वसाधारण्यान्नाभिधानम्। असत्प्रतिपक्षितत्वस्य स्वार्थानुमानेऽनुपयोगान्नाभिधानम्। लिङ्गाद्धेतोः। लिङ्गिनिसाध्ये साध्यविषयकं ज्ञानमित्यर्थः। अनुमानमनुमितिस्तद्रूपोऽनुमित्यात्मकः। इदं व्यङ्ग्यव्यञ्जकभाव इत्यस्य विशेषणम्। व्यङ्ग्यव्यञ्जकभावो व्यञ्जनयाऽर्थविषयकशाब्दप्रतीतिरित्यर्थः। तत्र व्यक्तिवादिमूर्द्धाभिषिक्तध्वन्युदाहरणे प्रथममनुमानं योजयति तथाहीत्यादि।

**भ्रम धार्मिक विश्वस्तः स शुनकोऽद्य मारितस्तेन।**
**गोदावरीनदीकच्छनिकुञ्जवासिना दृप्तसिंहेन॥**

पुष्पाहरणाय निकुञ्जे यान्तमभिसारविघ्नकारिणं कञ्चन धार्मिकं प्रति भीषयितुं कस्याश्चितदियमुक्तिः। विहितं भ्रमेति विधिविषयीभूतम्। अभ्रमणमनुमापयतीति व्याप्तिग्रहोपयिकत्वेनेति शेषः। तदेव दर्शयति यद्यदिति। व्यापकविरुद्धेति। भीरुभ्रमणस्य व्यापिका भयकारणाभावोपलब्धिस्तद्विरुद्धं भयकारणं तदुपलब्धिरित्यर्थः। तथा च व्यतिरेकव्याप्तिर्दर्शिता। व्यतिरेकिणि तस्या एव तन्त्रत्वात्। ततश्च गोदावरीतीरं भीरुभ्रमणायोग्यं सिंहवत्त्वात् यन्नैवं तन्नैवं यथा गृहमिति भ्रमणाभावानुमितिरिति भावः।

**काव्यप्रदीपः**

वेदान्तिनस्तु—"क्रियाकारकादिपुरस्कारेण शब्दानां प्रवृत्तिर्धर्मधर्मिभावमपुरस्कृत्य न संभवति। धर्मधर्मिभावश्च प्रपञ्चगोचरो वा स्याद्ग्रह्मगोचरो वा। नाद्यः। प्रपञ्चस्य बाध्यत्वात्। नान्त्यः। ब्रह्मणो धर्मशून्यत्वात्। अतः पदपदार्थविभागमन्तरेणैव 'सत्यं विज्ञानं' इत्यादिवाक्यमखण्डमेवाखण्डब्रह्मवाचकम्' इत्यातिष्ठन्ते। अतस्तन्मतानुसारेण प्रतीयमानेऽपि वाक्यस्य शक्तिरेवेत्यपि न वाच्यम्। यतो व्यवहारमार्गे तैरपि पदपदार्थकल्पनावश्यमङ्गीकर्तव्या। व्यवहारे तेषां भट्टनयस्वीकारात्। यदि च पदार्थकल्पनाविद्यादशायामपि नाङ्गीक्रियते कुतस्तर्हि व्युत्पन्नाव्युत्पन्नविभागः,। वाक्यार्थ एव वाक्यस्य संकेतग्रहमाश्रित्येति चेत्, न। वाक्यार्थस्यापूर्वत्वेनानन्त्यात्। तत्र संकेतग्रहस्याशक्यत्वात्। अविद्यामार्गतिरस्कारे च कथमखण्डयोरपि वाच्यवाचकभावः। पारमार्थिकभेदाभावात्। तस्मात्तन्मतेऽपि विध्यादिर्व्यङ्ग्य एव।

महिमभट्टास्तु—'न तावदसंबद्ध एव वाक्यात्प्रतीयते। सर्वस्मात्सर्वोपलब्धिप्रसङ्गात्। संबद्धाच्च व्यङ्ग्यव्यञ्जकभावो भवन्नानियताद्भवतीति प्रतिबद्धरूपादेव भवतीत्युपेयम्। प्रतिबद्धोऽप्यर्थो न स्वाधिकरणत्वेनाज्ञाते व्यङ्ग्यं प्रतिपादयति। सर्वत्र तत्प्रतीतिप्रसङ्गात्। एवं च व्यङ्ग्यव्यञ्जकभावोऽनुमेयानुमापकभाव एव पर्यवसन्नः। यतो व्याप्तत्वेन सकलपक्षनिष्टत्वेन च सपक्षसत्त्वविपक्षासत्त्वपक्षसत्त्वलक्षणरूपत्रयवतो लिङ्गाल्लिङ्गिज्ञानमेवानुमानम्। तदेतदुक्तमनुमानं यत्तद्रूप इति तेनानुमानेनानुमित्या रूप्यते न त्वतिरिक्तया व्यक्त्येति हि तस्यार्थः। एवमनुमानादेव व्यङ्ग्यप्रतीतिः।

तथाहि—

**'भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ तेण।**
**गोलाणईकच्छकुडङ्गवासिया दरिअसीहेण॥'**

संकेतनिकेतनीभूतं गोदावरीतीरनिकुञ्जं पुष्पावचयादिहेतोः कदाचित्संचरतो धार्मिकस्य तन्निवाराणाया-विनयवत्या इयमुक्तिः। तत्र निकुञ्जवासिसिंहकृतया श्वनिवृत्त्या गृहे भ्रमणविधिर्वाच्यः। स एव निकुञ्जभ्रमणायो-ग्यतानुमित्यै प्रभवति। यद्यद्भीरुभ्रमणं तत्तद्भयकारणनिवृत्त्युपलब्धिपूर्वकम्। निकुञ्जे च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धौ पर्यवसनाद्भ्रमणस्य व्यापिका भयकारणाभावोपलब्धिः प्रतीता। तद्विरुद्धं यद्भयकारणं तदुपलब्धेः। यथा नात्र तुषारः स्पर्शो वह्नेः। अनुमानं च—इदं गोदावरीनिकुञ्जं श्वभीरुभ्रमणायोग्यम्। सिंहवत्त्वा-दिति।

**आदर्शः**

ननु शब्दाधीनप्रतीतिको योऽर्थः स शक्यलक्ष्यान्तर एवेति व्याप्तेः 'संसर्गे व्यभिचारस्य नैयायिकमीमां-सकप्रमतयोः सम्भवेऽपि वैदान्तिकमते तदसम्भव इत्याशङ्क्ते—अखण्डेति। अत्र अथाखण्डेति क्वचित् पाठः प्रामादिक एव समाधाने प्रश्नोत्तरभावाभावात्। 'अखण्डबुद्धिः' ब्रह्मभिन्नसंसृष्टसकलपदार्थ विषयैका बुद्धिः। वाक्यार्थ एवार्थ इति, तथाच वाक्यार्थान्तर्गतः संसर्गोऽपि वाच्य एवेति न तत्र व्यभिचार इति भावः। समाधत्ते—तैरपीति, ब्रह्माद्वैतग्राहिणामेव तादृशी बुद्धिः, संसारितादशायां तु पदपदार्थविभागोऽस्तीतिं तन्मतेऽपि संसर्गे व्यभिचार एवेति भावः। 'उक्तोदाहरणं' निःशेषेत्यादि।

'व्यङ्ग्यार्थोऽनुमितिगम्य एवेति नैयायिकमतमुत्थापयितुं'वाच्यार्थे पक्षे व्यङ्ग्यार्थस्य साध्यस्य बाधनिरा-सिकां भूमिकामाह—वाच्यादसम्बद्धमिति। 'अप्रतिबन्धे'असम्बन्धे, 'अवश्यं' सर्वथा। व्याप्तत्वेनेति साध्याभा-वदद्वृत्तित्वेनेत्यर्थः। तेन विपक्षावृत्तित्वमेकं रूपं दर्शितम्। अन्यत् रूपद्वयमाह—नियतेति, साध्यवत्त्वेन नियतौ यौ धर्मिणौ पक्षसपक्षौ तन्निष्ठत्वेनेत्यर्थः। तथाच पक्षसपक्षवृत्तित्वविपक्षावृत्तित्वात्मकरूपत्रयवतो लिङ्गादित्यर्थः। 'लिङ्गिनि' पक्षे 'ज्ञानं ' साध्यस्य अनुमानम् अनुमितिः, तद्रूपः व्यङ्ग्यव्यञ्जकभाव इत्यन्वयः। तदनतिरिक्त इत्यर्थः। तदेव उदाहरणेन दर्शयति—मम धम्मिअ इति।

**भ्रम धामिक विश्वस्तः स श्वा अद्य मारितस्तेन।**
**गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन॥ इति संस्कृतम्।**

आश्रमस्थायाः कुलटाया गोदावरीसन्निहितकुञ्जरूपे सङ्केतस्थाने प्रतिदिनं पुष्पावचयेन सङ्केतभङ्गं कुर्वाणं स्वप्रेरितकुक्कुरोपद्रवेणाप्यनिवृत्तं धार्मिकं प्रति तस्या दिगान्तरे उक्तिरियम्। गोरावरीतीरे या दिनान्तरे त्वामुद्वे-जयति स श्वा अद्य सम्प्रति तेन प्रसिद्धेव गोदावरीसन्निहितकुञ्जवासिना दृप्तसिंहेन मारित इत्यन्वयः।अभ्रमणम-नुमापयतीति सिंहोपलब्धिरिति पाठे सैव कर्त्री। सिंहोपलब्धेरिति पाठे कुलटाया वाक्यमेव कर्त्तृ। अत्र च गोदावरीनदीनिकुञ्जः तद्भीरोरभ्रमणीयः तत्र तस्य सिंहोपलब्धेरिति सामाजिकानामनुमानम्। अभ्रमणञ्च उपल-ब्धिकाले बोध्यम्, तेन अन्यदा भ्रमणेऽपि न बाधः। तत्र च एतादृशशब्दजन्योपलब्धिविशेष एव हेतुः, स च

विषयतासम्बन्धेन पक्षमात्रवृत्तित्वाद् व्यतिरेकीत्यभिप्रायेण व्यतिरेकोदाहरणमाह—यद् यदिति । भीरोर्भ्रमणं यत्रेति बहुब्रीहिणा 'भीरुभ्रमणं' स्थानम्, तेन भीरोरभ्रमणरूपस्य साध्यस्य अभावेन भीरुभ्रमणेन विशिष्टं यद् यत् स्थानमित्यर्थः, तेन यद् यत् साध्याभाववदित्यर्थः । तद्भयकारणेति । भयकारणमत्र सिंहः तस्य निवृत्त्युपलब्धिः उपलब्धिनिवृत्तिः राजदन्तादिसमासात् । निवृत्तिरत्र अभाव एव, पूर्वकमित्यस्यापि विशिष्टमित्येवार्थः । तेन यद् यद् भीरुभ्रमणविशिष्टं स्थानं तत् सिंहोपलब्ध्यभावविशिष्टमित्युदाहरणार्थः । साध्याभावव्यापकाभावप्रतियोगिनं हेतुं पक्षे उपनयति—गोदावरीतीरे चेति । साध्याभावव्यापकाभावप्रतियोगित्वं हेतोर्दर्शयति—व्यापकेति । व्यापकः साध्याभावस्य हेत्वभावः, तस्य विरुद्धा प्रतियोगिनी हेतुभूता उपलब्धिः सिंहस्य पक्षेऽस्तीत्यर्थः ।

### सुधासागरः

वेदान्तिभिरपि दशाविशेषे व्यञ्जनाऽङ्गीकार्यैवेत्याह—अखण्डबुद्धीत्यादि ।

**अविशिष्टमपर्यायाऽनेकशब्दप्रकाशितम् ।**
**एकं वेदान्तनिष्णातास्तमखण्डं प्रपेदिरे ॥**

इत्यादिदिशा 'सत्यं ज्ञानमनन्तं ब्रह्म' 'एकमेवाद्वितीयं ब्रह्म' 'नेह नानास्ति किञ्चन' इत्यादि श्रुतिजनितयाऽखण्डबुद्ध्या निर्ग्राह्यः परब्रह्मात्मको वाक्यार्थ एव वाच्योऽखण्डमेव वाक्यं वाचकमेतादृशबुद्धिनिमित्तम् । यदाहुर्व्यासपादाः—'अनवयवमेव वाक्यमनाद्यविद्योपदर्शितालीकपदवर्णविभागमस्या निमित्तम्' इति । अस्याः बुद्धेः । केचित्तु अखण्डबुद्धिमहावाक्यबुद्धिस्तया निर्ग्राह्यो महावाक्यार्थः स एव वाच्य इत्याहुः तस्माद् व्यङ्ग्यो वाच्य एवेति पूर्वपक्षः । समाधत्ते—तैरपीति । अविद्यापदं व्यवहारमार्गमाह, अन्यथा व्युत्पन्नाव्युत्पन्नव्यवहारो न स्यात्, तद्विशेषपदार्थोपस्थितिश्च न स्यात् । अविद्यापदे च तेषां भट्टनयस्तत्र व्यञ्जना स्थापितैवेत्युक्तोदाहरणादौ विध्यादिर्व्यङ्ग्य एवेत्यर्थः ।

रविभट्टाचार्या अपि व्याचख्युः—अखण्डेति । बुद्धेरखण्डत्वं वाक्यार्थगोचरत्वम् । तथा चैकमेवाद्वितीयं ब्रह्मेत्यादिश्रुतयो वाक्यार्थविधया ब्रह्म बोधयन्ति । तेन वाक्यार्थो ब्रह्मैवार्थः । तत्प्रतिपादकत्वाद् वाक्यमेव वाचकमिति का वार्त्ता व्यञ्जनाया! इत्याक्षेपनिगर्वः । समाधत्ते—तैरपीति । तत्तद्दशायां वाक्यमप्यलीकम् । अविद्यादशायां तु तैर्भट्टमतानुसारिभिरुक्तयुक्त्या व्यञ्जनमवश्यमङ्गीकार्यमित्यर्थ इति ।

गोविन्दमहामहोपाध्यायैरपि व्याख्यातम्—वेदान्तिनस्तु क्रियाकारकादिपुरस्कारेण शब्दानां प्रवृत्तिर्धर्मधर्मिभावमपुरस्कृत्य न सम्भवति, धर्मधर्मिभावश्च प्रपञ्चगोचरो वा स्यात्, ब्रह्मगोचरो वा । नाद्यः, प्रपञ्चस्य बाधितत्वात् । नान्त्यः । ब्रह्मणो धर्मशून्यत्वात् । अतः पदपदार्थविभागमन्तरेणैव सत्यं ज्ञानमित्यादिवाक्यमखण्डमेवाखण्डब्रह्मवाचकमित्यातिष्ठन्ते । अतस्तन्मतानुसारेण वाक्यप्रतीयमानेऽपि वाक्यस्य शक्तिरेवेत्यपि न वाच्यम् । यतो व्यवहारमार्गे तैरपि पदपदार्थकल्पनाऽवश्यमङ्गीकर्त्तव्या । व्यवहारे तेषां भट्टनयस्वीकारात् । यदि च पदार्थकल्पनाऽविद्यादशायामपि नाङ्गीक्रियते, कुतस्तर्हि व्युत्पन्नाव्युत्पन्नव्यवहारः ? वाक्यार्थ एव वाक्यस्य सङ्केतग्रहमाश्रित्येति चेन्न, वाक्यार्थस्यापूर्वत्वेनानन्त्यात्तत्र सङ्केतग्रहस्याशक्यत्वात् । अविद्यामार्गतिरस्कारे च कथमखण्डयोरपि वाच्यवाचकभावः, पारमार्थिकभेदाभावात् । तस्मात्तन्मतेऽपि विध्यादिर्व्यङ्ग्य एवेति ।

अथानुमानाद् व्यङ्ग्यप्रतीतिरिति न्यायाचार्य—व्यक्तिविवेककारमहिमभट्टमतं निराकर्तुमाशङ्कते—ननु वाच्यादिति। यद्यप्यनुमितौ नियतसम्बन्धस्यापेक्षणीयत्वम्, व्यञ्जनायां तदनैयत्यम्, सम्भावनमात्रादपि तदुपपत्तेः, तथापि मया तत्रापि व्याप्तिः साधनीयेति पूर्वपक्षिणोऽभिप्रायः। तावच्छब्देन व्यक्तिवादिनो ध्वनिकारस्यापि नात्र विप्रतिपत्तिरिति दर्शयति। प्रतिबन्धः प्रतिनियतो बन्धः नियतसम्बन्धः इत्यर्थः। अवश्यं नियमेन सहृदयानां तु व्यङ्ग्यप्रतीतिर्नियतैवेत्यर्थः। व्याप्तत्वेनेत्यनेन सपक्षसत्त्वम्। नियतत्वं विपक्षव्यावृत्तत्वम्। धर्मिनिष्ठत्वम् धर्मी पक्षस्तन्निष्ठत्वम्, तेन पक्षवृत्तित्वम्। द्वयोः समासानन्तरं त्वप्रत्यय इति रूपत्रयम्। अबाधिततत्वस्य सर्वसाधारा-ण्यान्नाभिधानम्। असत्प्रतिपक्षिततत्वस्य स्वार्थानुमानेऽनुपोयगान्नाभिधानम्। लिङ्गाद् हेतोः। लिङ्गिनि साध्ये साध्यविषयकं ज्ञानमित्यर्थः। अनुमानमनुमितिस्तद्रूपोऽनुमित्यात्मकः। इदं च व्यङ्ग्यव्यञ्जकभाव इत्यस्य विशेष-णम्। व्यङ्ग्यव्यञ्जकभावो व्यञ्जकनार्थविषयकशाब्दप्रतीतिरित्यर्थः। तत्र व्यक्तिवादिमूर्द्धाभिषिक्तध्वन्युदाहरणे प्रथममनुमानं योजयति। तथा हीत्यादि। जघनविपुला छन्दः।

**भ्रम धार्मिक! विश्वस्तः स शुनकोऽद्य मारितस्तेन।**
**गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन॥**

इति संस्कृतम्। स्वविनयं सूचयन्ती काचिदसती पुष्पाहरणाय निकुञ्जे यान्तमभिसारविघ्नकारिणं कञ्चन धार्मिकं प्रति भीषयितुमाह—हे धार्मिकेति साक्षेपम्। परश्रेयोघातकस्य तत्त्वयोगात्। विश्वतोऽभीतस्सन् भ्रम यथेच्छं विचर, स शुनकः श्वा यद्भयाद् गृहान्न निर्यासि तेन गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेनाद्य मारितः। तेनेति प्रसिद्धिरुक्ता तेन 'मिथ्या मया नोच्यते' इति व्यज्यते।

अत्रेत्यादि। विहितं भ्रमतिविधिविषयीभूतम्। अभ्रमणमनुमापयतीति। व्याप्तिग्रहौपथिकत्वेनेति शेषः। तदेव दर्शयति—यद्यदिति। व्यापकविरुद्धेति। भीरुभ्रमणस्य व्यापिका भयकारणाभावोपलब्धिः, तद्विरुद्धं भयकारणं, तदुपलब्धिरित्यर्थः। तथा च व्यतिरेकव्याप्तिर्दर्शिता, व्यतिरेकिणि तस्या एव तन्त्रत्वात्। ततश्च गोदावरीतीरं भीरुभ्रमणायोग्यं सिंहवत्त्वात्, यन्नैवम् तन्नैवं, यथा गृहमिति भ्रमणाभावानुमितिरिति भावः। अत एवोक्तं मिश्रैः—अत्र भीरुभ्रमणवति गृहेभयकारणश्वनिवृत्त्युपलब्धिमत्त्वज्ञानात्सपक्षत्वज्ञाने विपक्षसत्त्वं झटिति व्युत्पन्नेन स्मर्यते, तत उत्तरार्द्धे न व्यापकाभावस्य पक्षधर्मताज्ञानादनुमानमिति।

---

अत्रोच्यते—भीरुरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण अन्येन चैवंभूतेन हेतुना सत्यपि भयकारणे भ्रमतीत्यनैकान्तिको हेतुः शुनो बिभ्यदपि वीरत्वेन सिंहान्न बिभेतीति विरुद्धोऽपि । गोदावरीतीरे सिंहसद्भावः प्रत्यक्षादनुमानाद्वा न निश्चितः, अपि तु वचनात् न च वचनस्य प्रामाण्यमस्ति, अर्थेनाप्रतिबन्धादित्यसिद्धश्च । तत्कथमेवं विधाद्धेतोः साध्यसिद्धिः ।

तथा निःशेषच्युतेत्यादौ गमकतया यानि चन्दनच्यवनादीन्युपात्तानि तानि कारणान्तरतोऽपि भवन्ति, अतश्चैत्रैव स्नानकार्यत्वेनोक्तानीति नोपभोगे, एव प्रतिबद्धानीत्यनैकान्तिकानि ।

व्यक्तिवादिना चाधमपदसहायानामेषां व्यञ्जकत्वमुक्तम् ।न चात्राधमत्वं प्रमाणप्रतिपन्नमिति कथमनुमानम् । एवंविधादर्थादेवंविधोऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशते, इति व्यक्तिवादिनाः पुनस्तत् अदूषणाम् ।

**इति काव्यप्रकाशे ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदनिर्णयो नाम पञ्चम उल्लासः ॥ ५ ॥**

---

**सङ्केतः**

कारणान्तरमेव दर्शयति—अतश्च अत्रैव स्नानकार्यत्वेनेति । स्नानं कारणान्तरम् । न परं चन्दनच्यवनादिकं सम्भोगादेव सम्भवति, किन्तु स्नानरूपात् कारणान्तरादपि स्यादित्यर्थः ॥

व्यक्तिवादिना ध्वनिवादिना । एषां चन्दनच्यवनादीनाम् । अधमपदसाहित्येन अव्यभिचारीणि चन्दनच्यवनादीति अनुमापकानि भविष्यन्तीत्याह—न चात्रेति । एवंविधात् निःशेषेत्यादिप्रोक्तात् । एवंविधः उपभोगादिरूपः । उपपत्त्यनपेक्षत्वेऽपीति । अनुमानादिरूपा ह्युपपत्तिः । प्रत्यक्षादिप्रमाणान्तरप्रतीतोऽर्थः अनुमानाङ्गम्, धूमवत् । काव्यसाहित्ये हि अर्थप्रतीतीनां लोकोत्तरचमत्काररूपप्रीतिविश्रान्तिरेव साध्या, न तु सत्यासत्य निरूपणा इति एतदेव उपपत्त्यनपेक्षत्वम् । अदूषणमिति । न दुष्टमित्यर्थः ।

**सङ्केतगमने दत्तां मतः सुमनसां जनः ।**
**ध्वनिर्यत्र गुणीभूतः श्रोत्रानन्दी निरूपितः ॥**

**इत्याचार्यमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते पञ्चमः उल्लासः**

## बालचित्तानुरञ्जनी

इदानीं व्यङ्ग्यानामनुमेयत्वं नास्तीति स्थलान्तरेण दर्शयन्नाह तथेति । कारणान्तरतः स्नानादिरूपकारणान्तरात् । अस्त्वेवं ततः किं तत्राह अतश्चेति । स्नानं कारणम्, तत्कार्यत्वेनोक्तानि चन्दनच्यवनादीनीति उपभोगे प्रतिबद्धानि विनाभूतानि न भवन्तीत्यनैकान्तिकानीत्यर्थः । एवं विधस्थले अनुमान प्रवर्तत इति वक्तुं व्यञ्जनवादिना उक्तं गमकत्वमाह व्यक्तीति । व्यक्तिवादिना व्यञ्जनव्यापारवादिना एषां चन्दनच्यवनादीनां व्यञ्जकत्वं गमकत्वमित्यर्थः । अस्त्वेवं कथमनुमानं नेत्यत आह न चात्रेति, प्रत्यक्षादिप्रमाणमनुमानाङ्गं धूमादिवत् । न चात्राधमत्वं प्रमाणसिद्धम् । अतो नानुमानमित्यर्थः । ननु प्रमाणप्रतिपन्नेन वस्तुना व्यञ्जनसिद्धिरपि कथं तत्राह एवंविधादिति । एवं विधान्निश्चितादनिश्चिताद्वाअर्थात् एवं विधोऽर्थः निश्चितः अनिश्चितो वार्थः उत्पत्त्यनपेक्षत्वेऽपि युक्तिशून्यत्वेऽपि व्यङ्ग्यस्य प्रतीतिमात्रपर्यवसायित्वात् सत्यासत्यनिरूपणं विनैव प्रकाशते, नानुमानमेवंविधम्, अतः शब्दव्यञ्जनव्यापारः पृथगङ्गीकर्तव्य इति भावः । तत्र प्रमाणप्रतिपन्नत्वम् ।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसरस्वतीतीर्थविरचितायां काव्यप्रकाशटीकायां पञ्चमोल्लासः ।**

## काव्यादर्शः

अत्रेति पूर्वपक्षे, उच्यत इति सिद्धान्तः । अनैकान्तिक इति सव्यभिचारः । तत्कथमिति । अनैकान्तिकविरुद्धा सिद्धा नाम हेत्वाभासा दूषणमनुमानस्य । स्नानकार्यत्वेनेति । स्नानं कारणान्तरम् ।

व्यक्तिवादिनेति व्यञ्जनऽव्यापारवादिना । चन्दनच्यवनादीनां लिङ्गानामधमपदसहायतया यत् कल्पितमनुमानं तदपि नैवेत्याह—न चात्रेति । प्रत्यक्षादिप्रमाणान्तरप्रतिपन्नो ह्यर्थोऽनुमानाङ्गं धूमवत् । उपपत्त्यनपेक्षत्वेपीति । काव्यविषये हि वाच्यव्यङ्ग्यप्रतीतानां सत्यासत्यनिरूपणं न प्रयोजकम् । न हि तेषां वाक्यानां अग्निष्टोमादिवाक्यावसत्यार्थप्रतिपादनद्वारेण प्रवर्तकत्वाय प्रामाण्यमन्विष्यते, प्रीतिमात्रपर्यवसायित्वात् । प्रीतिरिव चालौकिकचमत्काररूपा व्यङ्ग्या ।

**इति भट्टसोमेश्वरविरचिते काव्यादर्शे काव्यप्रकाशसंकेते पञ्चम उल्लासः ॥**

## विवेकः

तदित्थं ध्वनिवर्त्मव्यापकं पूर्वपक्षमुक्त्वा तत्र सिद्धान्तमाह—अत्रोच्यत इति । अत्रेति पूर्वपक्षे उच्यत इति सिद्धान्तः । इह धार्मिकेत्यप्रतिपक्षो भीरुर्वा स्याद्वीरो वा । तत्राद्ये तावद् यद्भ्रमणानुमानमाशङ्कितं तदसमीचीनं हेत्वाभासात् । तथाहि सव्यभिचारादयो हेतुलक्षणभावादहेतव एवेत्युक्तमेव । तत्र सव्यभिचारोऽनैकान्तिकः । एकोऽन्तः सपक्षः, अपरश्च विपक्षस्तदुभयधर्मगामीत्यर्थः । तथा चा(ना) यं हेतुरित्याह भीरुरपीति । प्रियानुरागेणोत्पन्नेन प्रयोजकासंभिन्नकर्तृत्वं दर्शितम् । [अन्येन] चैवम्भूतेनेति निधिलाभप्रत्याशाऽऽदिरूपेण । सत्यपीत्यादिना साध्याभाववति साधनसद्भावः प्रकटीकृतः । द्वितीये तु साध्यं विपरीतव्याप्त्या विरुद्धम् । वीरा हि सिंहव्याघ्रादिकमुपश्रुत्यमृगयाकूतूहलोत्तरलितस्तदध्यासितं प्रदेशमवश्यं परिभ्रमन्त्येव । एतच्च 'व्याघ्रादयो विभावा भयानकस्येव वीराद्भुतरौद्राणाम्' इति ग्रन्थ आश्रयभेदात् प्रतापादितमेव । पुनस्तुतिलघीयस्तया क्षुद्रकणटकादिवदपरिहार्यत्वं पौरुषाविषयत्वञ्चेति । ततो भयमिव भयं धीरेष्वपि सम्भाव्यत एवेत्याह—शुनो बिभ्यदपीति ।

अथ स्वरूपासिद्धत्वं दर्शयति गोदावरीति। तत्र सिंहसद्भावः शब्देन प्रतिपादितः। शब्दस्तु सर्वत्र नार्थाविनाभावभाजनम्, नदीतीरे पञ्च फलानीत्यादिवदनाप्तोक्तौ व्यभिचारात्। यदाहुः 'आप्तोपदेशः शब्द' इति (न्या. सू. १/१/७)। 'आप्तः खलु साक्षात्कृतधर्मा यथाप्रमितस्यार्थस्य विचिख्यापयिषया प्रवृत्त उपदेष्टा करणपाटववान्, तस्योपदेशः परप्रयोजनवद्वचनमात्रं शब्दः प्रमाण' मिति (वा. भा.) तत्र च वाच्यगतं ततोऽधिकं सत्यत्वमनुमानान्निश्चीयत इति वाच्यस्य प्रतीतिर्नानुमानिकीत्युक्तमेव। अतएव प्राभाकराः श्रूयमाणेषु लौकिकवाक्येषु व्यभिचारित्वशङ्कानिरासार्थं वाक्यार्थविषयं वक्तृज्ञानमर्थसातत्यमिति निर्णीतवन्तः। न चात्र तथा, विप्रलिप्साऽऽदेः सम्भवात्। अतएव प्रसिद्धैतद्व्यापारानृक्षप्रभृतीन् परित्यज्य मत्तेभकुम्भपाटनैकरसिकदृप्तकेसरिणः कौलेयकवधाभियानलक्षणमनौचित्यमपि न सम्भावनीयम्। तदेतदाह न च वचनस्येति। तदित्थं वैलक्ष्यक्षतिकटाक्षितोऽयं हेतुरित्याह तत्कथमिति। भयानकरसविप्रकृते चात्र निषेधावगतिः, धार्मिकस्य भीरुप्रकृतित्वनियमावगममन्तरेणैकान्ततो निषेधगत्याऽभावात्।

केवलार्थसामर्थ्यं निषेधे निमित्तमग्रे नायमर्थशक्तिमूलानुरणनरूपस्य वस्तुध्वनेर्विषय इति भट्टनायकः। अत्राप्युच्यते—भयानकरसावेशोऽयं वक्तुर्वा स्यात् प्रतिपत्तुर्वा? तत्र न तावद्वक्तुः, भयकारणसद्भावविवक्षामात्रेण तस्य भ्रमोत्पत्तेरेवासम्भावात्। प्रतिपत्तुस्तु रसावेशो रसाभिव्यक्त्यैव। रसस्य च वाच्यत्वं तेनापि नाभ्युपगतं किन्तु व्यङ्ग्यत्वमेव। किञ्च प्रतिपत्तुरपि रसावेशो न नियतः। न ह्यसौ नियमेन भीरुधार्मिकसब्रह्मचारिहृदय इत्युक्तमेव। अथ तद्विशेषेऽपि सहकारि कल्प्यते तर्हि वक्तृप्रतिपत्तिप्रतिभाऽनुप्राणितो ध्वननव्यापारः किं न सह्यते? किञ्च वस्तुध्वनिं दूषयता रसध्वनिस्तदनुग्राहकः समर्थ्यत इति ध्वनेरेवैतत् साम्राज्यम् (धा. आ. लो. १/४)। वस्तुतस्तु नात्र भयानकरसानुवेधः किन्तु कुरीत्या सम्भोगाभिलाषसङ्केतस्थानोदितविशिष्टकाव्यसंवलनोचितशृङ्गाररसानुवेधः सहृदयहृदयावर्जक इत्यास्तामेतत्।

निःशेषेत्यादा तु हेतोरनैकान्तिकत्वं स्फुटमेवेत्याह तथेति। तर्हि व्यञ्जकत्वमेषां कथमिति चेदाह व्यक्तिवादिना चेति। व्यक्तिर्व्यञ्जनव्यापारः। अधमपदेन नीचवृत्तिना।' तथाचोत्तमसंसर्गविशिष्टवतो नीचसंसर्गः तेन त्वयि सद्भृत्या (सदूत्या) मनुरज्यत इति। अधमपदसहकृतेन वापीस्नानतुल्योगक्षेमरत चिह्नानां चन्दनच्यवनादीनां व्यञ्जकत्वम्। नन्वेवमधमत्वमेव गमकमस्त्विति चेदत्राह—न चेति। नन्वेवमुपपादकधर्मासम्बन्धात् कथं व्यङ्ग्यस्य प्रतिपत्तिरिति चेदत्राह—एवंविधादिति। प्रतीतिमात्रसारं हि काव्यम्। न ह्यत्राग्निष्टोमादिवाक्यवत् सत्यार्थ प्रतिपादनद्वारेण प्रवर्तकताप्रामाण्यमन्विष्यते, प्रीतिमात्रपर्यवसायित्वात्। प्रीति(ते)रेव चालौकिकचमत्काररूपाया व्युत्पत्त्यङ्गत्वात्। अतो भ्रमणस्यासत्यत्वनिरूपणमनुपयुक्तमेव, तावतैव विन[ने]येषु विधिनिषेधव्युत्पत्तिसिद्धेः। प्रमाणपरीक्षा ह्यत्र प्रत्युत कर्तुरहृदयत्वं शुष्कतर्ककर्कशहृदयत्वञ्च प्रकाशयति, निरुपयोगिग्रहणात् (ध्व. आ. लो. २०३ पृ.)। एतच्च रसाभासादिप्रस्तावे प्रागप्युक्तमेव। अनुमानपक्षे त्वर्थान्तरप्रतिपत्तिर्नोपपत्तिमन्तरेण पटीयस्तया जातु जाघटितीत्युक्तमेव। एवं विधस्यापि ध्वनेश्चेदत्रानन्तर्भावस्तर्हि सहृदयसंवादापरपर्यायसहृदयत्वपरवशीकृतत्वेनानुमानस्मरणादिसरणिमनारुह्य तन्मयीभवनोचितचित्तवृत्तिचर्वणाप्राणतया वाच्यैर्विभावादिभिः सहैव यो रसः प्रतीयते तत्र लौकिककार्यकारणानुमानदिसंस्कृतहृदयानां तटस्थानां प्रतीतिरेव नास्तीति धूमावगमानन्तराग्निस्मरणवद्विभावादिप्रतिपत्त्यनन्तरं रसादिप्रतिपत्तिरिति 'अशक्तास्तत्पदं गन्तुं ते नो निन्दां प्रच-

किर' इति न्यायादनुमानखलीकारपात्रतामस्मा[स्व] भिदधाना: प्रतीतिपरामर्शबाह्यत्वादनादरणीया एव। एवञ्च लिङ्गलिङ्गिभावादपरोऽस्त्येव व्यङ्ग्यव्यञ्जकभाव इति स्थितम्॥

**इति महासान्धिविग्रहिकश्रीश्रीधरविरचिते काव्यप्रकाशविवेके पञ्चम उल्लासः॥५॥**

## दीपिका

एवं व्यापकं पूर्वपक्षमुक्त्वा तदुद्धारमाह—अत्रोच्यत इति। सहृदयानामेवंविधकाव्यपरिशीलनादेवंविधा प्रतीतिनुमानिकी धार्मिकस्य वा पुंश्चलीवचनजन्या? तत्र द्वितीयपक्षे नास्माकं भूयसी क्षतिः। प्रथमे तु धार्म्मिकी भीरुप्रकृतिर्वा स्याद्वीरप्रकृतिर्वा। प्रथमे भीरुरपीति निर्दशेन ज्ञेया। प्रियेति स्वारसिकताकथनपरम्। अन्येन चैवंभूतेन भयापहस्तकेन हेतुना निधिलाभप्रत्याशादिना। सत्यपीति व्याप्तिभङ्गप्रकटनम्। अनैकान्तिकः साध्यव्यभिचारी हेतुस्तल्लक्षणैकदेशयुक्तः। प्रभुनिदेशादभाववत्तया विशेषणीयमिति? न, तदनुपादनात्। द्वितीये शुनो विभ्यदपीति स्पर्शनादिशङ्कयेत्यर्थः। विरुद्धः साध्याभावव्याप्तः।

सम्प्रति प्रतिपादकभावसाधाण्येन दूषणमाह—गोदावरीति। अप्रतिसम्बन्धात् प्रतिनियतस्य निश्चितस्य पारमार्थिकस्य वा सम्बन्धस्याभावात्। अप्रतिसम्बन्धादिति पाठे प्रतिनियतो बन्धः सम्बन्ध इति स एवार्थः। असिद्धः सन्दिग्धसिद्धः स्वरूपासिद्धो वा सर्वमेव साधारण्येन योज्यम्। हेतुदूषणमात्रे किं भवतीत्याहु—तत् कथमिति। एवंविधादपारमार्थिकात्। साध्यस्य प्रत्यायस्य सिद्धिरनुमितिः। अनुमित्याभासवादे तूक्तमेव।

युक्तिजातमुदाहरणान्तरेपि यथायोगमित्याह—तथेति। गमकतया कामुकससमीपगमनाबाधकतया उक्तम्।

अतश्चेति च पदार्थेऽनैकान्तिकतामुपपाद्यासिद्धतामाह—व्यक्तिवादिनेति। व्यञ्जनव्यापारपार्थक्यस्थापनाय विवदमानेनेत्यर्थः. अधमेतिपदं वाचकमस्येत्यधमपदेऽर्थः, अन्यथोत्तरग्रन्थासङ्गतेः। प्रमाणं निश्चितं प्रमात्वज्ञानम्। कथमनुमानमिति। भवद्भिरपि व्यञ्जनसामग्री सर्वैवानुमितिसामग्रीत्वेनेष्यते। तदुक्तम्—

> **"अर्थान्तराभिव्यक्तो या सामग्रीष्टा निबन्धनम्।**
> **सैवानुमितिपक्षे नो गमकत्वेन सम्मता॥" इति।**

ततश्चाधमताऽपि हेतुपक्षनिःक्षिप्ता वाच्या। सा च सन्दिग्धासिद्धा स्वरूपासिद्धा वा कथमनुमितिजनका स्यात्? ततश्चैकदेशसिद्ध्या समुदितोऽपि हेतुरसिद्ध इत्यर्थः।

यद्वा अनुमानमनुमितिः, कथं तदिति योजना।

नन्वेवमनुमितिप्रतिबन्धकमूलक एव व्यङ्ग्यव्यञ्जकभावः स्यादिति चेत्? कथमिवेत्याह—एवंविधादिति। उपपत्त्यनपेक्षत्वेऽपि व्याप्तिपक्षधर्मताप्रतिसन्धान विरहेऽपि। अदूषणं स्वपक्षस्थापनमेवेत्यर्थः। न चैवमतिप्रसङ्गः, प्रतीतेरनन्यथाऽनुपपत्तादवेव व्यक्तिविकल्पनात्। एवंविधेपि व्यङ्ग्ये यद्यनुमेयत्वं दुर्घटं तदानीमलौकिकरसादौ व्याप्तिग्रहादेर्दूरत एवापसृतत्वात्तत्सम्भवमात्रमपि नोदेतुमर्हतीति निर्मला निखिलैव ध्वनिप्रक्रिया।

**इति काव्यप्रकाशदीपिकायां पञ्चम उल्लासः॥**

### दर्पणः

एतदेवाह अत्रेति। यः खलु भीरुः शुनोऽपि सद्भावस्थाने भ्रमितुमशक्तः स कथं सिंहोपलब्धिस्थाने भ्रमिष्यतीत्यर्थः। यद्भीरुभ्रमणमिति। अयमर्थः। धार्मिकस्य भ्रमणं भयकारणनिवृत्त्युपलब्धिपूर्वकम् भीरुभ्रमणत्वात् सम्प्रतिपन्नवत् इत्यन्वय[इत्यनु?] माने यद्व्यापकं भयकारणं वृत्त्युपलब्धिपूर्वकम्[?]तस्य च विरुद्धं भयकारणनिवृत्त्युपलब्धिपूर्वकम्। तस्योपलब्धिः प्रतीतिः। सा च प्रकृते सिंहोपलब्धिः। तथा चात्र धार्मिकस्याभ्रमणमनुमितमिति भावः। एवं ध्वनिकारोदाहृतैतद्व्यङ्ग्योदाहरणरीत्या सर्वत्रैव विवादध्यासितस्य व्यङ्ग्यस्यानुमेयत्वमेवेति महिमभट्टसिद्धान्तमाह अत्रोच्यत इति। अन्येन धनादिप्रयोगादिना सत्यपीति व्याप्त्यभावदर्शनम्। अनैकान्तिकः साध्यव्यभिचारी। नास्य पुनर्हेतुत्वमिति भावः। शुन इत्यादि। यः खलु शुनः स्पर्शशङ्कया शुनो बिभेति सिंहसद्भावस्थानं प्रत्युत मृगयादिकुतूहलतया गच्छतीति दर्शनाद्विरुद्धः भ्रमणरूपविरुद्धसाध्यविरुद्धसाधनात्। दूषणान्तरमाह वचनस्येत्यादि। पुंश्चल्यादीनामिति शेषः। अप्रतिबन्धात् प्रतिनियतो निश्चितः। असिद्धः संदिग्धासिद्धः स्वरूपासिद्धो वा। उपसंहरति तथेति। इदमेव युक्तिजालमुदाहरणान्तरे दर्शनं दृढयति। गमकतया कामुकसमीपगमनबोधकतया। व्यक्तिवादिनेति। व्यञ्जनव्यापारस्थापतार्थमुद्यतेत्यर्थः। न प्रमाणप्रतिपन्नं संदिग्धासिद्धादसिद्धत्वात्। एवं व्यञ्जनव्यापारसामग्र्या नानुमानसामग्रीत्वमिति। अर्थान्तराभिव्यक्तौ वः सामग्रीष्ठा तवघनं सैवार्थमिति पक्षे नो गमकत्वेन सम्मतेति[?] महिमभट्टोक्तमनुमानत्वं निरस्तमिति भावः। नन्वेवमपि यत्प्रतिबन्धमूलभाव एव व्यङ्ग्यव्यञ्जकभावः स्यादिति चेत् एवमेवेत्याह एवविधादिति। उपपत्त्यपेक्षत्वेऽपि व्याप्त्यादिप्रतिबन्धनाभावेऽपीति। न चैवमतिप्रसङ्गः। प्रतीतेरन्यथोपपत्तावेकव्यक्तिकल्पना स्यादिति काव्यपुरुषावतारस्य निखिलशास्त्रवेदिनः श्रीमदानन्दवर्धनाचार्यस्य पृथग् व्यञ्जनव्यापारस्थापनमिति सर्वमवदातम्।

**इति महामात्य[पात्र?] श्रीविश्वनाथकविराजकृतौ काव्यप्रकाशदर्पणे पञ्चमोल्लासः।**

### साहित्यचूडामणिः

तदेतत् खण्डयति—अत्रोच्यत इति।

दृष्टादृष्टप्रत्यवायपरिहारार्थमुक्तं—प्रभोर्गुरोर्वेति। अन्येन मदोन्मादादिना। भयकारणसद्भावेऽपि भ्रमतीत्यनैकान्तिकः।

पक्षत्रयवृत्तित्वाद् विरुद्धोऽपीत्याह—श्वत इति। विपक्षव्याप्तो विरुद्धः।

असिद्धोऽपीत्याह गोदावरीति। विदग्धया कयाचित् स्वोत्प्रेक्षामात्रेणोपाक्षिप्तत्वात् न प्रत्यक्षेण हर्यक्षसिद्धिः। अनुमानेन चेदनवस्था। पारिशेष्यादेतद्वचनादेव। न च तस्यास्ति प्रामाण्यं सौगततीर्थावगाहनादर्थेनाप्रतिबन्धादनाप्तवाक्यत्वादित्यप्यूह्यम्।

निगमयति—तत्कथमिति।

एतन्निजोदाहरणे योजयति—निश्शेषेति। चन्दनच्यवनादीनि लिङ्गान्यनैकान्तिकानि कारणान्तरतोऽपि भावाद् यतोऽत्र स्नानकारणत्वेनाप्युक्तानीति।

इदमत्रावधातव्यं—'न पुनरयं परमार्थो यद् व्यञ्जकत्वं लिङ्गत्वमेति । द्विविधो हि विषयः शब्दानामनुमेयः प्रतिपाद्यश्च । तत्र विवक्षालक्षणोऽनुमेयः । विवक्षा च शब्दस्य स्वरूपप्रकाशनेच्छा शब्देनार्थप्रकाशनेच्छा च । आद्या न शब्दव्यवहाराङ्गम् । सा हि प्राणित्वमात्रप्रतिपत्तिफला । द्वितीया तु शब्दविशेषावधारणान्ववसिता व्यवहितापि शाब्दे व्यवहारे कारणमिति द्वे अप्यनुमेयो विषयः शब्दानाम् । यः पुनः प्रतिपाद्यरूपः प्रयोक्तुरर्थप्रतिपादनसमीहाविषयीकृतोऽर्थः सोऽपि द्विविधः वाच्यो व्यङ्ग्यश्च । द्विविधाऽप्ययं न लिङ्गितया स्वरूपेण प्रकाशते । तथात्वे शब्दार्थचिन्तायां सम्यङ्मिथ्यादिविवादा एव न प्रवर्तेरन् धूमादिलिङ्गान्वितानुमेयान्तरवत् । तस्माद् वक्त्रभिप्राय एव लिङ्गतया शब्दानां व्यापारः, नान्यत्र । तन्मूलाच्च भ्रमादन्यत्रापि तद्योजनाप्रयासः । ततोऽपि न व्यञ्जकत्वं लिङ्गत्वमालोकादिष्वन्यथा दृष्टत्वात् । तस्माल्लिङ्गिप्रतीतिरिति न युक्तं वक्तुम् । यदाहोद्भः—'नचानुमितमात्रतया स्थितो भावः काव्यस्य जीवितम् । अपि तु साधारण्येन प्रतिपन्नो रसनाव्यापारगोचरः । एवं रसेऽप्यवगन्तव्यम् । तत एव व्यङ्ग्या रसभावतदाभासतत्प्रशमाः काव्यतत्त्वविद्भिरभिधीयन्त' इति । किञ्चानुमानमपि व्यङ्ग्यव्यञ्जकभाव एवेत्युपनिषत् । तदुक्तंतत्रैव 'तस्यैवानुभूतपूर्वस्य संस्कारात्मनान्तर्विपरिवर्तिनः कुतश्चिद्व्यभिचारिणोऽर्थान्तरात् तत्सदृशाद्वा तत्प्रतिपादकाच्छब्दाद्वा संस्कारप्रबोधमात्रमि—"[तृतीये—]-ति अलमत्याटोपेन । ननु निश्शेषच्युतेत्यादौ यानि चन्दनच्यवनादीनि लिङ्गतयाभिमतानि तेषां स्नानकार्यतयाप्युपादानाद् यदनैकान्तिकत्वमुक्तं तद् व्यञ्जनेऽपि समानमित्याशङ्क्याह—व्यक्तीति । वल्लभस्याधम्यमुपभोग एव पर्यवस्येति न स्नाने । नन्वेवमधमपदसहायानामेव तेषामनुमापकत्वमस्तीति चेत् तत्राह—नचेति । स्वयमप्रमितस्य कथमन्यप्रमापकत्वम् । ननु पुनरपि समः समाधिरिति चेत् तत्राह—एवंविधादिति । उपपत्त्यनपेक्षत्वेऽपि प्रमितत्वनिबन्धनपराङ्मुखत्वे सत्यपि प्रतीतिएवंविधादिति । उपपत्त्यनपेक्षत्वेऽपि प्रमितत्वनिबन्धनपराङ्मुखत्वे सत्यपि प्रतीतिमात्रपरमार्थत्वात् काव्यव्यवहारस्य । यदुक्तं[व्यक्ति वि. पृ. ७६-७९] 'काव्यविषये च वाच्यव्यङ्ग्यप्रतीतीनां सत्यासत्यत्वनिरूपणमप्रयोजकमेवेति । तत्र प्रमाणान्तरपरीक्षोपहासायैव सम्पद्यत इति तावतापि तस्य चमत्कारौपयिकत्वम् । यदुक्तं—

**मणिप्रदीपप्रभयोर्मणिबुद्ध्याभिधावतोः ।**
**मिथ्याज्ञानाविशेषेऽपि विशेषोऽर्थक्रियां प्रति ॥ प्र० वा० २.५७ ॥ इति ।**

न पुनरेवं युष्मत्पक्षे प्रमाविशेषोऽप्यनुमा, तत्करणमनुमानं, प्रमात्वं च समीचीनस्यानुभवस्य, समीचीनता च संशयविपर्ययव्युदासाधीनेति । व्यक्तिवादिनस्तु तदाधम्यस्य प्रमाणप्रतिपन्नत्वम् । अदूषणमेव दूषणमेव न स्यात् प्रत्युत भूषणमेव स्यात् । अयमेव हि लोकतः काव्यस्यातिशयः । यदुक्तं—किमत्र परचित्तवृत्तिमात्रे प्रतिपत्तिरेव रसप्रतिपत्तिरभिमता भवतः । नैव भ्रमितव्यम् । एवं हि लोकगतचित्तवृत्त्यनुमानमात्रमिति । अपाकृतं चैतत् सामान्येन वैयाकरणैः । यथा—

**अवस्थादेशकालानां भेदाद् भिन्नासु शक्तिषु ।**
**भावानामनुमानेन प्रसिद्धिरतिदुर्लभा ॥ [वा० प० १.३२] ॥**

**वस्तुस्पर्शादिवान्धेन विषमे पथि धावता ।**
**अनुमानप्रधानेन विनिपातो न दुर्लभः ॥ [वा० प० १.४२]**

इत्यागमस्यैव पर्यन्ततः प्रामाण्याभिषेकौचित्यम्। प्रत्यक्षादिवदनुमानस्यापि क्वाचित्क एवोपयोग इति तात्पर्यम्। अतश्चेदमाक्रम्यते प्रतिपतॄन् प्रति सा प्रतिभा नानुमीयमाना अपितु तत्तदावेशेन भासमाना। यदाह— 'नायकस्य कवेः श्रोतुः समानोऽनुभवः स्मृतः' इति। एतेन वक्रोक्तिर्व्याख्याता। येन ध्वनिवक्रोक्त्योर्नात्यन्तविशेषः यतस्त एव भेदास्तान्येवोदाहरणानि। यथोक्तं—

**प्रसिद्धमार्गमुत्सृज्य यत्र वैचित्र्यसिद्धये।**
**अन्यथैवोच्यते सोऽर्थः सा वक्रोक्तिरुदाहृता॥ व्य० वि० १॥ इति।**

तेन ध्वनिवदेषापि वक्रोक्तिरानुमानिकीति व्यक्तिविवेकखण्डः खण्डितः। किं च—

ध्वनेरभावो भाक्तत्वमनिर्वचनीयत्वं चेति शृङ्खलाक्रमेण त्रयो विकल्पाः। यदुक्तं वाच्यादन्यद् व्यङ्ग्यं नास्ति, सदपि वा तद् भाक्तम्, अर्थसामर्थ्याक्षिप्तत्वात्, तदनाक्षिप्तमपि वा वक्तुमशक्यमिति। तेषु प्राच्या विपर्यस्ताः, मध्यमास्तद्रूपं जानाना अपि सन्देहेन निह्नुवते, अन्तिमास्तु अनिह्नुवाना अपि लक्षयितुं न क्षमन्त इति यथोत्तरमेते भव्यबुद्धयः। पुनरभावविकल्पस्य प्राथमिकस्य तिस्रः कल्पनाः। यथा नान्यो ध्वनिरस्ति योऽस्माभिर्न गणित इत्येका, यो वा न गणितः स न शोभाकारीति द्वितीया, अथ शोभाकारी तदस्मदनुक्रान्ते गुणालंकारादावन्तः पततीति तृतीये'-ति। अयमपि य आक्षेपप्रकारस्तस्थापि तन्त्रयुक्तिभिः प्रतिक्षेपः परीक्षणीयो विचक्षणैरिति सिद्धम्।

**अमत्सराणां गुणवत्सलानां गोष्ठीविनोदे महतां कवीनाम्।**
**तर्कैर्विचित्रैः कतिचिद् विदग्धः सम्यग् ध्वनिं साधयितुं क्षमन्ते॥**
**जयति प्रतिभोल्लेखरूपिकाशिल्पशालिनी।**
**चराचरचरित्रस्य चित्रभित्तिः सरस्वती॥**

**इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां पञ्चम उल्लासः॥ ५॥**

**सम्प्रदायप्रकाशिनी**

तदेतद् दूषयति—अत्रोच्यते भीरुरपीत्यादिना। यद्यद् भीरुभ्रमणं तत्तद भयकारणनिवृत्त्युपलब्धिपूर्वकमिति यदुक्तं तन्नास्ति। यतो भीरुरपि भयकारणे सत्यपि च गुरुनिदेशादिना भ्रमति। अतो हेतुः पक्षत्रयवर्तनादनैकान्तिः। विरोधमुद्भावयति—श्वतो बिभ्यदपीति। न हि यः श्वतो बिभेति च नियमेन भीरुः, मृगेन्द्रमृगयोरपि क्वचिच्छुनो भयदर्शनात्। अतो हेतुर्विरुद्धः। असिद्धमुद्भावयति—गोदावरीतीर इत्यादि। येयं धार्मिकस्य गोदावरीतीरे सिंहोपलब्धिः, न हि सा प्रत्यक्षतोऽनुमानतो वा सिद्धा, अपि त्वस्मादेव स्वैरिणीवचनात्। न ह्यस्य प्रामाण्यमस्ति, प्रतारणपरत्वेनार्थाप्रतिबन्धात्। अतो हेतुरसिद्धश्च। दोषाणामचलत्वान्निरुत्तरं महिमानमपहसति—तत् कथमित्यादि। यथैव ध्वनिकारोदाहरणे निराकृतोऽनुमानपक्षस्तथा स्योदाहरणेऽपि निराकर्तुमाह—तथा निश्शेषच्युतेत्यादाविति। गमकतया उपभोगलिङ्गतया। कारणान्तरतोऽपीति। नह्युपभोगव्यतिरिक्तं चन्दनच्यवनादेः कारणं नास्तीति प्रतीत्यपलापोऽपि दुश्शक इत्यभिप्रेत्याह—अतश्चात्रैवेति। अतोऽप्रतिबन्धाद् अनेकान्तिकमित्याह—नोपभोग एवेति। इत्थं पराजितस्य प्रतिबन्धपरिग्रहमपि प्रत्याचष्टे—व्यक्तिवादिना चेत्या-

दिना। अधमपदेति। सर्वथा तावदर्थवता भाव्यमधमंपदेन। तेन स्वार्थसहितेन कृतसाहाय्यानां चन्दनच्यवनादीनामप्रतिबन्धेऽपि व्यञ्जकत्वं युक्तमुक्तं व्यक्तिवादिना। तर्ह्यधमपदसहकृतानां लिङ्गत्त्वेनानुमानं किं न स्यादित्यत आह—न चात्रधमत्वमित्यादि। अधमत्वस्य प्रमाणतोऽनवधारणाद् नानुमानमुपपद्यते। तर्ह्यधर्मत्वस्य निष्प्रमाणकत्वलक्षणो दोषस्त्वामपि किं नीपमृद्नीयादित्यत आह—एवंविधादर्थादित्यादिना। एवंविधाद् अधमपदसहकृतात् चन्दनच्यवनादिरूपाद् व्यञ्जकादर्थाद् एवंविधः उपभोगरूपो व्यङ्ग्योऽर्थ उपपत्त्यनपेक्षत्वेऽपि प्रकाशते, किमिदमधमत्वं प्रमाणिकमुताप्रामाणिकमित्युपपत्तिनैरपेक्ष्येण प्रतीयते। न हि निश्शेषच्युते'त्यतः काव्यरूपाद् भवन्ती कामुकोपभोगरूपार्थान्तरप्रतीतिः कामुकस्य दासीप्रधर्षकत्वमधमत्वमुपपन्नं व्यपेक्ष्य जायते। अतः उपपत्त्यनुपपत्तिचिन्ता तवानुमाने लक्षणशरीरं, व्यञ्जके तु लक्षणकोटिरेव न भवति। अतस्तवैतदनुपपन्नत्वदूषणमित्येतदुक्तप्रायमेवेत्यभिप्रायेणाह—व्यक्तिवादिनः पुनस्तददूषणमिति ॥

**सम्यगत्र प्रमेयस्य हृदयोद्घाटनं कृतम्।**
**प्रेक्षावन्तः परीक्षन्तां प्रीत्या वा स्पर्धयाथवा ॥**

**इति संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वज-पैशाचीपरमेश्वरापभ्रंशराजहंसालङ्कारिकचक्रवर्त्तिध्वनिप्रस्थानपरमाचार्य काव्य-मीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरमयोगीश्वर श्रीमत्त्रि-भुवनविद्याचक्रवर्त्तिवंशावतंसमहाकविश्रीविद्याचक्रवर्त्तिकृतौ सम्प्रदायप्रकाशिन्यां काव्यप्रकाशबृहट्टीकायां पञ्चम उल्लासः।**

## मधुमती

दूषयति—अत्रोच्यत इति। तत्रादौ व्याप्तिविघटकं व्यभिचारमुद्भावयति—भीरुरपीति। अन्येन निध्यादिलाभनिश्चयेन। उत्कटभ्रमणहेतुबर्हिभूतत्वं वा उपाधिः। औत्कट्यनियामकाश्च गुरुप्रभुनियोगादयः। इदं च प्रथमानुमाने दूषणम्। द्वितीयानुमाने त्वाह—शुन इति। अनैकान्तिको हेतुः व्यभिचरितः। 'व्यभिचरितो व्यतिरेकी विरुद्धः' इति मतेन इदमुक्तमिति ध्येयम्। 'यदि च—धार्मिकत्वेन वीरपुरुष एव विवक्षितः, तत्र च गोदानिकुञ्जः वीरभ्रमणयोग्यः, सिंहाक्रान्तत्वादिति प्रयुज्यते, तदा हेतोः साध्याभावव्याप्तत्वात् विरुद्धत्वम्,' इति पितृचरणाः। यदि तु—'गोदाकच्छनिकुञ्जभ्रमणं अनिष्टसाधनम्, भयकारणवद्देशाधिकरणभ्रमणत्वात्' इति प्रयुज्यते—तदा उक्तदूषणाभावात् दूषणान्तरमाह—गोदावरीति। अर्थेनाप्रतिबन्धात्। वक्तुराप्तत्वनिश्चयावश्यंभावाभावादित्यर्थः। असिद्धः सन्दिग्धासिद्धः। तथाच हेत्वनिश्चयात् नानुमितिरिति भावः।

ध्वनिकारोक्तोदाहरणे अनुमानं निरस्य स्वोक्तोदाहरणेऽपि तन्निरस्यति—तथेति। प्रतिबद्धानि व्याप्तानि।

नन्वेवमनैकान्तिकादौ सति व्यक्तिवादिनामपि वा कथं अभिमतसिद्धिः? इत्यत आह—व्यक्तिवादिनेति।

अयमभिसन्धिः—यथा ह्यनुमानं व्याप्त्यादिनिश्चयमपेक्षते, न तथा व्यञ्जनाऽपि। न चातिप्रसङ्गः। वक्तादिवैशिष्ट्यावगमस्य नियामकत्वात्। तस्य च अनुमानवादिनऽपि स्वीकार्यत्वात्। लिङ्गस्य च व्याप्त्यादिस्मृतिविलम्बेन विलम्बितत्वात्। नापि लिङ्गनिश्चय इव अत्रापि तदर्थनिश्चयः प्रयोजकः। मानाभावात्। ज्ञानमात्रं तु भवत्येवेति निर्विवादम्। तदिदमुक्तम्—उपपत्त्यनपेक्षत्वेऽपीति। व्याप्तिपक्षधर्मत्वप्रतिसन्धानाविषयत्वेऽपीत्यर्थः। तत्—अनैकान्तिकत्वादि।

यत्तु—तदर्थसन्देहादौ व्यङ्ग्यार्थप्रतीतेरेव नेति, तत् स्वदर्शनश्रद्धया अनुभवकलहे एव पर्यवसन्नमिति भाव्यम्।

**इति श्रीरत्नपाणिसूनुरविकविविरचितायां काव्यप्रकाशटीकायां मधुमत्यां पञ्चमः उल्लासः**

## विस्तारिका

अत्रानुमितिर्धार्मिकस्य सामाजिकानां वा? आद्ये न क्षतिरित्येव दूषयति—उच्यत इति। तत्रादौ व्याप्तिविघटकं व्यभिचारमुद्भावयति—भीरुरपि गुरोरित्यादि। अन्येन धर्नलिप्सया। अनैकान्तिको व्यभिचारी। साधनसमानाधिकरणात्यन्ताभावाप्रतियोगित्वस्य विशेषणस्य विघटनमभिधाय विशेष्यस्य साध्यसामानाधिकरणस्य विघटनमाह—शुन इत्यादि। बिभ्यत् स्पर्शेन पापजननात्। पापजनके तद्वधेऽपि पौरुषानास्पदत्वात्। सिंहादभीतौ हेतुमाह—वीरत्वेनेति। धार्मिकस्य भयानास्पदत्वात्। स्त्रीनीचानामेव तदाश्रयत्वात्। यत्र यत्र सिंहप्रसङ्गः, तत्र तत्रैव तद्वधाय गच्छतीति सिंहवत्त्वभीरुभ्रमणाभावयोर्न समानाधिकरण्यमित्याह—विरुद्धोऽपीति। भीरुभ्रमणेन साध्याभावेन व्याप्तवात् साध्याभावव्याप्यस्य विरुद्धत्वादिति।

अन्ये तु यथाश्रुतं ग्रन्थं व्याख्यातुमशक्नुवाना व्यतिरेकी व्यभिचारी हेतुर्विरुद्ध इति मतेनोक्तमित्याहुः, तन्न; यथाश्रुतं व्याख्यातव्यत्वात्; एकव्यभिचारप्रदर्शनायाप्रभुत्वेनापरव्यभिचाराभिधानानौचित्याच्च।

पक्षधर्मताविघटनमाह—गोदावरीतीर इत्यादि।

न चेति। प्रामाण्यनियतमित्यर्थः। अप्रतिबन्धादव्याप्तिः शब्देषु प्रामाण्यसन्देहादर्थेऽपि सन्देह इत्यसिद्धिः। सन्दिग्धरूपाव्याप्तिविशिष्टपक्षधर्मतानिश्चयस्यैवानुमितिकारणत्वात्।

अत्र केचित्—अस्तु तर्ह्यऽनुमानाभास इत्याहुः, तदसत्; व्यभिचारज्ञाने सत्यनुमित्यनुदयात्। न च व्यभिचारास्फूर्त्तौ तथा, सर्वविज्ञानवतां सामाजिकानां तदस्फूर्त्यभावादित्वात्। तत् कथमित्यादि।

ध्वनिकारप्रदर्शितं ध्वनिलक्ष्यं समर्थयित्वा स्वप्रदर्शितं समर्थयति—तथेत्यादि। गमकानि ज्ञापकानि हेतवः, तदाह महिमा—

**जात्यन्तराभिव्यक्तौ या सामग्री सन्निबन्धनम्।**
**सैवानुमितिपक्षे नोपगमकत्वेन समता ॥इति।**

दूषयति—तानीति। कारणान्तरं दर्शयति—ततश्चेत्यादि। स्नानकार्यत्वेनोक्तानीति। यथा स्नानकार्यत्वं तथा प्रदर्शितमेव। प्रतिबद्धानि व्याप्यानि।

व्यक्तिवादिनैव चास्माभिरप्यधमपदसाहाय्यमूरीकरिष्यत इत्याह—न चाधमत्वमित्यादि । प्रमाकरणेन शब्देन प्रतिपन्नं तस्य प्रमाणत्वा व्यभिचारव्यभिचारात् । ततश्च पूर्ववत् सन्दिग्धसिद्धिरित्यर्थः । उपसंहरति—कथमिति ।

ननु ज्ञाप्यज्ञापकयोरर्थयोरनियतसम्बन्धे कथं व्यञ्जकता इत्यत आह—एवंविधादित्यादि । एवंविधाद् वक्तृबोद्धव्यादिवैशिष्ट्यविशिष्टात् । एवं विधोऽर्थोऽलीकः सत्यो वा । उपपत्तिर्दृष्टसामग्री । अत्र किं मानमित्यत आह—प्रकाशत इति । प्रकाशः प्रतीतिः । तस्या एवानपलपनीयत्वेन प्रमाणत्वादित्यर्थः । तदाह—व्यक्तिवादिन इत्यादि ।

**इति श्रीपरमानन्दचक्रवर्तिविरचितकाव्यप्रकाशविस्तारिकायां गुणीभूतव्यङ्ग्याभिधानो नाम पञ्चम उल्लासः ॥ ५ ॥**

## सारबोधिनी

दूषयति अत्रोच्यत इति । तत्रादो व्याप्तिविघटकं व्यभिचारमुद्भावयति भीरुरपीत्यादि । अन्येन धनलाभादिना । अनैकान्तिको व्यभिचारी । बिभ्यदिति । स्पर्शेन पापजननात् पापजनके तद्विधे पौरुषानास्पदत्वात् । सिंहादभीतौ हेतुमाह वीरत्वेनेति । धार्मिकस्य भयानास्पदत्वात् । अतः सिंहवत्त्वभीरुभ्रमणाभावयोर्न सामानाधिकरण्यमित्याह विरुद्धोऽपीति । भीरुभ्रमणेन साध्याभावेन व्याप्तत्वात् ।

केचित्तु व्यभिचारितो व्यतिरेकी विरुद्ध इति मतेनेदमिति वदन्ति । पक्षधर्मताविघटनमाह गोदावरीतीरमिति । न चेति । प्रामाण्यं नियतमिति शेषः । अप्रतिबन्धादप्रतीतेः । शब्देषु प्रामाण्यसन्देहादर्थेष्वपि सन्देह इत्यसिद्धिः । सन्दिग्धासिद्धिरित्यर्थः । नन्वस्त्वनुमानाभास इति चेन्न । व्यभिचारज्ञाने तदनुदयात् । न च व्यभिचारास्फूर्तौ तथा । सर्वविज्ञानवताम् सामाजिकानां तदस्फूर्त्त्यभावादित्यत आह तत्कथमित्यादि । स्वप्रदर्शितध्वनिलक्ष्यमपि समर्थयति तथेत्यादि । प्रतिबद्धानि व्याप्तानि । ननु व्यक्तिवादिनेवास्माभिरप्यधमपदसाम्यमङ्गीकरिष्यत इत्यत आह । न चाधमत्वमिति । तथा च पूर्ववत्सन्दिग्धासिद्धिरिति भावः । नन्वस्मिन् व्यक्तिपक्षेऽपि दोष इत्यत आह एवमिति । अत्र व्याप्तेरनङ्गत्वेन संभावनामात्रादेव तत्सिद्धिरिति भावः ।

**इति सारबोधिन्यां पञ्चम उल्लासः**

## काव्यप्रदीपः

अत्रोच्यते—श्वभीरोरवीरस्वभावस्य भ्रमणायोग्यत्वमत्र साध्यं वीरस्वभावस्य वा । विशेषौदासीन्येन तत्सामान्यस्यैव वा । आद्ये व्यभिचारः । प्रभोर्गुरोर्वा निदेशेन प्रियानुरागेण निधिलाभादिशङ्कया वा तादृशस्यापि तत्र भ्रमणदर्शनात् । अत एव नान्त्योऽपि । मध्यमे तु विरोधः । स्पर्शादिशङ्कया अपौरुषेयतया वा श्वतो बिभ्यतोऽपि मृगयादिकुतूहलेन सिंहवद्देशे वीरस्य भ्रमणात् । किं च पक्षे सिंहसद्भावो न मानान्तरेणावधारितः । किं तु पुंश्चलीवाक्यादवधारितः । न च तद्वचनं निश्चायकम् । अर्थेन समं संबन्धानियमात् । इत्यानिश्चयरूपा सिद्धिः । एवं 'निःशेषच्युत—' इत्यादौ चन्दनच्यवनादीन्युपभोगव्यञ्जकतयोपात्तानि । न च तानि तद्व्याप्यानि कारणान्तरतोऽपि सभवात् । अत एवात्र स्नानकार्यत्वेनोपात्तानि । अतो नैकान्तिकात्कथमनुमानं स्यात् । ननु

व्यक्तिरपि कथं तैरिति चेत्। अधमपदसाहित्यादिति ब्रूमः। अस्माकमपि तत्साहित्येनानैकान्तिकताव्यतिरेक इति चेत्। भवेदप्येवं यद्यधमत्वं प्रमाणादवधारितं भवेत्। नत्वेवमस्ति। व्यक्तिरपि कथं तादृशाद्भवेदिति चेत्। धिङ्मूर्ख। व्यञ्जनायां न व्याप्तेर्नापि पक्षधर्मताया निर्धारणमङ्गम्। किं तु संभावितादप्येवंविधदेवंविधोऽर्थः प्रतीयत इति मूकीभव।

**इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे ध्वनिगुणीभूतव्यङ्ग्यसंकीर्णनिर्णयो नाम पञ्चम उल्लासः ॥**

## आदर्शः

प्रियानुरागेणेति, सिंहवद्देशप्रविष्टां प्रियामानेतुमित्यर्थः। 'अनैकान्तिकः' व्यभिचारी, स च पक्ष एवेति बोध्यम्, हेतोरनन्यवृत्तित्वात्। विरुद्धोऽपीति, शुनो भीरुरपि यदि वीरस्तदा सिंहोपलब्धिमति गोदावरीतीरे अवश्यं भ्रमतीति साध्याभावस्य व्याप्यः सिंहोपलब्धिरूपो हेतुर्विरुद्ध इत्यर्थः। अत्र चक्रवर्त्ती— अगम्यदेशे सिंहोपलब्धिरस्ति, न च भीरोस्तत्र-भ्रमणमिति साध्यसहचारी हेतुरयम्, न विरुद्धः किन्तु व्यभिचारितो (व्यभिचरितो ?) व्यतिरेकी विरुद्ध इति पारिभाषिकोतो विरुद्ध इत्येवार्थः इत्याह, तन्न, हेतोरस्य व्यतिरेकित्वे पक्षमात्रवृत्तित्वादगम्यदेशे तदसम्भवात्, अन्यत्र तत्सत्त्वे व्यतिरेकित्वस्यैवासम्भवाच्च, व्यतिरेकिणो व्यभिचारितत्वे विरुद्धत्वस्य सुतरां सिद्धत्वेन व्यभिचारितो व्यतिरेको विरुद्ध इत्यस्यार्थवशप्राप्तकथनरूपत्वेन परिभाषितत्वाभावाच्च। सन्दिग्धासिद्धिमपि दर्शयति—गोदावरीति। अपि तु वचनादिति, भ्रमेत्यादिकुलटावचनादित्यर्थः। न च वचनस्येति, सन्दिग्धप्रामाण्यात् तद्वाक्याद् भीरोः सिंहोपलब्धिः पक्षे जाता न वेति अनुमातृसामाजिकानां सन्देहविषयो हेतुः सन्दिग्धासिद्ध इत्यर्थः। 'अप्रतिबन्धात्' असम्बन्धात्।

तथेति, दूती उपनायकोपभुक्ता चन्दनच्यवनादिमत्त्वादित्यनुमाने व्यभिचार इत्यर्थः। न च चन्दनच्यवनादौ वैलक्षण्यविवक्षणात् न व्यभिचार इति वाच्यं शब्दात् तदनुपस्थितेः। नन्वीदृशात् ततः कथमुपभोगस्य व्यञ्जनाऽपीत्यत आह—व्यक्तिवादिना चेति व्यञ्जनावादिना चेत्यर्थः। अधमपदसहायानामिति, दूतीरन्तृत्वेनैवाधमत्वमित्यभिप्रायः। एतदपि दूतीप्रेषणकृतसङ्केतनायकाभिप्रायेणैवोक्तम्, तदन्यनायकपक्षे तु दूतीप्रेषणसापेक्षत्वेनाप्यधमोक्तिसम्भवात् न तत्सहायतेत्यवधेयम्। नन्वेवं अधमसन्निहितप्रेषितत्वे सतीति हेतुविशेषणं देयमित्यत आह—न चेति, आरोप्यनिन्दयाऽप्यधमोक्तिसम्भवादिति भावः। ननु तवापि कथमेवंविधादर्थादुपभोगव्यञ्जनेत्यत आह—एवं विधादिति। 'उपपत्तिः' अव्यभिचारादिः। 'तद्दूषणमिति, व्यञ्जनया प्रतिपादने अव्यभिचारादेरनपेक्षणादिति भावः।

**इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्यकृते काव्यप्रकाशादर्शे गुणीभूतव्यङ्ग्यनिर्णयस्य पञ्चमः प्रतिबिम्बः।**

## सुधासागरः

दूषयति अत्रोच्यत इति। तत्रादौ व्याप्तिविघटकं व्यभिचारमुद्भावयति—भीरुरपीत्यादि। अन्येन धनलोभादिना। अनैकान्तिको हेतुर्व्यभिचारः। बिभ्यदिति। स्पर्शेऽपायजननात्। पापजनके तद्विधे पौरुषानास्पदत्वात्।

सिंहादभीतौ हेतुमाह—वीरत्वेनेति। धार्मिकस्य भयानास्पदत्वात्। अतः सिंहवत्त्वभीरुभ्रमणाभावयोर्न सामानाधिकरण्यमित्याह—विरुद्धोपीति। भीरुभ्रमणेन साध्याभावेन व्याप्तवात्।

केचित्तु—व्यभिचरितो व्यतिरेकी विरुद्ध इति मतेनेदमिति वदन्ति।

पक्षधर्मताविघटनमाह—गोदावरीतीर इति। वचनात् कुलटावाक्यात्। न चेति। प्रामाण्यम्, नियतमिति शेषः। अर्थेनाप्रतिबन्धात् शाठ्योक्तौ प्रामाण्यसन्देहाच्छब्दार्थयोरनियतसम्बन्धादित्यर्थः। तथाचार्थनिश्चयस्तदाह-इत्यसिद्ध इति। संदिग्धा सिद्धिरित्यर्थः। नन्वस्त्वनुमानाभास इति चेन्न, व्यभिचारज्ञाने तदनुदयात्। न च व्यभिचारास्फूर्त्तौ तथा, सर्वज्ञानवतां सामाजिकानां तदस्फूर्तेः। तदाह—तत्कथमित्यादि। ध्वनिकारोक्तोदाहरणेऽनुमानं निरस्योक्तोदाहरणेऽपि तन्निराकुर्वन् ध्वनिलक्ष्यं समर्थयति—तथेत्यादि। प्रतिबद्धानि व्याप्तानि। ननु व्यक्तिवादिनेवास्माभिरप्यधमपदसाहाय्यमङ्गीकरिष्यते इत्यत आह—एवमित्यादि। अत्र व्याप्तेरनङ्गत्वेन सम्भावनामात्रादेव तत्सिद्धिरितिभावः। व्याख्यातञ्च गोविन्दमहामहोपाध्यायैः—

'—महिमभट्टास्तु—न तावदसम्बद्ध एव वाक्यात् प्रतीयते, सर्वस्मात्सर्वोपलब्धिप्रसङ्गात्, सम्बद्धाच्च व्यङ्ग्यव्यञ्जकभावो भवन्नानियताद्भवतीति प्रतिबद्धरूपाद् भवतीत्युपेयमि'—ति।

**सम्बन्धो न स्वाधिकरणत्वेनाज्ञाते व्यङ्ग्यं प्रतिपादयति, सर्वत्र तत्प्रतीतिप्रसङ्गात्। एवञ्च व्यङ्ग्यव्यञ्जकभावोऽनुमान एव पर्यवसन्नः। यतो व्याप्तत्वेन सकलपक्षनिष्ठत्वेन च सपक्षसत्त्वावपक्षासत्त्वपक्षसत्त्वलक्षणरूपत्रयवतो लिङ्गाल्लिङ्गिज्ञानमेवानुमानम्। तदेतदुक्तम्—अनुमानं यत्तद्रूप इति। तेनानुमानेन रूप्यते न त्वतिरिक्तया व्यक्त्येति हि तस्यार्थः। एवमनुमानादेव व्यङ्ग्यप्रतीतिः। तथा हि—भम धम्मि अ इत्यादि। सङ्केतनिकेतनीभूतं गोदावरीतीरनिकुञ्जं पुष्पावचयादिहेतोः कदाचित्सञ्चरता धार्मिकस्य निवारणाय विनयवत्या इयमुक्तिः। तदत्र निकुञ्जवासिसिंहकृतया श्वनिवृत्त्या गृहे भ्रमणविधिर्वाच्यः। स एव निकुञ्जनभ्रमणायोग्यतानुमित्यै प्रभवति। यद् भीरुभ्रमणं तद् भयकारणनिवृत्त्युपलब्धिपूर्वकम्। लिङ्गं च सिंहोपलब्धिरिति व्यापकविरुद्धोपलब्धो पर्यवसानात् भ्रमणस्य व्यापकभयकारणाभावोपलब्धिः प्रतीता, तद्विरुद्धं यद् भयकारणं तदुपलब्धेः। यथा नात्र तुषारस्पर्शः वह्नेः। अनुमानञ्चैवम्—गोदावरीनिकुञ्जं भीरुभ्रमणायोग्यं सिंहवत्त्वादिति।**

अत्रोच्यते—श्वभीरोरवीरस्वभावस्य भ्रमणायोग्यत्वमत्र साध्यम्, वीरस्वभावस्य वा? विशेषौदासीन्येन तत्सामान्यस्यैव वा? आद्ये व्यभिचारः। तादृशस्यापि प्रभोर्गुरोर्वा निदेशेन प्रियानुरागेण निधिलाभादिशङ्कया वा भ्रमणदर्शनात्। अत एव नान्त्योऽपि। मध्यमे तु विरोधः, स्पर्शादिशङ्कयाऽपौरुषेयतया वा शुनो बिभ्यतोऽपि सिंहवद्देशे वीरस्य भ्रमणात्।

किञ्च—पक्षे सिंहसद्भावो न मानान्तरादवधारितः, किन्तु पुंश्चलीवचनात्। न च तद्वचनं निश्चायकम्, अर्थेन समं सम्बन्धानियमादित्यनिश्चयरूपासिद्धिः। एवं निःशेषच्युतेत्यादौ चन्दनच्यवनादीनि उपभोगव्यञ्जकतयोपात्तानि। न च तानि तद्व्याप्यानि कारणान्तरतोऽपि सम्भवात्। अत एवात्र स्नानकार्यत्वेनोपात्तानि। अतोऽनैकान्तिकात्कथमनुमितिः स्यात्। ननु व्यक्तिरपि कथं तैरिति चेत्, अधमपदग्साहित्यादिति ब्रूमः। अस्माक-

मपि तत्साहित्येनानैकान्तिकताव्यतिरेक इति चेत्, भवेदप्येवं यद्यधमत्वं प्रमाणावधारितं भवेत्, न त्वेवमस्ति। व्यक्तिरपि कथं तादृशाद् भवेदिति चेत्, धिङ्मुर्ख ! व्यञ्जनायां न व्याप्तिर्न वा पक्षधर्मताया निर्धारणमङ्गम्, किन्तु सम्भावितादप्येवं विधादेवंविधोऽर्थः प्रतीयत इति मूकीभवेति। एवञ्चावाग्गोचग्ब्रह्मबोधिकेयमलौकिकी। वृत्तिर्वाग्देवताङ्गीकृता व्यञ्जना ब्रह्मणाऽप्यपलपितुमशक्येति सुधीभिर्मन्तव्यम्।

**इति श्रीमत्पदवाक्यप्रमाणपारावारीणदीक्षितभीमसेनकृते काव्यप्रकाशविवरणे सुधासागरे ध्वनिगुणीभूतव्यङ्ग्यसङ्कीर्णभेदनिर्णयः पञ्चम उल्लासः ॥ ५ ॥**

---

# अथ षष्ठ उल्लासः

**(सू० ७०) शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम् ।**

**गुणप्राधान्यतस्तत्र स्थितिश्चित्रार्थशब्दयोः ॥ ४८ ॥**

न तु शब्दचित्रेऽर्थस्याचित्रत्वम् अर्थचित्रे वा शब्दस्य ।

---

**सङ्केतः**

अथ अवरकाव्यभेदौ आह—शब्दार्थेति । सन्निवेशविशेषेण यथाक्रमं शब्दार्थौ चित्रौ यत्र, शब्दार्थाभ्यां वा चित्रं यत्, तत् तथा **पूर्वं** उदाहृतं **प्रोक्तम्**, न तु उदाहृतमित्यस्य दृष्टान्तीकृतमित्यर्थः । गुणेति । गुणश्च प्रधानं चेति विग्रहे भावप्रत्ययः । **'क्वचिदुत्तरपदस्यापि ।'** इति वृद्धिः । यद्वा— गुणः इति अजन्ततया गुणीकरणार्थः । एवं च **गुणश्च—गुणीकरणं च प्राधान्य चेति विग्रहः** । तत्र शब्दार्थचित्रकाव्ययोः ।

**अय भावः**—**यत्र शब्दचित्र प्रधानम्**, तत्रापि अर्थचित्रं गौणमस्त्येव । एवं अर्थचित्रेऽप्यूह्यम् । न पुनः **एकैकचित्र काव्यं स्यादिति** ।

**बालचित्तानुरञ्जनी**

अतिशयिनि व्यङ्ग्ये उत्तमं काव्यं, अनतिशयिनि व्यङ्ग्ये मध्यमं काव्यमिति काव्यद्वयं प्रदर्श्य क्रमप्राप्तं तृतीयमधमकाव्यं प्रकटिष्यन् अल्पप्रमेयतया कारिकां पठति शब्देति । शब्दचित्रमर्थचित्रं च यत्पूर्वं काव्यद्वयमुदाहृतं तत्र काव्ये चित्रार्थशब्दयोः गुणप्राधान्यतः स्थितिः अवस्थानम् । शब्दचित्रेऽर्थस्य गुणभावः शब्दस्य प्राधान्यम् तत्र कवेरभिनिवेशात् । अर्थचित्रे शब्दस्य गुणभावः अर्थस्य प्राधान्यम् तत्र कवेरभिनिवेशादित्यर्थः ।

**काव्यादर्शः**

शब्दार्थचित्रमिति । शब्दार्थवैचित्र्यमात्रं व्यङ्ग्यरहितमवरं काव्यं यत् प्रथमोल्लासे उदाहरणद्वयेन दर्शितं, तत्र न शब्दस्यैव केवलस्य रमणीयतया काव्यत्वं नाप्यर्थस्य केवलस्य, किं तु द्वयोरपि प्रधानगुणभावेनेति विशेषमाह—न तु शब्देति ।

## विवेकः

अथोत्तममध्यमकाव्यस्वरूपनिर्णयान्तरितमवरकाव्यस्वरूपं स्मारयति सूत्रकारः—शब्दार्थेति । पूर्वमिति द्वितीयोल्लासे (प्रथमोल्लोसं) शब्दचित्रं वाच्यचित्रमव्यङ्ग्यन्त्ववरं स्मृतमिति कारिकाऽर्धेन (५ का.) । तच्च न स्वातन्त्र्येण द्वैरूप्यमित्याह—गुणप्राधान्यत इति । एवञ्च यद्यपि शब्दार्थचित्रे द्वे अन्योन्यपरिहारेण न सम्भवतस्तथापि 'प्रधानेन व्यपदेशा भवन्ती'ति न्यायात् यस्य यत्रोद्रेकात् प्राधान्यमवसीयते तेन तत्र व्यपदेशो जायत इत्याह नत्विति ।

## दीपिका

ध्वनिगुणीभूतव्यङ्ग्यलक्षणेषु कृतेषु चित्रविशेषलक्षणं यद्यपि प्रकृतम्, तथापि तस्य भाक्तगुणपदाभिधेयबन्धवैचित्र्यशब्दार्थालङ्कृतिलक्षणत्वादेव सुप्रतिपादित पदत्वात्तदपेक्षः 'शब्दचित्रं वाच्यचित्र'मिति यश्चित्रविभाग उक्तः स न युज्यते विषयविभागाभावादित्याशङ्कामपनेतुमुल्लासान्तरं कृतम्—शब्देति । उदाहृतमुक्तम् । गुणप्रधान्यतः स्फुटास्फुटभावेन । चित्रार्थशब्दयोरिति चित्रपदस्य प्रत्येकमन्वयः । शब्दचित्रे चित्रार्थस्य गुणत्वं चित्रशब्दस्य प्राधान्यम्, अर्थचित्रे चित्रशब्दस्य गुणत्वं चित्रार्थस्य प्राधान्यमिति प्रधानेन व्यपदेशा भवन्तीत्युपपद्यत एव विभागः ।

न त्विति विवेचनप्रवृत्तिबीजशङ्कासूत्रणम् । अचित्रत्वं सर्वथेति शेषः ।

## दर्पणः

इह यद्यपि अलङ्कार्यतया शब्दार्थचित्रयोरलङ्कारवत्त्वाद् विशेषलक्षणं पश्चादुल्लासद्वयेन निरूपयितुमात्मनोऽभिमत इति ध्वनिगुणीभूतव्यङ्ग्यरूपकाव्यविशेषप्रतिपादनानन्तरं तदुल्लासितम् तथापि प्राचीनानुरोधेन काव्यविशेषत्वेन लक्षितयोस्तयो, किञ्चिद् विशेषमाश्रित्य उल्लासान्तरमारभते शब्देति । चित्रं शब्दार्थयोः प्रत्येकं सम्बन्धः । उदाहृतं शब्दचित्रं वाच्यचित्रमित्यादिना । प्रतिपादितं गुणेति । शब्दचित्रे प्रधाने अर्थचित्रस्य गुणत्वम् अर्थचित्रे प्रधाने शब्दचित्रस्य गुणत्वमिति द्वयोरेकत्र सद्भावेऽपि "प्रधानेन व्यपदेशा भवन्ती'त्युक्तनयेन यस्य प्राधान्य तेन व्यपदेश इत्यर्थः । अविचित्रत्वमित्यत्र सर्वथेति शेषः[?] ।

## साहित्यचूडामणिः

अथ परिपाटीप्राप्तं तृतीयं काव्यं प्रकटयिष्यन्नल्पप्रमेयतया कारिकामेव पठति—शब्देति । नन्वादिमोल्लासपर्यन्ते द्वैरूप्येण तृतीयं काव्यमुदाजहहे । किमत्र पौनरुक्त्येन । उच्यते । आलंकारिकेषु केचन शब्दालङ्कारैकतात्पर्यशालिनः, केचिदर्थालङ्कारैकप्रवणाः, एके तदुभयावश्यम्भावभव्यबुद्धय इति त्रैविध्यम् । तत्रैकैकपक्षोपक्षेपानुगुण्यादाद्योल्लासोदाहरणाद्वयं, यतः "स्वच्छन्दोच्चलदि"त्यादौ न काचिदार्थस्यालङ्कारस्य शङ्का, "विनिर्गतमि"त्यादौ न शाब्दस्य । इह तु तदुभयमेलकानुसारो ग्रन्थकारस्य, यत्र प्राधान्याप्राधान्यविवेकः परिशिष्यते । गुणेति ।

**सम्प्रदायप्रकाशिनी**

क्रमप्राप्तं चित्रकाव्यं लिलक्षयिषुः शब्दार्थहेतुकतया द्वैविध्यं तावदनुस्मारयितुं सूत्रमेवावतारयति— शब्दार्थचित्रमिति । शब्दचित्रमर्थचित्रं चेति यत् प्रथमोल्लासे काव्यद्वयमुदाहृतम्, उभयत्रापि तत्र प्रत्येकमुभयवैचित्र्येऽपि गुणप्राधान्यतो विभागः । एकत्र शब्दस्य साक्षाद् वैचित्र्यम्, अर्थस्य तद्द्वारा, अन्यत्र पुनरर्थस्य साक्षात् शब्दस्य तद्द्वारेति गुणप्रधानभावेन निमित्तेनानुप्रासादि शब्दचित्रमुपमादिस्त्वर्थचित्रमिति शब्दार्थयोर्वैचित्र्यविभागेनावस्थानम् । यत एवं शब्दार्थयोश्चित्रा स्थितिरतश्चित्रं काव्यं द्विधोपदर्शनीयमिति कारिकार्थनिष्कर्षः ।

**मधुमती**

क्रमप्राप्तं अधमं काव्यं लक्षयति—**शब्दार्थचित्रमिति** । **तथाच प्राधान्यमाश्रित्य व्यपदेशः** इति तात्पर्यम् । एतदेवाह— न त्विति । ननु सिद्धे मतद्वये **गुणप्रधानभावचिन्ता** ।

**विस्तारिका**

[श्रीदुर्गा विजयते] क्रमप्राप्तं चित्रकाव्यमभिधत्ते । शब्दार्थचित्रमित्यादि । उदाहृतं स्वच्छन्देत्यादिना विनिर्गतमित्यादिना च ।

ननु प्रथमे व्यतिरेकालङ्कारेणार्थस्य चित्रत्वम्, द्वितीये च मानदमात्ममन्दिरादिति मकारस्यासकृदावृत्त्या वृत्त्यनुप्रासेन शब्दस्येति कथं विभाग इत्यत आह—गुणप्राधान्यत इत्यादि । शब्दानां चित्रतायामर्थचित्रताया गुणता, अर्थचित्रतायां शब्दचित्रताया इत्यर्थः । यत्कृतचमत्कारस्योत्कटता तस्य तु प्राधान्यम्, अन्यथा तु गुणता । एतेन काव्ये सर्वत्रैव शब्दार्थालङ्कारवत्त्वमावश्यकम्; केवलं कस्यचिद् गुणत्वम्, कस्यचित् प्राधान्यमिति भावः ।

**सारबोधिनी**

क्रमप्राप्तं चित्रकाव्यं लक्षयति शब्दार्थचित्रमिति । तत्र यद्यपि शब्दार्थचित्ररूपभेदद्वयं प्रथम उल्लास एव दर्शितम्, तद्भेदाश्चालङ्कारप्रदर्शनेनैव दर्शिता भविष्यन्तीति न दर्शनीयं किञ्चिदस्ति, तथापि शब्दानां चित्रतायां प्रधानीभूताया अर्थचित्रताया गुणत्वम् एवमर्थानां चित्रतायां शब्दचित्रताया गुणत्वम्, न तूभयोरुभयत्राभाव इति गुणप्राधान्येन स्थितिवशादनयोर्विभाग इति दर्शयितुं शब्दार्थालङ्कारावप्यस्माकमिष्टौ न त्वन्यत इति दर्शयितुमयमारम्भः । उदाहृतं स्वच्छन्देत्यादिना, विनिर्गतमित्यादिना च ।

ननु प्रथमे व्यतिरेकालङ्कारेणार्थस्य चित्रत्वम्, द्वितीयच 'मानदमात्ममन्दिरादि' ति मकारस्य सकृदावृत्त्या वृत्त्यनुप्रासेन शब्दस्य चित्रत्वमस्ति तत्कथमयं विभाग इत्यत आह गुणप्राधान्यत इति । यच्चारुत्वस्योत्कटत्वं तस्य प्राधान्यमिति भावः ।

**काव्यप्रदीपः**

एवं गुणीभूतव्यङ्ग्यभेदे निर्णीते चित्रभेदं दर्शयितुमवसरः । तत्र यद्यपि शब्दचित्रार्थचित्ररूपभेदद्वयं प्रथमोल्लास एव दर्शितं तत्प्रभेदाश्चालंकारप्रभेददर्शनेनैव प्रदर्शिता भविष्यन्तीति न किंचिदस्ति तत्र प्रदर्शनीयम् । तथापि प्रदर्शितभेदद्वयमेव तावदनुपपन्नम् । शब्दार्थालंकारयोरन्योन्यनैरपेक्ष्येणानुपलम्भात् । उपलम्भेऽपि वोभयसद्भावे तृतीयभेदप्रसङ्गादिति तदुपपादयति—

**शब्दार्थचित्रं यत्पूर्वं काव्यद्वयमुदाहृतम्।**
**गुणप्रधानतस्तत्र स्थितिश्चित्रार्थशब्दयोः ॥ १ ॥**

शब्दार्थालंकारयोरेकैकमात्रावस्थानपुरस्कारेण न विभागः। किं तु प्राधान्यपुरस्कारेण। तथा च न क्वाचिदनुपपत्तिरिति भावः। ननु तथापि विभागोऽनुपपन्न एव। यतः केचिच्छब्दालंकारमात्रं केचिच्चार्थालंकारमात्रमुरीचक्रिरे। तत्कस्य मतमाश्रित्य विभाग इति चेत्, सन्त्येव केचिदुभयाङ्गीकारिणः।

**काव्यप्रकाशखण्डनम्**

चित्रभेदास्त्वलङ्कारनिरूपण एव निरूपयिष्यन्ते। इदमवधेयम्—

**शब्दार्थचित्रं यत् पूर्वं काव्यद्वयमुदाहृतम्।**
**गुणप्रधानतस्तत्र स्थितिः शब्दार्थचित्रयोः ॥ (सू० का० ४८)**

न तु शब्दचित्रे नार्थस्य चित्रताऽर्थचित्रे शब्दस्य। तथा कैश्चित् शब्दचित्रमेवेष्यते। कैश्चिदर्थचित्रमेवेष्यते। अस्माभिस्तु द्वयमेवेति उदाहरणं तु प्राक्तनं बोध्यम्।

**॥ इति पादसाह—श्रीअकब्बरसूर्यसहस्त्रनामध्यापक—श्रीशत्रुञ्जयतीर्थकरमोचनाद्यनेकसुकृतविधायकमहोपाध्यायश्रीभानुचन्द्रगणिशिष्याष्टोत्तरशतावधानसाधनप्रमुदितपादसाह-श्री अकब्बरप्रदत्तखुस्फहमापराभिधानमहोपाध्यायश्रीसिद्धिचन्द्रगणिविरचिते काव्यप्रकाशखण्डने षष्ठ उल्लासः ॥**

**आदर्शः**

कैश्चित् शब्दचित्रमेवालङ्कार उच्यते नार्थचित्रम्, कैश्चित्तु अर्थचित्रमेवालङ्कार उच्यते न शब्दचित्रमिति तन्निराकरणेन उभयोरप्यलङ्कारत्वं स्वीकर्त्तुमाह—शब्दार्थेति। 'यत् पूर्व' मिति 'शब्दचित्रं वाच्यचित्र'मित्यादिनेत्यर्थः। 'गुणप्राधान्यः' इत्युपलक्षणम्, तुल्यप्राधान्यत इत्यपि बोध्यम्, एकतराभ्युपगमनिरासमात्रे तात्पर्यात्। न तु शब्दचित्र इति, अभ्युपगम्यत इति शेषः।

**सुधासागरः**

क्रमप्राप्तं चित्रकाव्यं लक्षयति 'शब्दार्थे' ति।

यद्यपि शब्दार्थचित्ररूपभेदद्वयं प्रथमोल्लास एव दर्शितम्, तद्भेदाश्चालङ्कारप्रदर्शनेनैव दर्शिता भविष्यन्तीति न दर्शनीयं किञ्चिदस्ति, तथापि शब्दानां चित्रतायां प्रधानीभूतायामर्थचित्रताया गुणत्वम्, एवमर्थानां चित्रतायां शब्दचित्रताया गुणत्वं, न तूभयोरुभयत्राभाव इति गुणप्राधान्येन स्थितिवशादनयोर्विभाग इति दर्शयितुं शब्दार्थालङ्कारावप्यस्माकमिष्टौ न त्वन्यतर इति च दर्शयितुमयमारम्भः। उदाहृतं स्वच्छन्देत्यादिना विनिर्गतमित्यादिना च। ननु प्रथमे व्यतिरेकालङ्कारस्यार्थस्य चित्रत्वं द्वितीयं च मानदमात्मन्दिरादिति मकारस्यासकृदावृत्त्या वृत्त्यनुप्रासेन शब्दस्य चित्रत्वमस्ति, तत्कथमयं विभाग इत्यत आह—गुणप्राधान्यत इति। यत्कृतचारुत्वस्योत्कटत्वं तस्य प्राधान्यमन्यस्य गुणत्वमिति। एतेन सर्वत्रैककाव्ये शब्दार्थालङ्कारवत्त्वमावश्यकम्, केवलं कस्यचिद् गुणत्वं कस्यचित्प्राधान्यमिति भावः। उभयालङ्काराणां चमत्कारप्रयोजकत्वे प्रामाणिकसम्मतिमाह—तथा चोक्तमित्यादि।

तथा चोक्तम्—

"रूपकादिरलङ्कारस्तस्यान्यैर्बहुधोदितः।
न कान्तमपि निर्भूषं विभाति वनिताननम्।

रूपकादिमलङ्कारं बाह्यमाचक्षते परे।
सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंङ्कृतिम्॥

तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः॥"इति॥

---

**सङ्केतः**

तथा चोक्तमिति। भामहेनेति शेषः। तस्य काव्यस्य। न कान्तमिति। यथा सलावण्यमपि मुखं निर्भूषं सत् न भाति, तथा शब्दार्थशरीरमपि काव्यं सगुणमपि निरलङ्कारं न भातीत्यर्थः। अपरे तु—काव्यस्वरूपासमवेतत्वेन रूपकाद्यर्थालङ्काराणां बहिरङ्गतां मन्वानाः, सुप्तिङ्व्युत्पद्यतेः काव्यस्वरूपसमवेतत्वेन अन्तरंङ्गालङ्कारतां आहुः इत्याह—रूपकादिमिति। गौडमतमेतत्। तदेतत् सुप्तिङात्मकम्। सौशब्द्यं शब्दवैचित्र्यम्। शब्दालङ्कारसाधकमेतत्। अर्थव्युत्पत्तिः अर्थवैचित्री। इयं पुनः अर्थालङ्कारसाधिका। नेदृशी न सुप्तिङात्मिका। अथवा—अर्थव्युत्पत्तिः अर्थालङ्काररूपा रूपकाद्यलङ्कृतिः ईदृशी अन्तरङ्गा न। किं तर्हि ? गौणी, इत्यपि व्याख्या। अथ च अर्थव्युत्पत्तिरपि काव्ये प्रयोज्यत्वेन मतेत्याह—इष्टं द्वयं तु नः इति। भामहोऽयं शब्दस्य अर्थस्य च अलङ्कारान् इष्टवान्, परं गुणप्राधान्येन।

**बालचित्तानुरञ्जनी**

शब्दालङ्काराणामर्थालङ्काराणां च चमत्कारप्रयोजकत्वे प्रामाणिकसंमतिमाह तथा चोक्तमित्यादिना। उक्तमिति भामहेनेति शेषः। रूपकादिरिति। तस्य काव्य रूपकादिः। रूपकोपमादिरेवालङ्कारः। अन्यैः कैश्चिदालङ्कारिकैः। बाह्यम् आस्वादोत्पत्तिपरवर्तिनम्। सौशब्द्यम् शब्दनिर्माणसौष्ठवम्।

**काव्यादर्शः**

एतदेव भामहोक्तेनाह'रूपकादिः' इति। 'तस्ये'ति काव्यस्य। 'बाह्य' मिति काव्यस्वरूपासमवायिनम्। 'परे' शब्दालंकारैकान्तवादिनः।'सुपा' मिति। सुप्तिङन्तानां पदानां विचित्रतया भङ्ग्यन्तरेणानुप्रासादिनोत्पत्तिनिब-

न्धनम् । शब्दालंकारा एव काव्यस्वरूपसमवायिनोऽन्तरङ्गा इत्यर्थः । नार्थेति । न चास्मिन्नर्थवैचित्र्यचारुत्वमन्तर्भवति । ततोऽस्माकं शब्दालंकारा अर्थालङ्काराश्रेष्ठाः ।

## विवेकः

अत्रैव तथाचोक्तमित्यादिना इष्टं द्वयन्तु न इत्यन्तेन प्रामाणिकसम्मतिं दर्शयति । उक्तमिति भामहेन (का. अ. १/१३-१५) तस्येति—शब्दार्थयुगलात्मनः काव्यस्य । यद्यपि रसनिष्यन्दमयस्यास्य सङ्घटनाऽऽश्रितगुणौचित्यनिबन्धनं सौन्दर्यमस्त्येव (ध्व. आ. ३/६ वृः द्रः) तथाऽप्यलङ्काराणामवश्यमुपादेयतेति दृष्टान्तमुखेन द्रढयति—न कान्तमपीति । विभाति विशेषेण शोभते । बहिर्भव बाह्यं हाराङ्गदादिवत्, शाब्दमित्यर्थः । विशिष्टोत्पत्तिर्व्युत्पत्तिर्विशेषलक्षणप्रभवेत्यर्थः । नार्थव्युत्पत्तिरीदृशी—अर्थस्य स्वतःसिद्धत्वाल् लक्षणसाध्या नास्ति, [अपि तु] विशिष्टसूक्ष्मार्थपरिचयचातुरीलक्षणा व्युत्पत्तिः कवेरस्त्येवेति भावः । शब्दाभिधेयेति—अभिधेयोऽर्थः, शब्दार्थालङ्कारभेदादित्यर्थः ।

## दीपिका

ननु गुणालङ्कारयुक्तत्वं चित्रत्वमिति प्राञ्चः, तत्तत्कारणान्तरादास्वादविशेषरूपत्वाङ्गीकाराच्छब्दार्थधर्मता न पारमार्थिकीत्यलङ्कारैरेवोपाधिभिश्चित्रता वाच्या । तेषां चैकजातीयत्वात् कथं तदुपधानकस्य चित्रस्य द्वैतमित्याशङ्कामैकजात्येऽप्यवान्तरवैधर्माच्छब्दार्थश्रयत्वलक्षणादुपपद्यत एवैतदित्युत्तरीतुमलङ्कारद्वैविध्ये प्राचीनसम्मतिमाह—तथा चोक्तमिति । रूपकादिरर्थाश्रयः, अलङ्कारो विभावादिरूपार्थोपस्कारकतया मुख्यस्य रसादेरुत्कर्षकत्वात् । अनुप्रासादेर्न मुख्यालङ्कारत्वम्, तेषां विभावाद्युपनयनमात्रप्रयोजनकशब्दाश्रयत्वेन बहिरङ्गत्वादिति केचित् ।

तस्य काव्यस्य । बहुधा बहुप्रकारः । अलङ्कारघटनोपयोगव्यतिरेकदृष्टान्तमाह—न कान्तमिति । कान्तं निर्दोषं स्वाभाविकगुणयुक्तं वा । विभाति सभूषणवदिति शेषः ।

बाह्यमिति । काव्यस्य शब्दविशेषरूपत्वादर्थस्य च तद्वयवच्छेदकतामात्रेणमुख्यत्वात्तदाश्रितानां बहिरङ्गतेत्यर्थः । सुपां तिङामिति तदन्तपदपरम् । विशिष्टोत्पत्तिर्व्युत्पत्तिरिति माधुर्याद्यनुगुणवर्णविशेषात्मकत्वम् । वाचां काव्यरूपाणाम् ।

किमिति तामेवालङ्कृतिं वाञ्छन्ति ? रूपकादावपि रसपोषकतादर्शनादित्याह—तदेतमिति । सुपतिङ्व्युत्पत्तियोगित्वं सौशब्द्यं शब्दस्य सौष्ठवं काव्यव्यपदेशभाजनत्वम्, अर्थस्य व्युत्पत्ती रूपकत्वादिना योजनम् । नेदृशी न शब्दे, काव्यव्यपदेशहेतुः, साक्षात्तद्धर्मताहीनत्वादित्यर्थः । ततश्च येनोपाधिना काव्यत्वं तस्यैव तत्र मुख्यत्वमिति शब्दालङ्कृतय एवं प्रधानत्वमित्पुपरे शब्दाभिधययो द्वयोरपि प्रधानभूतरसाद्युपकारकयोर्यथायथामलङ्कारेण रसादिपोषणक्षमत्वापादनेनोपाधिना भेदाद् द्वयोरपि परस्परतो विशिष्यमाणत्वाद् द्वयमप्यस्माकमिष्टं वल्लभम् । नहि वयं बहिरङ्गत्वान्तरङ्गत्वभेदमाश्रयामहे, द्वयोरप्यङ्गोपस्कारद्वारा मुख्योत्कर्षकत्वादिति साम्प्रदायिकाः ।

## दर्पणः

तत्रैव तथा चोक्तमित्यादिना इष्टं द्वयं तु न इत्यन्तेन प्रामाणिकसङ्गतिं दर्शयतिं । उक्तं प्राचीनैः, रूपकादिरर्थाश्रयोऽलङ्कारो विभावादिरूपार्थोपस्कारकतया मुख्यस्य रसादेरेवोत्कर्षकत्वात् तस्य काव्यस्य बहुधा बहुप्रकारः । शब्दालङ्काराणां तु विभावाद्युपनयमात्रप्रयोजकशब्दधर्मतया बहिरङ्गत्वान्न मुख्यालङ्कारत्वमिति केचित् । अलङ्कारघटनया उपयोगस्य व्यतिरेकेण दृष्टान्तमाह न कान्तमिति । काव्यस्य शब्दविशेषरूपत्वादर्थस्य तद्व्यवच्छेदकमात्रेणमुख्यत्वाद् अर्थाश्रितानामलङ्काराणां बहिरङ्गतेत्यर्थः । सुपां तिङामिति । सुबन्तानां तिङन्तानां पदानां व्युत्पत्ति विशेषेण माधुर्याद्यनुगुणवर्णविशेषार्थकत्वेन उत्पत्तिं वाचां वाक्यानाम् तदेतद् सुप्तिङ्व्युत्पत्तियोगित्वम्, सौशब्द्यं सुशब्दताम्, अर्थव्युत्पत्तिवः मानतादिना[?] योजनं नेदृशी शब्दकात्यभिप्राया [?] । अतश्च शब्दनेनेषिधिभूतेन [?] काव्यत्वमिति शब्दस्यैव मुख्यत्वमिति शब्दालङ्काराणामेव प्राधान्यमित्यपरे । शब्देति । अभिधेयोऽर्थः । द्वयं शब्दार्थालङ्कारयुगलम् । नः अस्माकं तु पुनरिष्टमिति मतम् द्वयोरप्यर्थोपस्कारत्वात् रसादिपरिपोषकत्वेन परस्परतो विशेष्यमानत्वादिति भावः ।

## साहित्यचूडामणिः

उद्रिक्ताङ्गोपादानात् क्वचित् केनचिद् व्यपदेश इति शब्दार्थयोरपि वैचित्र्यं प्रसिद्धमित्येतद् वादिविप्रतिपत्तिपूर्वं **संवादयति—तथा** चेति । रूपकादिरित्यर्थालङ्कारप्राधान्यवादिनां पक्षः । रूपकादिमिति पुनरितरेषाम्, तदेतत् सुप्तिङ्व्युत्पत्तिरूपम्, **ईदृशी शब्दस्वरूपपर्यवसिता** । अर्थव्युत्पत्त्या च काव्यम् । काव्ये द्वयं शाब्द्यार्थी च व्युत्पत्तिरित्येकैकपक्षव्युदासाय ।

## सम्प्रदायप्रकाशिनी

तदेतदुपपादयितुमुपक्रमते—न तु शब्दचित्र इति । प्रतिबद्धत्वादित्यर्थः ।

किं शब्दार्थयोर्मिलितयोरेव वैचित्र्यादविभागेन चित्रकाव्यमेकमाहोस्विद् विभागशो द्विरूपमिति सन्देह उद्भावितः, येन सन्दिग्धेऽर्थे प्रवर्तनार्हाणां पूर्वाचार्यन्यायकारिकाणामवतरणिका कृता भवतीति कारिकाः समवतारयति—तथा चोक्तं रूपकादिरित्यादिना । तिसृष्वेतासु कारिकासु लिलक्षयिषितस्य चित्रकाव्यस्य स्वरूपतः सिद्धिरर्थालङ्कारैकात्मकत्वं च प्रथमकारिकया दर्शितम् । अथ द्वितीयकारिकाप्रथमार्धेन तु शब्दार्थयोर्वैचित्र्यस्य मिथः प्रतिबन्धादविभाग इति, रूपकादिरलङ्कारोऽपि अनुप्रासादिवद् बाह्य एवेति प्रतिपादितम् । इत्थं पूर्वपक्षमुत्थाप्य समनन्तरया त्वर्धान्तरसहितया कारिकया बाह्याभ्यन्तरत्वेनालङ्कारभेदः सोपपत्तिकं दर्शित इति कारिकात्रयस्य पिण्डितार्थः । अथ शब्दसङ्गत्या व्याकुर्मः—रूपकादिरर्थालङ्कारवर्गः । तस्य काव्यस्यान्यैराचार्यैर्बहुधोदितः नानाप्रकारमुपदर्शित इत्यनेन शब्दालङ्कारानभ्युपगमः सूचितः । ननु रसप्रकर्षशालिनस्तदनुगुणगुणसमवायोपशोभिनः संघटनासमुन्मीलितसौभाग्यतिशयस्य काव्यस्य किं रूपकाद्यलङ्कारयोगेनेति प्रत्यवतिष्ठमानान् व्यतिरेकदृष्टान्तेन प्रत्याचष्टे—न कान्तमपीति । न हि कान्तं सदपि वनितामुखमलङ्कृतवदनलङ्कृतं विशिष्यं भाति । अनेन शोभापौष्कल्यसिद्ध्यर्थमलङ्काराणामवश्यपरिग्राह्यत्वप्रदर्शनेनालङ्कारात्मनश्चित्रकाव्यस्यारम्भणीयत्वमुपपादितम्,

उपपादयिष्यमाणस्य च गुणलङ्कारविभागस्य बीजमप्युपक्षिप्तम्। अथ शब्दचित्रमर्थचित्रं चेति विभागमसहमानैरन्यैरर्थालङ्कारवर्गापलापः पूर्वपक्ष उत्थाप्यत इत्याह—रूपकादिमिति। यो ह्ययं रूपकादिरर्थालङ्कारस्तमनुप्रासादिशब्दालङ्कारवत् केचिद् बाह्यमाचक्षते। तत्र मिथो वैचित्र्यप्रतिबन्धरूपो हेतुः स्फुटत्वात् कारिकया नोपात्तः। अथ सिद्धान्तयति—सुपां तिङां चेति। यदेतदाभ्यां मिथो वैचित्र्यप्रतिबन्धमात्रेण शब्दार्थचित्रयोरविशेषण बाह्यत्वमाभ्यन्तरत्वमेव वाशङ्कितं, न तदुपपद्यते। शब्दार्थवैचित्र्ययोर्विजातीयत्वात्। वाचां वैचित्र्ये हि सुपां तिङां च व्युत्पत्तिः। सुपां तिङां च तत्तद्विच्छित्त्यनुगुणतया वाचि विनिवेशनं हि शब्दालङ्कारः। अतः शब्दधर्मत्वात् शब्दालङ्कार एवायम्। तमिमं शब्दधर्मत्वेनैवामनन्तीत्याह—तदेतदाहुः सौशब्द्यमिति। योऽयं सुप्तिङ्व्युत्पत्त्यात्मा शब्दालङ्कारस्तमिमं सौशब्द्यं सुशब्दत्वमेवामनन्ति। कविशब्दत्वमेव शब्दालङ्कार इति निष्कर्षः। न हि सुशब्दत्वमर्थधर्म इति कश्चित् सचेतनः शङ्कते। तर्ह्यर्थवैचित्र्यं कीदृगित्यत आह—नार्थव्युत्पत्तिरीदृशीति। नेदृशी शब्दव्युत्पत्तिरधर्मा न भवति। शब्दव्युत्पत्तिर्हि समुचिततिङ्सुब्व्युत्पत्तिरूपा। अर्थव्युत्पत्तिस्तु जातिगुणादिधर्मविशेषविच्छित्तिविवेचनरूपा। अतोऽनुप्रासादिरूपायाः शब्दधर्मविच्छित्तेरन्यैव ह्यौपम्यादिरर्थधर्मविच्छित्तिरिति सिद्धम्। यत इत्थं वैचित्र्यभेदः, ततः स्वसिद्धान्तं निगमयति—शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु नः इति। शब्दलङ्कारोऽर्थालङ्कारश्चेति भेदसम्भवादुभयमपि चित्रकाव्यमस्माकमभिमतम्।

**एतासु कारिकास्वर्थं परिच्छेत्तुमपारयन्।**
**पदे पदे पलायिष्ट सान्धिविग्रहिकः स्खलन्॥**

### मधुमती

तदेव नास्तीत्यत आह—रूपकादिरिति। तस्य काव्यस्य शब्दात्मनः इति यावत्। बहुधा बाहुल्येन। न कान्तं इत्यनेन 'गुणादावेव काव्यत्वव्यवस्थितौ अलङ्कारो नावश्यकः' इति निरस्तम्। तदयमर्थः—अलङ्काराः हि काव्याश्रयाः। काव्यं च शब्दमात्रम्। शब्द एव हि पठ्यते श्रूयते गीयते वा। अर्थस्यापि शब्दोपस्थापितस्यैव चमत्कृतिहेतुत्वं वाच्यमिति शब्दस्यैव काव्यत्वाङ्गीकारस्यावश्यकत्वात्। एवं च अलङ्कारा अपि शब्दस्यैवेति शब्दमात्रमेव चित्रम्, न त्वर्थः इति। मतान्तरमाह—रूपकादिमिति। बाह्यं बाह्यमात्रम्। क्वचित् 'वाच्यम्' इति पाठः। तत्रापि वाच्याश्रितत्वात् वाच्यमित्यर्थः। ननु—अनलङ्कृतात् शब्दात् कथं चमत्कारकार्योपस्थितिः? अत आह—सुपामिति। तथाच—रूपकाद्यलङ्कारः न शब्दस्य—इत्येवात्र विवक्षितम्, न तु सौक्ष्म्यादिनिषेधोऽपि इत्यर्थः। इदमाकूतम्—अर्थ एव काव्यमित्यभिधीयते, न शब्दः। शब्दस्यार्थमुखप्रेक्षित्वप्रत्ययात्। अन्यथा समुद्रघोषादेरपि काव्यत्वापत्तेः। एवं च—अलंकारा अपि तदाश्रया एवेति तस्यैव चित्रतेति। एवं मतद्वयमुक्त्वा स्वमतमाह—शब्देति। शब्दावच्छिन्नः अर्थः, अर्थावच्छिन्नः शब्दो वा, शब्दार्थौ वा काव्यम्, न त्वेकमात्रम्; विनिगमनाभावात्। प्राधान्येन तत्प्रतिपाद्यश्च व्यङ्ग्यः। तत्प्रतीत्यनुकूलश्च व्यापारः शब्दार्थोभयनिष्ठः इति, व्यञ्जकतायां उभयोः समप्राधान्यमिति, उभयोरप्यलङ्कारता वाच्या, अन्यथा व्यञ्जकतैव न स्यात्। तत्रापि—योऽलङ्कारः यदन्वयव्यतिरेकानुविधायी स तस्येति स्थिते, विवक्षावशादेव शब्दचित्रत्वादिव्यपदेशः इति भावः।

## विस्तारिका

उभयालङ्काराणां प्रयोजकत्वे प्रामाणिकसम्मतिमाह—तथा चोक्तमित्यादि। ननु विप्रतिपत्त्यभावात् कथं प्रामाणिकादरणमित्याशङ्क्यवादिविप्रतिपत्तिमुद्भावयति—रूपकादीत्यादि। तस्य काव्यस्य बहुधा प्रपञ्चितः। कान्तं स्वतः सुन्दरमपि। विभातीति विभावतां प्राप्नोति। कुण्डलादिमत्त्वेनैव विभावनीयत्वात्, विभावत्वादिप्राप्तवतामर्थानामेव रसत्वमिति तेषामेव परिरक्षणमुचितम्, अर्थं प्रत्याय्योपक्षीणानां शब्दानामनादरणीयत्वादित्यर्थः। ब्राह्ममवर्जितसन्निधिः। सुपां तिङां तदन्तानाम्। विशिष्टोत्पत्तिर्व्युत्पत्तिरनुप्रासादीनां निर्माणम्। वाच्छन्ति अत्यन्तोपादेयत्वेनाभिलषन्ति। ईदृशो यथा शब्दव्युत्पत्तिः सौशब्द्यं शब्दनिर्माणसौष्ठवम्।

अयमर्थः—शब्दैरेव व्यज्यमानानामास्वादानां विभावादिभिरर्थैरुपस्थापनम्, ते च माधुर्यादिव्यञ्जकवर्णघटितानुप्रासादिमत्तया रचिता एवं तद्व्यञ्जने प्रभवन्ति। तेन शब्दालङ्काराणामावश्यकत्वम्। पाश्चात्त्यानामर्थालङ्काराणामकिञ्चित्करता, तैर्विनाऽपि शब्दालङ्कारैर्व्यक्तेरिति। तदाह—बाह्यमिति। आस्वादोत्पत्तिदशायां तदनुपलम्भनात्। शब्देत्यादि। अभिधेयः प्रतिपाद्यः, तेन लक्ष्यव्यङ्ग्ययोरपि ग्रहणम्। नोऽस्माकम्। बहुवचननेन स्वजातीयपरिग्रहः। तथाहि शब्दव्यङ्ग्यस्यास्वादस्य विभावाद्यप्राप्तौ शृङ्गारादिविशेषणाश्रयत्वेनाकिञ्चित्करतयाऽलङ्कृतानामर्थानामप्यपेक्षणम्। प्रथमव्यञ्जकानां शब्दानामुपजीव्यत्वेनावश्यकत्वमित्युभयालङ्करणमादरणीयम्, तदाह—इष्टमिति। इष्टतावच्छेदकं च शब्दालङ्कारत्वमर्थालङ्कारत्वञ्च। गुणप्रधानभावस्तु तयोरास्वादप्रयोजकताप्रयोज्य इत्यर्थः।

## सारबोधिनी

उपमाद्यलङ्काराणां चमत्कारप्रयोजकत्वे प्रामाणिकसंमतिमाह तथा चोक्तमित्यादिना।

ननु विप्रतिपत्त्यभावात् कथं प्रामाणिकादरणमित्याशङ्क्य वादिविप्रतिपत्तिमुद्भावयति रूपकादीति। विभाति विभावतां प्राप्नोति कुण्डलादिमत्त्वेनैव विभावनीयत्वात्। विभावदित्वा प्राप्तामर्थानामेव रसत्वमिति तेषां परिष्करणमुचितम्। अर्थं प्रत्याय्योपक्षीणानां शब्दानामलङ्कारस्यानादरणीयत्वात्। बाह्यम् आवर्जितसन्निधिम्। सुपां तिङां तदन्तानाम् विशिष्टोत्पत्तिरनुप्रासादिना निर्माणं, वाञ्छन्ति अत्यन्तोपादेयत्वेनाभिलषन्ति। ईदृशी यथा शब्दव्युत्पत्तिः। सौशब्द्यं शब्दनिर्माणसौष्ठवम्।

अयमर्थः—शब्दैरभिव्यज्यमानानामास्वादानां विभावादिभिरर्थैरुपचायनम्। ते च माधुर्यादिव्यञ्जकवर्णघटितानुप्रासादिमत्तया रचिता एव तद्व्यञ्जने प्रभवन्ति तेन शब्दालङ्कारणामावश्यकत्वम् पश्चादर्थालङ्काराणामकिञ्चित्करता। तैर्विनापि शब्दालङ्कारैरभिव्यक्तेरिति तदाह बाह्यमिति। आस्वादोत्पत्तिदशायां तदनुपलम्भात्। शब्देत्यादि। अभिधेयः प्रतिपाद्यः तेन लक्ष्यव्यङ्ग्ययोरपि ग्रहणम्। नः अस्माकम् द्वयोरपि आस्वादोपकारकत्वस्य सहृदयहृदयैकवेद्यत्वात् कविसंरंभगोचरत्वाच्च।

## काव्यप्रदीपः

तथा चोक्तम्:

**'रूपकादिरलंकारस्तस्यान्यैर्बहुधोदितः ।**
**न कान्तमपि निर्भूषं विभाति वनिताननम् ॥**

**रूपकादिमलंकारं बाह्यमाचक्षते परे ।**
**सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलंकृतिम् ॥**

**तदेतदाहुः सौशब्द्यं नार्थव्युत्पत्तिरीदृशी ।**
**शब्दाभिधेयालंकारभेदादिष्टं द्वयं तु नः ॥' इति ।**

अस्यार्थः—अर्थस्यैव विभावादिरूपत्वेन रसव्यञ्जकत्वात्तन्निष्ठो रूपकादिरेवालंकारः कैश्चिदुक्तः । केचित्तु 'काव्यस्यालंकारो वाच्यः । काव्यं च कविकर्म शब्द एवेति तदाश्रिता सुप्तिङां विशिष्टोत्पत्तिलंकारः । रूपकादिस्त्वर्थाश्रितोऽलंकारो बाह्यः । अलंकारप्रयोगस्तु तत्र गौण एव' इति वाञ्छन्ति । व्युत्पत्तिरेव कथं नार्थालंकार इत्यत आह—तदेतदाहुरित्यादि । शब्दाभिधेयेति । शब्दवदर्थस्यापि कविसंरम्भज्ञाप्यत्वमर्थस्यैव शब्दस्यापि रसप्रतीत्युपयोगित्वमत उभयाश्रितोऽप्युभयरूपोऽलंकार इति ।

## आदर्शः

रूपकादिरिति । 'बहुधा' बहुविधः, रूपकाद्यलङ्कारः, 'तस्य' काव्यस्य,अन्यैरुदित इत्यर्थः । 'विभाति' विशेषेण भाति । शब्दालङ्कारमात्राभ्युपगन्तुमतमाह—रूपकादिमिति । 'बाह्यम्' अनुपादेयम् । 'सुपां' सुबन्तानाम्, 'तिङां' तिङन्तनाम् । 'व्युत्पत्तिं' विशेषेण विन्यासम् । सुपां तिङाञ्च वाचामित्यन्वयः । तद्वाञ्छने हेतुमाह—तदेतदिति । 'सौशब्द्यं' सुशब्दत्वम् । स्वमतमाह—शब्दाभिधेयेति । 'अभिधेयः' अर्थः ।

## सुधासागरः

ननु विप्रतिपत्त्यभावात् कथं प्रामाणिकादरणमित्याशङ्क्य वादिविप्रतिपत्तिमुद्भावयति—रूपकादीति । विभाति विभावतां प्राप्नोति कुण्डलादिमत्त्वेनैव विभावनीयत्वात् । विभावादित्वेन प्राप्तानामर्थानमेव रसत्वमिति तेषां परिष्करणमुचितम् । अर्थं प्रत्याय्योपक्षेणानां शब्दानामलङ्कारस्यानादरणीयत्वात् । बाह्यमर्थसन्निधिम् । सुपां तिङां तदन्तानाम् । विशष्टोत्पत्तिर्व्युत्पत्तिरनुप्रासादिना निर्माणम् । वाञ्छन्ति अत्यन्तोपादेयत्वेनाभिलषन्ति । ईदृशी यथा शब्दव्युत्पत्तिः । सौशब्दयं शब्दनिर्माणसौष्ठवम् । अयमर्थः—शब्दैरभिव्यज्यमानानामास्वादानां विभावादिभिर्थैरुपचायनम्, ते च माधुर्यादिव्यञ्जकवर्णघटितानुप्रासादिमत्तया रचिता एव तद्व्यञ्जने प्रभवन्ति, तेन शब्दालङ्काराणामावश्यकत्वम्, पाश्चात्यानामर्थालङ्काराणामकिञ्चित्करता, तैर्विनाऽपि शब्दालङ्कारैरभिव्यक्तेरिति । तदाह—बाह्यमिति । आस्वादोत्पत्तिदशायां तदनुपलम्भात् शब्देत्यादि । अभिधेयं प्रतिपाद्यं तेन लक्ष्यव्यङ्ग्ययोर्ग्रहणम् । नोऽस्माकं । द्वयोरप्यास्वादोषकारकत्वस्य सहृदयैकवेद्यत्वात् कविसंरम्भगोचरत्वाच्चेति ।

व्याख्यातञ्च प्रदीपकारैः—एवं गुणीभूतव्यङ्ग्यभेदे निर्णीते चित्रभेदं दर्शयितुमवसरः। तत्र यद्यपि शब्दचित्रार्थचित्ररूपभेदद्वयं प्रथमोल्लास एव दर्शितम्, तत्प्रभेदाश्चालङ्कारप्रभेददर्शनेनैव प्रदर्शिता भविष्यन्तीति न किञ्चिदस्ति तत्र प्रदर्शनीयम्, तथापि प्रदर्शितभेदद्वयमेव तावदनुपपन्नम्, शब्दार्थालङ्कारयोरन्योन्यनैरपेक्ष्येणानुपलम्भात्, उपलम्भेऽपि बाधभयसद्भावे तृतीयभेदप्रसङ्गादिति तदुपपादयति। शब्दार्थचित्रमित्यादि। शब्दार्थलङ्कारयोरेकैकमात्रावस्थानपुरस्कारेण न विभागः, किन्तु प्राधान्यपुरस्कारेण, तथा च न काचिदनुपपत्तिरिति भावः।

ननु तथापि विभागोऽनुपपन्न एव, यतः कैचिच्छब्दालङ्कारमात्रं केचिच्चार्थालङ्कामात्रमूरीचक्रिरे, तत्कस्य मतमाश्रित्य विभाग इति चेत्, सन्त्येव केचिदुभयाङ्गीकारिणः, तथोक्तम् रूपकादिरलङ्कारेत्यादि। अस्यार्थः—अर्थस्यैव विभावादिरूपत्वेन रसव्यञ्जकत्वात्तन्निष्ठो रूपकादिरेवालङ्कारः कैश्चिदुक्तः। केचित्तु काव्यस्यालङ्कारो वाच्यः। काव्यञ्च कविकर्म शब्द एवेति तदाश्रिता। सुप्तिङां विशिष्टोत्पत्तिरलङ्कारः। रूपकादिस्त्वर्थाश्रितोऽलङ्कारो बाह्यः। अलङ्कारप्रयोगस्तु तत्र गौण एवेति वाञ्छन्ति। व्युत्पत्तिरेव कथं नार्थालङ्कार इत्यत आह—तदेतदाहुरित्यादि। शब्दाभिधेयेति। शब्दवदर्थस्यापि कविसंरम्भज्ञाप्यत्वमर्थस्यैव शब्दस्यापि रसप्रतीत्युपयोगित्वमत उभयाश्रितोऽप्युभयरूपोऽलङ्कार इतीति।

---

**शब्दचित्रं यथा—**

**प्रथममरुणच्छायस्तावत्ततः कनकप्रभ—**
**स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः।**
**उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे**
**सरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः ॥ १३९ ॥**

---

**सङ्केतः**

प्रथममिति। अत्र क्षणदामुखे प्रदोषे प्रथमं अरुणच्छायः सन् इन्दुः उदयतिं ऊर्ध्वं गच्छति, ततः कनकप्रभः सन् इत्यादि योज्यम्। अत्र शब्दालङ्कारः छेकानुप्रासः। अरुणादेरिव छायादिः छव्यादिः यस्येति वृत्त्या अरुणच्छायः इत्यादिषु पुनः अर्थालङ्कारः उपमा।

**बालचित्तानुरञ्जनी**

शब्दचित्रमुदाहरति प्रथमेति। मृगलाञ्छनश्चन्द्रः। क्षणदामुखे रजनीप्रसरारम्भे। अत्र मकारयोस्तकाराणां ककारयोर्धकारयोः क्षकारयोः सकारच्छकारलंकाराणामनुप्रासः शब्दालङ्कारः। अत्र रसादेः अविवक्षैव। तथा चोक्तम्

**"रसभावादिविहितविवक्षाविरहे सति।**
**अलङ्कारविशेषो यः स चित्रविषयो मतः॥**

**वस्त्वादिषु विवक्षा तु स्यात्तात्पर्यवती यदा।**
**तदा नास्त्येव तत्काव्यं ध्वनेर्यत्र न गोचरः॥"** इति

**काव्यादर्शः**

प्रथममिति। अत्रानुप्रासे शशिनोऽरुणादिसाम्यसमन्वयादर्थस्यापि चित्रत्वम्।

**विवेकः**

प्रथममिति। छेदच्छविरिति। छेदक्रियावान् पदार्थश्छेदशब्देन प्रतिपाद्यते। अत्र यद्यपि 'क्रमप्रधाना स्वभावोक्ति'रित्यर्थचित्रत्वमप्यस्ति तथापि वर्णानामनपेक्षितार्थानामेव सादृश्यनिबन्धनं वैचित्र्यं सहृदयहृदयावर्जकमित्यनुप्रासालङ्कारस्य प्राधान्याच्छब्दचित्रत्वाम् सरसविसिनीकन्दच्छेदच्छविरिति तु हीनोपमानता चिन्त्यैव।

## दीपिका

प्रथममित्यादौ च चन्द्रोदयावस्थावर्णने स्वभावोक्तिर्वाक्यार्थालङ्कारः पदार्थालङ्कारश्च। कनकप्रभ इत्यादौ लुप्तोपमाः सन्ति यद्यपि, तथापि बन्धवैशिष्ट्ये नानुप्रासमहिम्ना चार्थानुसन्धिमन्तरेणापि कश्चित् प्रकर्षो हृदि निधीयत इति शब्दचित्रता।

## साहित्यचूडामणिः

प्रथममिति। ततः सरसविसिनीकन्दच्छेदच्छविरित्यन्वयः। अत्रानुप्रासः प्रधानम्, उपमोपसर्जनम्। ओजश्च गुणः।

## सम्प्रदायप्रकाशिनी

प्रथममरुणेति। अत्र तावत् ततस्तदन्वित्यादौ केवलव्यञ्जनसाम्याद् वृत्त्यनुप्रास एवार्थवैचियाद् विशिष्य भातीति शब्दचित्रम्।

## मधुमती

. प्रथममिति। अत्र अनुप्रासलक्षणे शब्दालाङ्कारे कवेः अभिनिवेशात् शब्दचित्रत्वम्। उपमालङ्कारः स्थितेऽपि अकिञ्चित्कारः।

## विस्तारिका

प्रथमेति। मृगलाञ्छनः क्षणदामुखे उदयतीति सम्बन्धः। क्रमेण तत्तद्वर्णना जातिः। विपक्षानुजीविनोऽरुणस्य वस्तुग्रहणेऽपकर्ष इत्याह—कनकच्छविरिति। अलङ्कारतया परोपकरणस्य कनकस्य च स्वतः क्षमतेत्याह—तदन्वित्यादि। कामिनीमुखस्यापि प्रतिद्वन्द्वित्वेन तद्रूपानुहरणमप्यपकर्षहेतुरित्याह—सरसेति। विसिन्याः काण्डो मृणालं च्छेद खण्डः, तस्याधिकशुक्लता। अथ च काण्डो मृणालमेव। काण्डः शरः विपक्षजयिनस्तस्य च्छविग्रहणेन ध्वान्तध्वंसक्षमता। अत एव विपक्षनिर्जयादुदयः।

अत्र 'त' काराणां 'क'कारयोः 'ध' कारयोः 'क्ष' कारयोः 'छ'कारयोश्च साम्यमित्यनुप्रासप्रकर्षाच्छब्दचित्रता। अर्थालङ्कारस्योपमाया नोद्भटतेत्यर्थः।

## सारबोधिनी

प्रथममिति। मृगलाञ्छनः क्षणदामुखे उदयतीति सम्बन्धः। क्रमेण तत्तद्वर्णना स्वभावोक्तिः। अत्र तकाराणां ककारयोर्धकारयोःक्षकारयोश्छकारयोः सकारयोश्च साम्यमित्यनुप्रासप्रकर्षाच्छब्दचित्रता। अर्थालङ्कारस्योपमाया नोद्भटतेति। भावः।

### काव्यप्रदीपः

तत्र शब्दचित्रं यथा—

**'प्रथममरुणच्छायास्तावत्ततः कनकद्युति-**
**स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलप्रभः।**
**उदयति ततो ध्वान्तध्वंसक्षमः क्षणदामुखे**
**सरसविसिनीकन्दच्छेदच्छविर्मृगलाञ्छनः॥'**

अत्रार्थालंकार उपमा गुणीभूता। शब्दालंकारस्त्वनुप्रासः प्रधानम्। आसमाप्ति कवेस्तत्रैव संरम्भात्। प्राधान्यस्य कविविवक्षामात्रनिबन्धनत्वात्।

### आदर्शः

शब्दचित्रं यथेति, प्रधानमिति शेषः। प्रथममिति, उदयतश्चन्द्रस्य क्रमशो वर्णप्राप्तिवर्णनमिदम्। 'कनकम्' ईषताम्रम्। उत्ताम्यदिति वर्त्तमाननिर्देशात् उत्ताम्युत्—(उत्तान्त्युत्)पत्तिदशालाभेन ईषत्पाण्डुत्वम्। सरसविसिनीत्यादिविशेषणविशिष्टः सन् ध्वान्तध्वंसक्षमः प्रभवतीत्यन्वयः। सरसत्यवेन अत्यन्तपाण्डुत्वम्। अत्र अनुप्रासस्य शब्दालङ्कारस्य प्राधान्यं समस्तपद्यव्यापकत्वात्, तन्वीकपोलेत्याद्युपमानां प्रादेशिकत्वात् तदपेक्षया गुणत्वम्। अर्थचित्रप्राधान्यमुदाहरति—अर्थचित्रं यथेति। पक्ष्मलदृशाम् उत्तमपक्ष्मयुक्त 'लोचनानां ते अलकाः खलाश्च दृष्टिमात्रपतिता अपि दृष्टा अपि अत्र लोके कस्य क्षोभाय न भवन्तीत्यर्थः। एकत्र कामाद् अन्यत्र भयात् क्षोभः। अलकपक्षे दृष्टिपर्यन्तपतिता अपीत्यर्थोऽपि बोध्यः, खर्वत्वात् प्रमाणे मात्रट्। नीचाः खर्वाः निकृष्टाश्च। सविलासं सशोभम्। अलीके ललाटे लग्नाः, 'अलिकमलीकञ्चेति' ललाटे द्विरूपकोषात्। पक्षे अलीके मिथ्याकथायां सविलासं सकौतुकं लग्नाः। कालतां कृष्णतां यमस्वरूपताञ्च। कुटिलतां वक्रतां कपटताञ्च। अत्र प्रकृताप्रकृतानामलकखलानां क्षोभाद्येकधर्मान्वयरूपदीपकालङ्कारः समस्तपद्यव्यापकत्वात् प्रधानम्, अलीकादिशब्दश्लेषोऽप्रधानम्।

### सुधासागरः

शब्दचित्रमुदाहरति 'प्रथममि'ति। हरिणी छन्दः। 'रसयुगहयैन्सौम्रौ स्लो गो यदा हरिणी तदा' इति लक्षणात्। मृगलाञ्छनश्चन्द्रः, क्षणदामुखे रजनीप्रारम्भे उदयति, शेषं मृगलाञ्छनविशेषणम्। क्रमेण तत्तद्वर्णता स्वभावोक्तिः।

यद्यपि किञ्चिद् व्यङ्ग्यमपि सम्भवति, तथा हि—प्रथमं तावदरुणच्छायः, अरुणस्यैव छाया रक्तदीप्तिर्यस्य तथाभूतः। ननु स्वोत्कर्षासहिष्णोरनुकारोऽनुचितइति विचार्य तदनन्तरं कनकप्रभः। ननु प्रतिस्पर्द्धिकान्तामुखमण्डनमेतदित्यस्याप्यनुकारोऽनुचित इति विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः। ननु यत्सम्बन्धात्कनकप्रभात्यक्ता

तदनुकारोऽत्यन्तानुचित इति ततोऽनन्तरं ध्वान्तध्वंसेत्यादिबोधितरूपान्तरमाश्रित इति । तथाऽप्यत्र न कवेस्तात्पर्यमित्यधमकाव्यत्वम् । एवमग्रेऽपि द्रष्टव्यम् । स्पष्टीकृतं चैतत्प्रथमोल्लासे ।

अत्र तकाराणां ककारयोर्धकारयोः क्षकारयोश्छकारयोश्च साम्यमित्यनुप्रास प्रकर्षाच्छब्दचित्रता, अर्थालङ्कारस्योपमाया नोद्भटतेति भावः । अत एव प्रदीपकारैरुक्तम्—अर्थालङ्कार उपमा गुणीभूता शब्दालङ्कारस्त्वनुप्रासः प्रधानम् । आसमाप्ति कवेस्तत्रैव संरभात्, प्राधान्यस्य कविविवक्षामात्रनिबन्धनत्वादिति ।

**अर्थचित्रं यथा—**

ते दृष्टिमात्रपतिता अपि कस्य नात्र,
क्षोभाय पक्ष्मलदृशामलकाः खलाश्च।
नीचाः सदैव सविलासमलीकलग्ना,
ये कालतां कुटिलतामिव न त्यजन्ति॥ १४० ॥

यद्यपि सर्वत्र काव्येऽन्ततः, विभावादिरूपतयैव पर्यवसानम् तथापि स्फुटस्य रसस्यानुपलम्भादव्यङ्ग्यमेतत्काव्यद्वयमुक्तम्। अत्र च शब्दार्थालङ्कारभेदाद्बहवो भेदाः ,ते चालङ्कारनिर्णये निर्णेष्यन्ते।

इति काव्यप्रकाशे शब्दार्थचित्रनिरूपणं नाम षष्ठ उल्लासः ॥ ६ ॥

---

**सङ्केतः**

ते दृष्टिमात्रेति। अत्र अलकाः इव खलाः इत्युपमालङ्कारः शब्दश्लेषप्रतिभोत्पत्तिहेतुः इति मम्मटः। "उपमादिप्रतिभोत्पत्तिहेतुरर्थश्लेष एवायम्।

**'स्वयं च पल्लवाताम्रभास्वत्करविराजिनी।**
**प्रभातसन्ध्येवास्वापफललुब्धेहितप्रदा।'**

इतिवत्।" इति तु उद्भटः। अत्र अलकेति परिवृत्त्यसहत्वेन शब्दश्लेष साधकम्। कुटिलतामिवेति समुच्चितोपमया व्याख्येयम्। कालतां कुटिलतां च न त्यजन्तीति भावः। ततश्चार्थसङ्गति। अनुपलम्भादिति। ईषदुपलम्भादित्यर्थः।अत्र चेति। शब्दार्थचित्रकाव्ययोश्चेत्यर्थः।

सङ्केतरीतिरेषैव ज्ञानश्रीभुक्तयेऽद्भुता।वर्णनाविषयीचक्रे यत्र वाणी गतध्वनिः।

**इत्याचार्यमाणिक्यचन्द्रविरचिते काव्यप्रकाशसङ्केते षष्ठ उल्लासः**

**बालचित्तानुरञ्जनी**

नमूत्तममध्यमयोः काव्ययोर्बहवो भेदाः प्रदर्शिता अधमस्य तु किमिति न प्रदर्श्यन्त इत्याशङ्क्याह अत्र चेति। अत्र शब्दार्थचित्रकाव्ययोः दोषकथनानन्तरं गुणकथनानन्तरमलङ्कारकथनमिति नियमात्। अलङ्कारनिर्णये नवमे दशमे चोल्लासे एतद्भेदा वक्ष्यन्त इति भावः। न च शब्दचित्र वाच्यचित्रमिति प्रागेव निरूप्त [पुनः] किमत्र

निरूपितमिति वाच्यम्। उक्तस्यैव गुणप्रधानभावस्यात्र निरूपितत्वात् तस्य च केवलार्थालङ्कारत्वम् उत केवलशब्दालङ्कारत्वम् उत निराकरणद्वारेणार्थालङ्कारशब्दालङ्कारवैशिष्ट्यस्य संमिलितत्वेन प्रदर्शनार्थत्वादित्युल्लाससारं सप्रयोजनं द्रष्टव्यम्।

**इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीसरस्वतीतीर्थविरचितायां काव्यप्रकाशटीकायां षष्ठोल्लासः समाप्तः ॥**

## काव्यादर्शः

ते दृष्टीति। अत्र 'अलकाः खला इव'इति शब्दश्लेषप्रतिभोत्पत्तिहेतुरुपमा। उद्भटस्तु 'उपमाप्रतिभोत्पत्तिहेतुरर्थश्लेष एवायं "स्वयं च पल्लवाताम्रा" इत्यादाविव' इत्याह तदग्रे निराकरिष्यते।

ननु, यत्र वस्त्वलंकारान्तरं वा व्यङ्ग्यं नास्ति स नाम कल्प्यतां चित्रस्य विषयः। यत्र तु न रसादिसंभवः स काव्यप्रकारो नास्त्येव, यस्माद् अवस्तुसंस्पर्शि काव्यं तादन्नोपपद्यते। वस्तु च सर्वमवश्यं कस्यचिद् रसस्य भावस्य वाङ्गत्वं प्रतिपद्यते, अन्ततो विभावत्वेन। चित्तवृत्तिविशेषा हि रसादयः। न च तदस्ति वस्तु यन्न कंचित् चित्तवृत्तिविशेषमुपजनयति, तदनुत्पादने कविविषयतैव न स्यादित्याशङ्क्याह—यद्यपीति। अत्र चेति। सौन्दर्यादिनिधानभूतशब्दार्थाश्रये व्यङ्ग्यरहिते चित्रे काव्ये।

**इति भट्टसोमेश्वरविरचिते काव्यादर्शे [काव्यप्रकाशसंकेते] षष्ठ उल्लासः ॥**

## विवेकः

ते दृष्टीति नीचत्वमधमत्वं खर्वत्वञ्च। अलीकमसत्याप्रिययोर्ललाटे च। कालता श्यामताः सपाप्मताऽपि। कुटिलतामिवेति—सहोपमा, कुडिलतया सह कालतां न त्यजन्तीत्यर्थः। श्लेषश्च शब्दालङ्कारो गुणीभूतः।

ननु चाव्यङ्ग्यं चित्रतया निरूपितं, न च काव्यं तथा सम्भवति, सर्वस्मिन्नेव काव्यप्रकारे रसादीनां सद्भावात्। तथाहि चतुर्वर्गव्युत्पत्तिबाह्यस्य, संस्पर्शः काव्ये नोपपद्यते, तस्यावस्तुत्वात्। वस्तु च सर्वमेव जगद्वर्ति ध्रुवं यस्य कस्यचिद्भावस्य वाऽङ्गता प्रतिपद्यते, यतश्चित्तवृत्तिविशेषा रसादयः। न च तदस्ति वस्तु यन्न चित्तवृत्तिमुपजनयति तदनुपादाने वाग्विषयविषयतैव तस्य न स्यात्। कविविषयश्च चित्रतया निरूप्यते। तदगोचरे चावश्यं विभावानुभाव्यभिचारिपर्यवसायितेति। अस्ति च प्रकृतोदाहरणद्वयेऽपि किञ्चिच्छृङ्गारवीररसप्रकाशनं, तत् कुतश्चित्रमेतदित्याशङ्क्याह यद्यपीति। परिहरति तथापीति। 'विवक्षा तत्परत्वेन नाङ्गित्वेन कथञ्चने'त्यादिना (ध्व. आ. २/१९) योऽलङ्कारनिवेशनसमीक्षाप्रकारो ध्वनिकारेणोक्तस्तमनुस्मरन् यदा कविः शब्दालङ्कारमर्थालङ्कारश्चोपनिबध्नाति तदा विवक्षा प्राधान्याद्रसादिसशून्यताऽपि सम्भवति यथा पाकानभिज्ञसूदविरचिते मांसपाकविशेषे। अथवा वाच्यसामर्थ्यवशेन वस्तुसौन्दर्यबलाद्रसादिप्रतीतिरवश्यं भवन्त्यपि विवक्षाविरहात् परिदुर्बला भवति, असमञ्जसदधिगुड़मरिचसंयोगनिर्मितशिखरिणीरसास्वादवत्। विवक्षोपरूढ एव च काव्यशब्दानामर्थः। तदेतदाह स्फुटस्येति। एतेन रसस्यात्रास्फुटतरत्वं विवक्षितम्, अस्फुटत्वे गुणीभूतव्यङ्ग्यस्य सम्भवात्। तदिदं सर्वथा रसादिप्रतीतिविरहस्तद्दौर्बल्यमित्युभयथाऽपि नीरसत्वे सति चित्रविषयतेति तात्पर्यम्। तदाह ध्वनिकारः (३/४२-४३. ध्व. आ. वृ:) रसभावादिविषयविवक्षाविरहे सति। अलङ्कारनिबन्धो यः स चित्रविषयो मतः। रसादिष्वविवक्षा

तु स्यात्तात्पर्यवती यदा। तदा नास्त्येव तत् काव्यं ध्वनेर्यत्र न गोचरः इति। बहव इति यमकखङ्गबन्धादय उपमाऽऽदयश्चेति।

**इति महासान्धिविग्रहिकश्रीश्रीधरविरचिते काव्यप्रकाशविवेके षष्ठ उल्लासः ॥**

## दीपिका

ते दृष्टिमात्रपतिता इति, न तु मनसा भावितस्वरूपा एव। क्षोभाय धैर्यविघाताय स्वास्थ्यविघाताय च। पक्ष्मलेति भूम्नि मत्वर्थीयो लच्। नीचाः प्रतिनियतपरिमाणतो न्यूना अनुच्चाशयाश्च। सविलासेति। सविलासं विच्छित्तिविशेषेण लालाटिकत्वेन चालीकलग्ना ललाटसंश्लिष्टाः कपटाङ्गीकृतस्वजनभावाश्च। कालतां नीलतां क्रूरदारुणताञ्च। कुटिलतां कुञ्चितत्वममृदुप्रकृतिकत्वञ्च। अत्रानुप्रासलेशसद्भावेऽपि वाच्यलङ्कृतिप्रतीतिरेवोद्भटेत्यर्थचित्रता।

नन्वस्त्वत्रोदाहरणद्वये रसादिसम्भेदाभावात् काव्यत्वम्, ततश्च तद्विशेषचित्रभेदताऽपि कथमनयोरित्याह—यद्यपीति। अन्ततः पर्यन्ते। विभावादिरूपतयेति—विभावादिभी रूप्यत इति विभावादिरूपं समूहालम्बनम्, तत्तया विशिष्टस्तदात्मा यो रस आस्वादस्तत्र पर्यवसानं तत्प्रवणत्वम्, अन्यथा आभासतानियमात्। तथापि स्फुटस्य स्वसंवित्तिसाक्षिकचमत्कारप्राणस्य रसस्यास्वादस्यानुपलम्भाव्यङ्ग्यमचमत्कारिव्यङ्ग्यमत एवभासभूतमप्येतत् पद्ययुग्मं काव्यद्वयमुक्तं प्राचीनप्रसिद्धिमात्रेणेत्यर्थः।

एतेन सर्वमेव चित्रमेवेति प्रतिपादितं भवति, न तु विभावादिरूपतया रसपर्यवसानम्, विभावादीनां मध्ये कस्यचिदवश्यं प्रतिपाद्यतया रसानुवेधः सार्वत्रिक इति।

यद्यप्यत्रापि रसोऽस्ति, तथापि स्फुटस्याक्षुद्रस्य रसस्यानुपलम्भादेतत् काव्यद्वयमव्यङ्ग्यमुक्तमिति व्याख्यानं ज्यायः विभावादिसामग्र्यैव रसनिष्पत्तेः। अत्र च सर्वोपादानस्य कतिपयाऽऽक्षेपस्य चाभावेन तदभावात्।

न चात्र विभावादेरन्यतमदप्यस्ति, संवलितेष्वेव रत्याद्यालम्बनोद्दीपनादिष्वास्वादाङ्कुरणदशायां मुख्यतस्तपदप्रवृत्ते रसस्य च क्षुद्राक्षुद्रत्वविभागः कीदृगिति न बुध्यामहे। आस्वादापकर्षप्रकर्षाविति चेत्? न, उभयत्रापि प्राधान्याप्राधान्ययोर्यथायोगं ध्वनिगुणीभूतव्यङ्ग्यत्वाभ्यां व्याप्तविषयत्वेन चित्रत्वविरहात्। एतेनास्फुटतरव्यङ्ग्यं चित्रमिति प्रत्युक्तम्। तस्यानास्वादार्हत्वम्, अन्तरेण निर्वचनीसहत्वात्, तत्र चाभासत्वनियमात्।

तदुक्तमाचार्यैः—

**"रसभावादिविषयविवक्षाविरहे सति।**
**अलङ्कारनिबन्धो यः स चित्रविषयो मतः॥" इति।**

अत्र चित्रे। अलङ्कारा निर्णीयन्ते विशेषतो लक्ष्यन्तेऽत्रेत्यलङ्कारनिर्णयोऽन्तिमोल्लासद्वयम्, तत्र निर्णेष्यन्ते। शब्दार्थगतानामनुप्रासोपादीनां हि ध्वनिगुणीभूतव्यङ्ग्यात्मककाव्याङ्गतयालङ्कारभेदत्वम्। काव्याभासचित्राङ्गतायां तु वस्तुतोऽलङ्काराभासत्वेऽपि चालङ्कारत्वमुपचर्यते। एतच्च पूर्वमेवोक्तमिति कृतं विस्तरेण।

**इति काव्यप्रकाशदीपिकायां षष्ठ उल्लासः॥**

**दर्पणः**

प्रथममित्यादि। यद्यपि क्रमप्रधानात् स्वभावोक्तरीत्यालङ्कारो दृष्टोपमाश्च सन्ति तथाप्यन्वान [?] सन्धिमन्तरेणाप्यनुप्रासमहिम्ना कश्चित्[?] प्रकर्षो हृदि निधीयत इत्यनुप्रासस्य प्राधान्यच्छब्दचित्रम्। क्षोभाय धैर्यविघाताय स्वास्थ्यविघाताय वा। नीचा नम्राः हीनसत्त्वाश्च। अलीकं सभालं अप्रियञ्च। कालतां दारुणताम् कुटिलतां कुञ्चितां अनृजुताञ्च। अत्रानुप्राससद्भावेऽपि अर्थालङ्कारस्यैव उद्भटप्रतीतिरिष्यत इति तत्प्रधानता, न तु स्वादरूपमेव वाक्यम् आस्वादश्च व्यङ्ग्य एव [?] अनयोश्च द्वयमित्यादि पक्षयोर्व्यङ्ग्यत्वात्। आस्वादरहिततया कथं काव्यमित्याह यद्यपीति। अत्र महावाक्यार्थव्युत्पत्तेर्विभावादिरूपतया एवंविधस्य समग्रैकवाक्यस्य वर्णितस्य चन्द्रादेरित्यर्थः। रसपर्यवसानं प्रवणत्वं स्फुटस्य रसस्यानुपलम्भात् महाकाव्यपर्यालोचनाहेतुकं व्यङ्ग्यरहितमेतत्। प्रथममित्यादि यद् द्वयमुक्तं प्राचीनानुरोधादिति भावः। तथाहि, यद्येवमादौ काव्येषूक्तरीत्या रसपर्यवसानमस्ति तदा आस्वादस्य प्रकर्षाप्रकर्षाभावे ध्वनिगुणीभूतयोरेव अनुप्रासवर्णास्वादा भावे तु काव्याभासतैवेत्युक्तमेव शब्दचित्रमित्यादि कारिकाव्याख्याने। विशेषमस्मत्साहित्यदर्पणेऽलङ्कारनिर्णये अन्तिमोल्लासद्वयव्यवस्थापिते निश्चेष्यन्ते।

**इति श्रीमहामात्य[पात्र?] श्रीविश्वनाथकविराजकृतौ काव्यप्रकाशदर्पणे षष्ठ उल्लासः।**

**साहित्यचूडामणिः**

त इति। नीचाः प्रलम्बाः अधमाश्च। अलीकं ललाटं, दैर्घ्येऽपि सौशब्द्यमित्याप्ताः। तत्र सविलासं लग्नाः। अपि च यदलीकमसत्यं तत्र सौजन्यनाटितकपूर्वं लग्नाः। कालत्वं कुटिलता चाकारहृदययोर्यथासङ्ख्यम्। अत्र समुच्चयस्य प्राधान्यम्, अनुप्रासस्योपसर्जनत्वं, माधुर्यं च गुणः।

ननु शब्दचित्रे चन्द्रोदयस्योद्दीपनस्य वर्णनीयतया शृङ्गारोव्यङ्ग्यः। अर्थचित्रे च कामिनीलक्षणस्यालम्बनस्येति कथमव्यङ्ग्यमिति चेत् तत्राह—यद्यपीति स्फुटस्येति। विवक्षोपारूढ एव हि काव्ये शब्दानामर्थः। यदाह—

**रसभावादिविषयविवक्षाविरहे सति।**
**अलङ्कारनिबन्धो यः स चित्रविषयो मतः॥**

**रसादिषु विवक्षा तु स्यात् तात्पर्यवती यदा।**
**तदा नास्त्येव तत् काव्यं ध्वनेर्यत्र न गोचरः॥ ध्व० ३.४२ सं०॥ इति।**

इत्थमस्य काव्यस्याधमत्वमनुसन्धेयम्, न सर्वथा। यदाह—

**रसभावाङ्गभावस्तु यमकादेर्न वार्यते।**
**ध्वन्यात्मभूते शृङ्गारे त्वङ्गता नोपपद्यते॥ ध्व. २. १३ सं०॥ इति।**

अलंकारनिर्णये नवमे दशमे चेति सिद्धम्॥ १॥

**शब्दार्थचित्रघटनापटवः कवीन्द्राः संस्थानवर्णगतिबन्धविभक्तशोभाम्।**
**अल्पोदरामनुदरामिव राजकन्यामल्पध्वनिं भणितिमध्वनिमामनन्ति ॥**

**इति साहित्यचक्रवर्तिलौहित्यभट्टगोपालविरचितायां साहित्यचूडामणौ काव्यप्रकाशविमर्शिन्यां षष्ठ उल्लासः ॥ ६ ॥**

## सम्प्रदायप्रकाशिनी

ते दृष्टीति। नीचाः अवाक्स्वभावाः तुच्छशीलाश्च। अलीकलग्नाः ललाटावलम्बिनः अनृताभिरताश्च। अत्र समुच्चयादेरर्थालङ्कारस्य प्राधान्यम्।

नन्वनयोरप्युदाहरणयोः सूक्ष्मेक्षिकया निरूपणे रसादिरूपं व्यङ्ग्यमस्त्येव। यतः कथं चित्रत्वमित्यत आह—यद्यपीति। ननु चित्रमपि ध्वनिगुणीभूतव्यङ्ग्यन्यायेन निरवशेषं किं न प्रदर्शितमित्यत आह—अत्र तु शब्दार्थेत्यादि। अलङ्काररूपधर्ममात्रप्राणकं हि चित्रं धर्मिप्रस्तावादिह दिङ्मात्रेण दर्शितम्। अलङ्कारनिर्णये तु प्राप्तावसरतया निरवशेषं निर्णेष्यते।

**इति संस्कृतसार्वभौमप्राकृतपृथ्वीश्वरशौरसेनीशिरोमणिमागधीमकरध्वज-पैशाचीपरमेश्वरापभ्रंशराजहंसालङ्कारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्यकाव्य-मीमांसाप्रभाकरकविसहृदयशिरोमणिसहजसर्वज्ञपरमयोगीश्वरश्रीमत्त्रि भुवनविद्याचक्रवर्त्तिवंशावतंसमहाकविश्रीविद्याचक्रवर्त्तिकृतौ-सम्प्रदायप्रकाशिन्यां काव्यप्रकाशबृहट्टीकायां षष्ठ उल्लासः।**

## मधुमती

ते दृष्टीति। अत्र समुच्चयलक्षणार्थालङ्कारे कवेः अभिनिवेशात् अर्थचित्रत्वम्। श्लेषालङ्कारः स्थितोऽपि अकिञ्चित्करः।

वस्तुस्तु—शब्दचित्रत्वादिव्यपदेशे व्यपदेष्टुः विवक्षैव नियामिकेति बोध्यम्।

यद्यपि—शब्दार्थचित्रयोः गुणप्रधानभावेन व्यपदेशे व्यवस्थिते नोदाहरणान्तरापेक्षा। तथापि तत्र अव्यङ्ग्यत्वपुरस्कारेण, अत्र तु चित्रत्वपुरस्कारेणेति उदाहरणभेदः इति ध्येयम्।

ननु—आद्यपद्ये उद्दीपनविभावाक्षिप्तेन, द्वितीयपद्ये आलम्बनविभावाक्षिप्तेन च व्यभिचार्यादिना शृङ्गारस्य प्रतीतेः, तदप्रतीतौ चन्द्राद्यालम्बनविषयवति भावस्य वा प्रतीतेः, अव्यङ्ग्यत्वं अनुपपन्नमित्याशङ्क्ते—यद्यपीति। रसपर्यवसानमिति। रस्यमानगुणयोगात् व्यङ्ग्यमात्र एव रसव्यपदेशः गौणः। मुख्यरसस्य सर्वत्र असत्वात् व्यङ्ग्यमात्रस्य च सत्त्वात्। अन्ततः वर्णनीयरतेरेव व्यङ्ग्यत्वस्य वक्तव्यत्वात्। समाधत्ते—तथापीति। ननु-अत्र अव्यङ्ग्यत्वस्य नामापि नास्तीति अनाशङ्कितोद्धारोऽयम्—इत्यत आह—उक्तमिति। तथाच नेदानीमेव अव्यङ्ग्य-

त्वमुक्तम्। अपि तु विशेषलक्षणावसरे 'शब्दचित्र' मित्यादिना यदव्यङ्ग्यत्वमुक्तम्। तत्रेयं शङ्का, प्राप्तावसरतया अत्र निरस्तेति भावः ॥

ननु—प्रतीतिहेतोः उभयत्र सत्त्वात् कथं विशेषः ? उच्यते—वस्तुत्वाविशेषेऽपि यथा—कन्दरादौ प्रतिरवः, कांस्यादौ अनुरणनं च स्वभावात्, तथा—शब्दार्थत्वाविशेषेऽपि कयोश्चिदेव शब्दार्थयोः व्यञ्जकत्वं च स्वभावादेवेति अनुभवसिद्धम्। तथाहि—

**"स्थिताः क्षणं पक्ष्मसु ताडिताधराः**
**पयोधरोत्सेधनिपातचूर्णिताः।**
**वलीषु तस्याः स्खलिताः प्रपेदिरे**
**चिरेण नाभिं प्रथमोदबिन्दवः ॥"**

इत्यादौ स्थित-ताडित-चूर्णित-स्खलित-प्रपत्त्यादिशब्दैः पक्ष्म-अधरस्तन-त्रिवली-नाभीनां निबिडत्व-कोमलत्व-कठिनत्व— निम्नोन्नतत्व—गहनत्वानि (नतत्वानि) यथा प्रतिपाद्यन्ते, न तथा 'पक्ष्मसम्बन्धिनः अधरं प्राप्ताः स्तनसंयुक्ताः वलीसञ्चारिणः नाभिं गताः इत्यतो वा; 'निबिडपक्ष्मराजिः, कोमलाधरा, कठिनकुचा, निम्नोन्नतत्रिवलिः, नतनाभिः' इत्यतो वा सचेतसां चमत्कारः। तत्र प्रथमे शब्दस्वभावः, द्वितीये अर्थस्वभाव एव च शरणम्। न ह्युक्ताः शब्दाः काठिन्यादिव्यञ्जकाः। न च स्वशब्देनाभिहितानि अतिशयकाठिन्यादीनि तथा चमत्कुर्वते। एवं च यत्र तादृशशब्दार्थानभिज्ञोऽभिज्ञो वा अभिज्ञाप्यं अविवक्षन् अन्यथाभूतशब्दार्थैः कवयति, तत्र—शाकसूपपाकमात्राभिज्ञसाधिते अन्यमनसा अन्यमांसपाकाभिज्ञसाधिते वा मांसाहार इव रसास्वादो न जायते। किन्तु—अलङ्कारमात्रादेव तत्र चमत्कारः। तदिदमुक्तं ध्वनिकृता—

**"रसभावादिविषयविवक्षाविरहे सति।**
**अलङ्कारनिबन्धो यः स चित्रविषयो मतः ॥**
**रसादिषु विवक्षा तु स्यात्तात्पर्यवती यदा।**
**तदा नास्त्येव तत् काव्यं ध्वनेर्यत्र न गोचरः ॥" इति ॥**

अत्र च विवक्षा सहृदयस्य, तस्यैव व्यपदेष्टत्वात्। न तु कवेः। तस्यैव च कर्तृत्वात्। तथाच काव्यमात्रे एव प्रधानध्वन्यवान्तरध्वन्यलङ्काराणां सत्त्वात् सहृदयविवक्षावशेन क्वचित् केनचित् व्यपदेशः इत्येव युक्तम्। कविविवक्षाऽपि न स्वरूपतो व्यपदेशनियामिका, किन्तु ज्ञातैव। ज्ञानं चाशक्यम्। न चाभियोगात् तत्। एकस्यापि अनेकाभियोगसंभवात्। तथाच तर्करूपं तद्वाक्यम्। तेन यदि—ध्वन्यादौ कविविवक्षायां उत्तमादित्वमिति वा तर्काः क्रियन्ते, तर्हि तदाऽपि सहृदयस्यैव ततद्व्यपदेशः इत्यनिवार्यमिति। तथाच सहृदयविवक्षायामेव तथेति पर्यवसन्नम्।

अत्र चेति। तथाच अवश्यालङ्कारप्रदर्शनेनैव तेऽपि दर्शिताः भवन्ति इत्यभिप्रायः। न च—"सम्भवितोऽप्यन्ये प्रभेदाः कविशक्तिमात्रप्रकाशकाः, न तु काव्यरूपतां आदधति इति ते न प्रदर्श्यन्ते।" इति चित्रालङ्कारस्थलीयवृत्तिविरोधः इति वाच्यम्। 'काव्यरूपतां' इत्यस्य उत्तमकाव्यरूपतामित्यर्थकत्वात्। अन्यथा तस्य'

उद्देशलक्षणपरीक्षादिप्रणयनमेव असम्बद्धं स्यात्। एवं ध्वनिकारस्यापि तत्र तत्र चित्रकाव्यत्वाभिधानं उत्तमकाव्यत्वाभावविवक्षयैव सङ्गमनीयम्। काव्यसामान्यलक्षणस्य चित्रेऽपि नैयत्येन सत्त्वात् इति ध्येयम्।

**इति श्रीरत्नपाणिसूनुरविकविविरचितायां काव्यप्रकाशटीकायां मधुमत्यां षष्ठोल्लासः समाप्तः**

## विस्तारिका

ते दृष्टीत्यादि। दृष्टिमात्रपतिताः, न तु विदितविशेषाः। कस्य विज्ञाविज्ञसाधारणस्य। स्वभावप्रच्यवः क्षोभः, नीचा अधोलग्नाः, कृत्रिमविनयप्रकृतिमापन्नाश्च। सविलासं मार्जनमुक्तादिग्रथनसंस्कृतम्। वचनमाधुर्यादिसहितञ्च। अलीके कपोले लग्नाः सम्बद्धश्च। अलीके मिथ्याभिधाने च लग्नाः सम्पन्नाः, कालता कृष्णता, परपीडकत्वेन मत्ता च। कुटिलता वक्रता, अनभिव्यक्तापचिकीर्षा च। अत्रानुप्रासंसद्भावेऽप्यर्थश्लेषस्योद्भटत्वादर्थचित्रता।

अत्र पूर्वापरश्लोकाद्वये उद्दीपनालम्बनविभावयो रसपर्यवसायित्वमिति तदुपकारकत्वमित्यलङ्कारता, किन्तु स्वस्ववैचित्र्येण प्रथमतः स्वस्मिन् चित्तानुकर्षणमिति चित्रतेति प्राक् प्रतिपादितमेव, तदाह—यद्यपीत्यादि।

विभावादीत्यादि। तेषामेव रसत्वेन पर्यवसानात्। स्फुटस्यान्यवैचित्र्यतिरोधानेन झटिति प्रतीयमानस्येत्यर्थः। सर्वमेतत् पूर्वमनुसन्धायव्याख्येयम्। एतत् काव्यद्वयम्—शब्दचित्रार्थचित्राख्यम्।

**इति श्रीपरमानन्दचक्रवर्तिकृतौ काव्यप्रकाश विस्तारिकायां चित्रकाव्यप्रदर्शनं नाम षष्ठ उल्लासः।**

## सारबोधिनी

अर्थचित्रमाह ते दृष्टीत्यादि। पक्ष्मलेति। भूम्नि लच्प्रत्ययः। क्षोभो धैर्यविघातः, अस्वच्छता च। नीचाः ह्रस्वाः पापाशयाश्च। अलीकं मिथ्यावचनम्। लग्ना संबद्धाः। कालता कृष्णता परपीडाकरत्वेन यमता च। कुटिलता वक्रता अनभिव्यक्तपरापचिकीर्षा च। अत्रानुप्राससंभवेऽपि श्लेषसंवलितोऽर्थालङ्कांरः समुच्चयः प्रधानमित्यर्थचित्रता। आसमाप्ति कवेस्तत्रैव संरम्भात्। अत्र पूर्वापरश्लोकद्वये उद्दीपनालम्बनविभावयो रसपर्यवसायित्वमिति तदुपकारकत्वेनालङ्कारता तयोः। किन्तु स्ववैचित्र्येण प्रथमतः स्वस्मिन् चित्तापकर्षणमिति चित्रतेति प्राक् प्रतिपादितमेव। तदाह यद्यपीति। विभावादीत्यादि। तेषामेव रसत्वेन पर्यवसानमित्यर्थः। स्फुटस्यान्यवैचित्र्यतिरोधानेन झटिति प्रतीयमानस्येत्यर्थः।

**इति सारबोधिन्यां षष्ठ उल्लासः।**

## काव्यप्रदीपः

अर्थचित्रं यथा—

**'ते दृष्टिमात्रपतिता अपि कस्य नात्र**
**क्षोभाय पक्ष्मलदृशामलकाः खलाश्च।**
**नीचाः सदैव सविलासमलीकलग्ना**
**ये कालतां कुटिलतामिव न त्यजन्ति॥'**

अत्र शब्दालंकारोऽनुप्रासः स गुणीभूतः। अर्थालंकारस्तु समुच्चयः प्रधानम्। आरम्भादा समाप्ति तन्निर्वाहणात्। यथा चात्र किंचिद्व्यङ्ग्यसत्त्वेऽप्यधमकाव्यत्वं तथोक्तं प्रथमोल्लास एव। एषां भेदाश्चालंकार-भेदाद्भवन्तीत्यलंकारनिर्णयेनैव ते निर्णेष्यन्त इति।

**इति महामहोपाध्यायश्रीगोविन्दकृते काव्यप्रदीपे चित्रकाव्यनिर्णयो नाम षष्ठ उल्लासः॥**

## आदर्शः

ननु शब्दचित्रं वाच्यचित्रमव्यङ्ग्यमिति प्रागुक्तम्, अत्र च व्यङ्ग्यमस्तीत्यतः कथं चित्रमित्याशङ्कमाना आह—यद्यपीति। विभावादिरूपतयेति वर्णितार्थस्य चन्द्रादेरन्ततो विभावादिरूपतया ततो रसपर्यवसानमित्यर्थः। 'अव्यङ्ग्यं' स्फुटव्यङ्ग्यरहितम्।

**इति श्रीमहेश्वरन्यायालङ्कारभट्टाचार्यकृते काव्यप्रकाशादर्शे चित्रनिरूपणस्य षष्ठः प्रतिबिम्बः।**

## सुधासागरः

अर्थचित्रमुदाहरति। अर्थचित्रं यथेति, 'ते दृष्टी'—ति च।

अयमर्थः—ते सकलवशीकरणसमर्थाः, दृष्टिमात्रपतिता दृग्गोचरतां गता अपि, पक्ष्मलदृशां घनपक्ष्माक्षीणां सुन्दरीणाम्, पक्ष्मलेति भूम्नि लच् प्रत्ययः, अलकाश्चूर्णकुन्तलाः, खलाः शठाश्च, अत्र संसारे कस्य पुरुषस्य, क्षोभाय धैर्यविघाताय मालिन्योत्पादनाय च न भवन्ति, अपि तु सर्वस्यापि क्षोभं जनयन्ति। कथम्भूताः नीचाः लम्बायमानाः पापाश्रयाश्च, सदैव सविलासं यथा स्यात्तथा, अलीके ललाटे लग्नाः संरूढाः मिथ्यावचनोद्युक्ताश्च येऽलकाः खलाश्च कालतां कृष्णवर्णतां परपीडाकारकत्वेन यमताञ्च, कुटिलतां वक्रताम् अनभिव्यक्तपरापचिकीर्षाञ्चपि, अपिशब्दः समुच्चये, न त्यजन्ति न मुञ्चन्तीति। अत्र शब्दालङ्कारोऽनुप्रासः गुणीभूतः, श्लेषप्रतिभाहेतुः समुच्चयोऽर्थालङ्कारस्तु प्रधानम्। आरम्भादासमाप्ति तन्निर्वाहणात्।

यद्यपीत्यादि। अयं भावः पूर्वापरश्लोकद्वये उद्दीपनालम्बनविभावयो रसपर्यवसायित्वमिति तदुपकारकत्वेनालङ्कारता तयोः, तथापि रसस्य स्फुटत्वेनानुपलम्भाद्व्यङ्ग्यमेवैतद् द्वयमिति। एषां भेदाश्चालङ्कारभेदाद् भवन्तीस्यलङ्कारनिर्णयेनैव ते निर्णेष्यन्ते। तदाह—अत्र चेत्यादि।

**इति श्रीमत्पदवाक्यप्रमाणपारावारीणदीक्षितभीमसेनकृते काव्यप्रकाशविवरणे सुधासागरे चित्रभेदप्रतिपादकाः षष्ठ उल्लासः॥ ६॥**

---